समाप्तग्रन्थाङ्काः–३२

॥ श्रीमोहन–हर्ष–देव–पद्म–कनक–भक्तिग्रन्थमाला=तृतीयपुष्पम् ॥ ॐ

श्रीमत्तपागच्छालङ्कार–भट्टारकघटाकोटीरश्रीसोमजयसूरीश्वर–शिष्यशिरोमणि–भट्टारकाचार्यप्रवरश्रीइन्द्रनन्दि-
सूरिराज–विनेयाणु निजनामानुरूपग्रन्थनिरूपणानिरुपमनैपुण्यमुद्रित–साधुसत्तम–
सिद्धान्तसाराभिधानमुनिप्रवरसङ्कलित

# ॥ श्रीदर्शन-रत्न-रत्नाकरः ॥

## ( द्वितीयो विभागः )

स चायं राजनगर( अहम्मदावाद )स्थ श्रीजैनसाहित्यवर्धकसभया प्रकाशितः ।

सम्पादितश्च—पं. श्रीनिपुणमुनि–मुनिश्रीभक्तिमुनिनामख्यातमुनिवराभ्याम्

***

श्रीवीरनिर्वाणसंवत्=२४८१ विक्रमसंवत्=२०११

२३११ ⑤

## ॥ प्रकाशकीयम् ॥

दर्शनरत्नरत्नाकरस्याय द्वितीयो विभागः प्रकटीक्रियते । ग्रन्थेऽस्मिन् आगमविषयप्राचुर्यं जिज्ञासूनां मनः प्रीणयिष्यतीति ग्रन्थदर्शनत एव ज्ञास्यन्ति तज्ज्ञाः ।

विषयकाठिन्यं ग्रन्थकर्त्रा यथाऽशक्यं तदपि न तिरोहितं ग्रन्थे। एतादृशग्रन्थरत्नस्य प्रकाशनमस्माभिर्विहितं तदेवास्माकं महोत्साहस्य निमित्तं तथा तत्पठनकर्तॄणामपि स्यादित्याशास्यते ॥

—इति निवेदकः-प्रकाशकः ।



# श्रीदर्शनरत्नरत्नाकरग्रन्थना ग्राहक थएलाओनी शुभ नामावली



## मुंबई

नकल

४० शेठ मोतीशा लालबाग जैन चेरीटीझ, लालबाग
ह. शेठ जीवतलाल परतापसी वगेरे कार्यवाहको

२० श्रीकोट–तपागच्छमूर्तिपूजक श्वेतांबर जैनसंघनी पेढी,
ह. कार्यवाहको, कोट.

२० श्रीगोडीजी–श्रीदेवसूरसंघनी पेढी, पायधुनी
ह. श्रीदेवसूरसघना कार्यवाहको

१० शेठ शांतिलाल खेतसी चेरीटी फंड तरफथी
ह. शेठ जीवतलाल प्रतापशी

५ शेठ कांतिलाल न्यालचंद पाटणवाला,
१४ न्यूक्वी रोड, कांतिलाल हाउस

नकल

५ शेठ चतरभाण चमनाजी, चीचबंदर

४ श्रीमलाड जैनमूर्तिपूजक संघ, मलाड

४ शेठ पूंजाभाइ ठाकरशी, ११६ न्यु चीचबंदर

४ पारीख भुरालाल करशनदास झवेरी,
सर्वोदयनगर पांजरापोल गली

४ शेठ रमणलाल दलसुखभाई खंभातवाला, लुहारचाल

२ श्री तपागच्छ जैन संघ–शांताक्रुज, एन्ड्रुज रोड

२ शेठ घेलाभाइ करमचंद जैन सेनेटरीयम, वीलापारला

२ शा. सेसमलजी सरदारमलजी, कोसीलाव

नकल

२ शा वोरीदासजी सेसमलजी, कोलाबा

२ शा भीखमचद पुरमचद, पारसीगली

२ शा प्रेमचद मीश्रीमलजी, गुलालवाडी ३ जो भोइवाडो

२ शा मानमल चेनमलजी, गुलालवाडी

२ शा उमेदमल मेघाजी, ठाकोरद्वार

२ शा हरीदास शोभागमल, ७६ जुनी हनुमानगली

२ जे के एन्ड सन्स, हनुमानगली

२ शा बालाजी मोतीजी, वादनवाडी

२ भडारी देवीचद मीश्रीमल लेदावाला, बेंगलोर

२ शा माणेकचद झवेरचद, कायथमहोला, सुरत

२ शा अंबालाल हेमचद खभातवाला, लुहारचाल

२ शा चीमनलाल उमाजी, गणेशवाडी

१ शा पनाजी देवीजी, वादनवाडी, भोर

नकल

१ शा खगारमल कपूरचद, वादनवाडी, रत्नागिरी

१ शा मबुतमल आइदानमल, कादावाडी

१ शा मघनलाल उमाजी, मालवाडा

१ शा कातिलाल वरधीलाल राधनपुरवाला गुलालवाडी

१ शा कपूरचद तेजमालजी, गुलालवाडी

१ शा, उमेदलाल सागरमल, ,,

१ शा हीराचद सरदारमलजी, ,,

१ शा माणेकचद धुलाजी, ,,

१ शा माणेकलाल हरखचद, ,,

१ शा फुटरमल मुलचद ,,

१ शा जुगराज पारसमल ,,

१ शा जुहारमल पारसमल ,,

१ शा चुनिलाल मोहनलाल ,,

| नकल | |
|---|---|
| १ | शा. भभुतमल हजारीमल गुलालवाडी |
| १ | शा. चुनिलाल कांतिलाल ,, |
| १ | शा. जसराज केरींगजी ,, |
| १ | शा. रतिलाल उत्तमचंद मेता ,, |
| १ | व्हेन कलावती–मंगलदास खेमचंद वखारीया गुलालवाडी |
| १ | शा. खेताजी धनाजी, ठाकोरद्वार |
| १ | शा. ओटरमल हस्तिमल ,, |
| १ | शा. ए. एम. अमरचंद ,, |
| १ | शा. केशवजी कानजी ,, |
| १ | शा. हीमतमल जसराजजी ,, |
| १ | शा. हस्तिमल जीताजी ,, |
| १ | शा. भावचंद केशरीमल, कुंभारवाडा |
| १ | शा. बाबुभाइ अमृतलाल, धनजीस्ट्रीट |

| नकल | |
|---|---|
| १ | शा. मानमल देवीचंदजी, कालबादेवी |
| १ | शा. जुहारमल मोतिलाल, कालबादेवी |
| १ | शा. रावतमल देवीचंदजी, प्रीन्सेसस्ट्रीट |
| १ | शा. फुहाजी भीखाजी, प्रीन्सेसस्ट्रीट |
| १ | शा. चमनाजी तीलोकचंद हनुमानगली |
| १ | शा. सरदारमल गमनाजी छतरीवाला, हनुमानगली |
| १ | शा. नीहालचंद दलीचंद छतरीवाला, हनुमानगली |
| १ | शा. चीमनाजी पनाजी, बालीवाला |
| १ | शा. मयाचंद चुनिलाल, झवेरीबजार |
| १ | शा. मणीयार शिवलाल, सेन्डहर्स्ट रोड |
| १ | शा. धनराज माणेकचंदजी, कोलाबा |
| १ | शा. चुनिलालजी हजारीमलजी, कोलाबा |
| १ | शा. प्रेमचंदजी लखमाजी, जामली महोला |

नकल
१ शा वरितमल उमेदमल वगडीवाला, जामली महोला
१ शा सुखरान ओटरमल, जामली महोला
१ शा घनरुपजी देवाजी, दागीना बजार
१ श्री पार्श्वनाथ जेन लायब्रेरी, चाबोरी
१ शा वनाजी धुलाजी, नवी हनुमानगली
१ शा मनसुखलाल ओघडदास, मोतीशाहनी चाल
१ शा माधाजी मेघाजी जे जे होस्पीताल
१ व्हेन पारवती मुलचद मालाना धर्मपत्नी
ह नानचद मूलचद, मलाड गोतमनिवास
१ शा देवचद जेठालाल मलाड देवचदचाल
१ शा वाडीलाल जेठालाल, पाजरापोल सर्वोदयनगर
१ शा मुलचद भाणाजी साचोरवाला, कामाठीपुरा
१ शा चकाजी चेनाजी, कामाठीपुरा

नकल
१ शा केशरीमल शोभाजी, कामाठीपुरा
१ शा मछालाल अमरचद घानेरावाला, सी पी टेन्क
१ शा भीमराज चेचरदास घानेरावाला,
गोलवाड ओसवाल भुवन
१ उमेदमल राजाजी, मोरारजी गोकलदास मारकेट
१ शा छगनलाल छोगमल, गुलालवाडी ३जा भोइवाडा
१ शा मगनीमल दलीचदजी, चीरा बजार
१ शा वसनजीभाइ लधा, भात बजार
१ शा कल्याणजी पासु वारदानवाला, भात बजार
१ शा हसराज लालजी, भातबजार
१ शा वेरसी लधाभाइ नलीयावाला, भात बजार
१ शा शीवजी भावजी गजीवाला ,,
१ शा वेलजी उमरशी सुथरीवाला ,,

नकल

१ शा. वसनजी वजपार, ह. लखमसी माणेक, भात बजार
१ शा. दामजी देवराज, भात बजार
१ शा. वेलजी नेणसी ,,
१ शा. तेजपार टोकरशी ,,
१ धनबाइ देवराज जखौवाला ,,
१ नेणबाइ टोकरशी ,,
१ अ. सौ. मणीबाइ धनजी शामजी, नवो चीचबंदर
१ शा. हंसराज वेरसी ह. गोमबाइ, जुनो चीचबंदर
१ शा. रायचंद जेठा, जुनो चीचबंदर
१ शा. पोपटलाल शीवजी मांडवीवाला, जुनो चीचबंदर
१ शा. नागशी जीवराज, चीचबंदर
१ शा. हंसराज खीमराज, नल बजार
१ शा. रतनशी पाशु, दाणा बंदर

नकल

१ शा. धरमशी शुरा, शीवरी
१ शा. खीमचंद कल्याणचंद जरीवाला, सुरत
१ शा. बाबुभाइ वीरचंद झवेरी ,,
१ शा. चीमनलाल छगनलाल कराणी ,,
१ शा. हीमतलाल चतुरभाइ ,,
१ शा. नानाभाइ भाइचंद लाकडावाला ,,
१ शा. दीपचंद सुरचंदभाइ ,,
१ शा. चीमनलाल मोतिचंद ,,
१ शा. अमीचंद नवलचंद घीया ,,
१ शा. ठाकोरभाइ मुलचंद ,,
१ शा. ठाकोरभाइ दयाचंद मलजी ,,
१ शा. हेमचंद अमीचंदभाइ ,,
१ शेठ नेमुभाइ वाडीना उपाश्रय, ह. मंगलभाइ, सुरत

१ श्री हुकममुनिजी जैन ज्ञानमंदिर, सुरत
१ श्री प्रीतिसूरिजी ज्ञानशाला, रांदेर
१ शा गंभीरदास ओधवदास, सायाकांटा सुतर बजार
१ शा बालचंद धनराज, अंधेरी

नकल
१ शेठ मोहनलाल हेमचंद, वीलापारला
१ शेठ भोगीलाल चुनिलाल, वीलापारला
१ शा छगनलाल धनजी, सगरामपरा, सुरत

---

# ॥ श्री जैनसाहित्यवर्धकसभया प्रकाशिता ग्रन्थाः ॥

| | | | | | |
|---|---|---|---|---|---|
| १ | परमात्मसङ्गीतरसस्रोतस्विनी | ०–८–० | १३ | आत्मवादः | ०-१०-० |
| २ | सप्तसन्धानमहाकाव्यम् ( सरणिसमलङ्कृतम् ) | ४–०–० | १४ | विचारसौरभः | ०–४–० |
| ३ | साहित्यशिक्षामञ्जरी | २–०–० | १५ | श्रीतत्त्वार्थस्वाध्यायः | ०–४–० |
| ४ | वैराग्यशतकम् ( विवेचनान्वितम् ) | १–४–० | १६ | सिरिजम्बूसामीचरितं | १–४–० |
| ५ | श्रीतत्त्वार्थाधिगमसूत्रम्(अनुवाद–विवेचनयुतम्) | ३–०–० | १७ | सुपात्रदानको महिमा | ०–८–० |
| ६ | श्रीआदिजिनपञ्चकल्याणकपूजा | ०–४–० | १८ | श्रीसिद्धचक्र नवपद आराधनविधिः (सचित्रः) | ३–०–० |
| ७ | श्रीगिरिनारजी तीर्थनो परिचय | ०–४–० | १९ | श्रीसिद्धचक्रस्वरूपदर्शनम् | ०–८–० |
| ८ | सङ्गीतस्रोतस्विनी | ०–६–० | २० | श्रीअर्हत्प्रार्थना | ०–४–० |
| ९ | इन्दुदूतम् ( खण्डकाव्यम्, टीकोपेतम् ) | २–०–० | २१ | स्वाध्यायरत्नावलिः ( प्रथम खण्डः ) | १–४–० |
| १० | निह्नववादः | ३–०–० | २२ | श्रीवज्रस्वामी आख्यानम् | ०–६–० |
| ११ | शिवभूतिः | ०–३–० | २३ | श्रीचन्द्रप्रभपंचकल्याणक पूजा | ०–४–० |
| १२ | नयवादः | ०–४–० | २४ | पुण्यप्रकाशस्तवनादि ( सार्थ ) | ०–६–० |

| | | | | |
|---|---|---|---|---|
| २५ | श्रीमोहनविनयजीकृत चोवीशी ( सार्थ ) | १–४–० | २९ स्नात्रपूजादि ( सार्थ ) | ०–६–० |
| २६ | सत्कारनु वावेतर | ०–४–० | ३० अष्टापदजीनी पूजा ( सार्थ ) | |
| २७ | स्वाध्यायरत्नावली ( द्वितीय खण्ड ) | १–४–० | ३१ नव्वाणु अभिषेकनी पूजा ( सार्थ ) | |
| २८ | दर्शनरत्नरत्नाकर ( प्रथमो–विभाग ) | ८–०–० | ३२ दर्शनरत्नरत्नाकर ( द्वितीयो विभाग ) | ८–०–० |



## ॥ प्रकाश्यमाना ग्रन्था ॥

१ सिद्धहेमचन्द्रशब्दानुशासनम् ( श्लोकवार्तिकाख्य पद्यवृत्तिविभूषितम् )

२ कल्पलतावतारिका ( शास्त्रवार्तासमुच्चय–कल्पलता–वृत्तिः )



## ॥ प्रकाशयितुं निर्धारिता ग्रन्था: ॥

१ श्रीसिद्धसेनद्वात्रिंशिका–वृत्तिः
२ श्रीरामचन्द्रद्वात्रिंशिकावृत्तिः
३ मेघदूतसमस्यालेखवृत्तिः
४ सम्बोधप्रकरणविवृत्तिः
५ श्रीसिद्धहेमलक्षणार्थचन्द्रिका
६ श्रीसिद्धहेमचन्द्रशब्दानुशासनम् (पद्यवृत्तिः द्वितीयो भागः)
७ द्रव्यगुणपर्यायरास–सारः
८ पञ्चविंशतिकुसुमाञ्जलि–काव्य टीका
९ सुजसवेलि–भास ( टूंक विवेचन युक्त )
१० देवानन्दाभ्युदयकाव्यम् ( माघपूर्तिः–टीकासहितम् )
११ श्रीवीरजन्मज्योतिः
१२ सन्धिविनोदपञ्चदशी ( सटीका )
१३ काव्यानुशासनम् ( लघुवृत्तिविलसितम् )
१४ पञ्चलक्षणी–गूढार्थरहस्यम्
१५ स्वाध्यायभाष्यम् ( सवृत्ति )
१६ लग्नशुद्धि–टीका
१७ मुद्रितकुमुदचन्द्रनाटकम् ( सटीकम् )
१८ स्तुतिचतुर्विंशतिका ( सटीका )
१९ सूक्तिसुधास्रोतस्वती
२० हितशिक्षाछत्रीशी ( विवेचनयुक्त )
२१ हितचिन्तन
२२ छन्दोऽनुशासनम् ( सटीकम् )
२३ समुद्रवहाणसंवाद ( भावार्थसहित )
२४ श्रीशान्तिनाथमहाकाव्यम् ( नैषधपूर्तिरूपम्, सटीकम् )

ॐ ह्रीँ श्रीँ अर्हं नमः ॥

सकललब्धिनिधानाय श्रीगौतमस्वामिने नम ॥

श्रीमदर्हत्प्रवचन विजयतेतराम् ॥

आचार्यप्रवर–श्रीइन्द्रनन्दिसूरिवर्यविनेयाणु–सिद्धान्तसारसङ्कलितः

# दर्शनरत्नरत्नाकरः ॥ ( द्वितीयो विभागः )



## अथ तृतीया लहरी–प्रथमस्तरङ्ग ॥

वित्तेष्टमथनमकन्महीरुहाभान्, पचेषुप्रदरनिवारणप्रवीणान् ।
मुक्तिश्रीवरपरमेष्ठिन प्रमोदात्, पचागप्रणिपुरस्सर प्रणौमि ॥ १ ॥

अथ श्रीमारुदेवस्य देवस्यदेवस्य पूर्वस्या लहर्यां कुलकरकुलोत्पत्तिप्रभृतिपचमाववोधप्राप्तिसमवसृतिनिर्गतांतस्य वर्णनस्य विहितत्वादेतस्या तृतीयलहर्यां तस्यैव निखिलजनप्रशस्यनिरपदेशसुकृतोपदेशस्वरूप प्ररूप्यते दिग्मानतस्तथाहि । एव यथास्थानस्थितासु सुरासुरनृसभासु भगवान् श्रीमान् मारुदेवः सर्वजगज्जतुजातहितैकतानमतिस्त्रैलोक्यपतिः सजल

जलधरध्वनितानुकारिमधुरतरस्वरेणोपचक्रमे समाख्यातुमपवर्गमार्गम् । तथाहि—

"भो जनाः ! सनातनसुखसंप्राप्तये यतध्वं सम्यग्ज्ञानदर्शनचरिततपःस्वरूपापुनर्भवपुरायने । तत्र ज्ञानं पंचविधमाभिनिबोधिकं श्रुतमवधिर्मनःपर्यवः केवलं च । तेष्वऽर्थाभिमुखो नियतो बोधोऽभिनिबोधः स एवाभिनिबोधिकं, यथा विनय एव वैनयिकं, तच्च तज्ज्ञानं चाभिनिबोधिकज्ञानम् । श्रूयत इति श्रुतं, शब्द एव भावश्रुतहेतुत्वादिति भावः । अनयोश्च स्वाम्यादिभिः साम्यं, तथाहि-य एव मतेः स्वामी स एव श्रुतस्य, तथा स्थितिरपि तुल्यैवानयोः, प्रवाहतोऽतीतादिः सर्व एव समयोऽप्रतिपतितैकजीवापेक्षया च साधिकषट्षष्ट्यतरोपमानि, तथा उभे अपि क्षायोपशमिके, आदेशतः सर्वद्रव्यादिविषये, प्रत्यक्षपरोक्षे च । तथा अवधीयते एकाग्रभूयतेऽस्मिन्नित्यवधिरेकाग्रता, रूपिद्रव्यमर्यादा वा ताभ्यां ज्ञानमवधिज्ञानम् । अस्यापि प्रागुक्तसंवेदनद्वैतेन छद्मस्थस्वामित्व-तुल्यस्थितित्व-विपर्ययभवनादिभिः समानत्वमवसेयम् । तथा अवनमवः परिः सर्वतोऽवः पर्यवः मनसि मनसो वा पर्यवो मनःपर्यवः सर्वतस्तत्परिच्छेदः स एव ज्ञानमेतच्च मनुष्यक्षेत्रांतर्वर्तिसंज्ञिचेतोगतद्रव्यालंबनेन वाऽवसेयम् । अस्याप्यवधिसंवेदनेन समं समत्वं छद्मस्थस्वामित्व-पुद्गलमात्रालंबनत्वक्षायोपशमिकप्रत्यक्षत्वत्वैः । केवलमसहायम् । एतेषां पंचसंवेदनानां मध्ये प्रथमं मतिज्ञानस्य भेदाः प्रादुर्भाव्यंते । तथाहि-मतिज्ञानमष्टाविंशतिभेदं समासतो व्यासतस्तु त्रिशतीसमधिकषट्त्रिंशद्भेदम् । तेषु प्रथममष्टाविंशतिभेदा विभाव्यंते । तथाहि-प्रथमं दर्शनसमनंतरितोऽवग्रहः । ननु वस्तुनः सामान्यविशेषात्मकतयाऽविशिष्टत्वात्कथं प्रथमं दर्शनं न ज्ञानमिति ? उच्यते ज्ञानस्य प्रबलाऽऽवरणत्वाद्दर्शनस्य चाल्पाऽऽवरणत्वात् । स पुनर्द्वेधा व्यंजनावग्रहोऽर्थाव-

तृतीय-लहर्यां प्रथम-स्तरङ्गः ।

श्रीमदादिजिनाद्यदेशना, तत्र ज्ञानपञ्चकम् । तत्र च मतिज्ञानम् ।

ग्रहश्च । तत्र व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्चोपकरणेंद्रियस्य शब्दादिपरिणतद्रव्याणां च यः परस्परं सम्बन्धः । सम्बन्धे हि सति सोऽर्थः श्रोत्रादींद्रियेण ग्रहीतुं शक्यते नान्यथा, ततो व्यञ्जनेन सम्बन्धेनावग्रहणं सम्बध्यमानस्यार्थस्य शब्दादिरूपस्याऽव्यक्तरूपः परिच्छेदो व्यञ्जनावग्रहः, स चांतर्मुहूर्त्तमानः । ननु व्यञ्जनावग्रहवेलायां न किमपि संवेदयामहे तत्कथमसौ ज्ञानरूपः ? उच्यतेऽव्यक्तत्वान्न संवेद्यते । तदस्तित्वे च मानमनुमानम् । तथाहि–प्रथमसमयेऽपि शब्दादिपरिणतद्रव्याणामुपकरणेन्द्रियस्य चान्योन्यसंपृक्ता काचिदपि चेद् ज्ञानमात्रा न भवेत्ततो द्वितीयेऽपि समये न स्याद्विशेषाभावात्, एवं यावच्चरमसमयेऽपि । अथ च चरमसमयेऽसंख्यतमेऽर्थावग्रहरूपं ज्ञानं जायमानमुपलभ्यते ततः प्रागपि काऽपि कियती ज्ञानमात्रा प्रतिपत्तव्या ततः स्थितमेतत् व्यञ्जनावग्रहो ज्ञानरूपः । परं तज्ज्ञानमव्यक्तं विज्ञेयं यत्तु नंदिसूत्रे 'नेगसमयपविट्ठा पुग्गला गहणमागच्छंति, जाव नो संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, किंतु असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति' इत्यादि प्रतिपादितं तदव्यक्तमर्थावग्रहरूपं विज्ञानमपेक्ष्य प्रतिपादितं संभाव्यते । अयं भावः असंख्यातसमयप्रविष्टा एव पुद्गला अर्थावग्रहरूपं विज्ञानं जनयंतीति । केचित्त्वेवमाचक्षते–अर्थावबोधात्मा द्रव्यप्रवेशादिरूप एव व्यञ्जनावग्रहोऽन्तर्मुहूर्त्तं स्यान्मनसोऽव्यापारात् । इह च चरमसमयप्रविष्टा एव पुद्गलाः साक्षादर्थावग्रहरूपविज्ञानजनकाः । अन्येऽस्त्विंद्रियक्षयोपशमहेतवः ज्ञानं त्वर्थस्यावबोधकारणमात्रत्वेन कारणे कार्योपचारात् । अयं च व्यञ्जनावग्रहो मनोनयनवर्जेंद्रियचतुष्केण चतूरूपो विज्ञेयः ।

अथाऽर्थावग्रहस्वरूपं प्ररूप प्ररूप्यते । अर्थावग्रहो द्वेधा । नैश्चयिको व्यावहारिकश्च । तत्र नामस्वरूपजातिगुणक्रियाद्रव्यादि-

शब्दैर्निर्देष्टुमशक्यस्यावक्तव्यस्य सामान्यमात्ररूपस्य वस्तुनो ग्राहक एकसमयमात्रमानो निरुपचरितः प्रथमो नैश्चयिकोऽर्थावग्रहः । सामयिकं ज्ञानं निश्चयज्ञा योगिन एव जानंतीति नैश्चयिकोऽयमुच्यते । अनेन च रूपादिभ्यो व्यावृत्तमव्यक्तं शब्दादि वस्तु सामान्यं गृह्यते । ततः किमिदं वस्तु मया गृहीतं शब्दोऽशब्दो वेति संशयोत्तरकालमन्वयव्यतिरेकधर्मग्रहणनिरासद्वारेण ततः सद्भूतार्थविशेषोपादानाभिमुखासद्भूतार्थपरित्यागाभिमुखाः प्रायः श्रावणत्वादयः शब्दधर्मा अत्र दृश्यंते न तु रूपादिधर्मा इत्येवंरूपा नैश्चयिकी इहा जायते । ततः शब्द एवायमित्यादिनैश्चयिकोऽवायः । तदनु शब्दोऽयं शांखः शार्ङ्गो वेति संशयानंतरं प्रायोऽत्र माधुर्यादयः शंखधर्मा दृश्यंते न निष्ठुरतादयः शार्ङ्गधर्मा इत्याद्याकारा सद्भूतार्थाऽभिमुखा व्यावहारिकी ईहा । ततः शांख एवायं न तु शार्ङ्ग इति व्यावहारिकोऽवायः । नैश्चयिकश्चावायो व्यावहारिकेहावायापेक्षयोपचारेण व्यावहारिकोऽर्थावग्रहोऽपि भण्यते । तथाहि–यस्मादनु ईहावायौ स्यातां यश्च सामान्यं गृह्णाति सोऽर्थावग्रहो यथाद्यो नैश्चयिकः । स्यातां वा शब्द एवायमिति नैश्चयिकावायानंतरमीहावायौ । गृह्णाति चायं सामान्यं शंखोऽयमिति भाविविशेषापेक्षया तस्मादर्थावग्रहोऽयं व्यावहारिकः । एवं च तत्त्वतो नैश्चयिकार्थावग्रहादनु अंत्यं विशेषं यावत् पुनरीहा पुनरवाय इत्येव भवति । परं सर्वत्र पाश्चात्योऽवायोऽपि भाविविशेषापेक्षया सामान्यालंबनत्वेन भावीहावायापेक्षया चाऽर्थावग्रह इत्युपचर्यते । उपचारनिमित्तं च सामान्यग्रहणभावीहावायौ च । एवं च तावद् ज्ञेयं यावद् वस्तुनोऽंत्यो विशेषः । यत्र च प्रमातुर्जिज्ञासा निवर्त्तेत स एवांत्यो विशेषः । तं यावच्च सामान्यविशेषापेक्षयाऽर्थावग्रहेहावायाः स्युः । तथा च सूत्रं ‘ सामन्नमित्तगहणं ’ इत्यादि तदनु धारणा प्रादुर्भवीति सा च त्रिधा–अविच्युति-वासना-

स्मृतिभेदाच्चत्रावायेन निश्चितेऽर्थे तत्समयादूर्ध्वमपि शब्द एवाय शब्द एवायमित्यविच्युत्यांतर्मुहूर्तं यावद् काप्यऽवाय-प्रवृत्तिः सा प्रथमप्रवृत्तावायाधिकत्वेनाविच्युतिर्धारणा १, ततस्तयाऽऽहितो यः संस्कारस्तद्रूपा क्षयोपशमापरपर्याया वासना नाम द्वितीया धारणा या स्मृतेर्बीजभूता २, ततः कालांतरे वासनावशात्तदर्थस्येंद्रियैरुपलब्धस्यानुपलब्धस्य वा या मनसि स्मृतिः सा तृतीया ३। एताश्च त्रिस्रोऽप्यवायनिश्चितस्यार्थस्य धरणलक्षणसामान्यान्वर्थयोराश्रयणा द्धारणा शब्दवाच्याः। ननु नैश्चयिकोऽर्थावग्रहोऽनध्यवसाय एव इति कथं तस्य ज्ञानता ? उच्यते योग्यतया तद्भावा दन्यथा तत्कार्येऽपायेऽपि न स्यात्। सुप्तमूर्च्छितादीनामेव हि ज्ञानमनध्यवसायः। यद्वाऽनध्यवसायादयो ज्ञानमेव सम्यग्दृष्टिसंशयादीनां ज्ञानत्वात्। ननु यदि संशयादयोऽपि मतिज्ञानं तर्हि मतेः सप्तविधत्वप्रसंगः ? न, यतोऽनध्यव सायस्तावत्सामान्यग्राहित्वेनाऽवग्रहेऽन्तर्भवति संशयोऽपीहाप्रकारत्वात्तत्कारणत्वाच्च तस्यामेव। यत्तु तस्येहात्वं निराक्रियते तदपि व्यवहारिजनानुवृत्त्या, न तु सर्वथा। विपर्ययस्तु साक्षादवाय एव निश्चयरूपत्वादिति कुतो मतेः श्रुति(४)मित भेदातिक्रमः संभवेत् तदेवं पञ्चस्विन्द्रियेषु षष्ठे च मनसि प्रत्येकमऽर्थावग्रहादिचतुष्टयभावात् षट् चतुर्गुणिता भवति चतु र्विंशतिमिता मतिज्ञानस्य भेदास्ते च व्यञ्जनावग्रहचतुष्कसमन्विता वसुविंशति(२८)मिताः समासतो भवति मतिसंवे-दनस्य भेदाः। व्यासतस्तु ऋतुसमयममधिका भवति त्रिशती (३३६) भेदानां मतिज्ञानस्य; तथाहि—यथा श्रवणयोग्य देशस्थे तूर्यभरे युगपद् वाद्यमाने कोऽपि श्रोता क्षयोपशम-विशेषादियतोऽत्र भेरीझांकारा इयंतश्च पणवपाञ्चजन्यादिनिनदा इति पृथक् पृथक् शब्दसमूहावबोधेन तद्ध्वनिनिवहं बहुमवगृह्णाति १। कश्चन पुनर्नानातूर्यनिनदोऽयमित्यबहु २।

तथा एकैकमपि पाञ्चजन्यादिनिनादं स्निग्धतामाधुर्यलघुमध्यमवृद्धनरवाद्यतादिनानाधर्मोपेतमवैतीति बहुविधं ३। कश्चित् पुनः स्वल्पधर्मान्वितमवैतीत्यबहुविधं ४ । कश्चिदविमृश्यैवावैतीति क्षिप्रं ५ । कश्चन पुनश्चिरं विमृश्येत्यक्षिप्रं ६ । तथा पताकाद्यालोकाद्देवकुलमेतदिति लिंगनिश्रां कृत्य प्रज्ञायते तन्निश्रितं ७। तद्विपरीतं पुनरनिश्रितं ८। यन्निःसंशयमवैति तन्निश्चितं ९। संदेहानुविद्धं पुनरनिश्चितं १० । यथैकदावगतं तथैव सर्वदा यदवगच्छति तद् ध्रुवं ११ । यत् पुनः कदाचिद् बह्ववैति कदाचिदबहु तदध्रुवम् १२। एवमवग्रहस्य द्वादशभेदा, एवमीहावायधारणानामपि सप्रभेदानाम्। ततश्चाष्टविंशतिस्तपन(१२)गुणिता भवति त्रिशती षट्त्रिंशदधिका मतिसंवेदनभेदानां व्यासतः, किंचिन्मात्रं भेदानां व्यासतः किंचिन्मात्रभेदात् पुनर्भिद्यमानमनंतभेदमपि स्यान्मतिज्ञानं जीवानामानंत्यात्तत्क्षयोपशमानां च वैचित्र्यादिति । अथाऽवग्रहादीनां कालमानमुच्यते नैश्चयिकोऽर्थावग्रह एकं समयं, व्यंजनावग्रहस्तु जघन्यत आवलिकाया असंख्येयभागः, उत्कर्षतस्तु संख्येया आवलिकाः, ताश्च प्राणापानपृथक्त्वसमयमाना विज्ञेयाः । व्यावहारिकार्थावग्रहस्य नैश्चयिकव्यावहारिकयोरीहावाऽययोश्च जघन्येनोत्कर्षेण चांतर्मुहूर्त्तम् । अविच्युतिस्मृती तु प्रत्येकमंतर्मुहूर्त्तमाने स्मृतेर्बीजरूपाया वासनायास्तु संख्येयं समयं संख्येयसंवत्सरायुषाम्; असंख्येयवर्षायुषां पुनरसंख्येयकालम् इति भावितं श्रीमदावश्यकबृहद्वृत्त्यनुसारेण सविस्तरं मतिज्ञानम् ।

अथ श्रुतसंवेदनस्वरूपं प्ररूप्यते । तत्र श्रुतज्ञानं विस्तरतोऽनंतभेदं तद्भावना चेयं दिग्मात्रतस्तथाहि–प्रत्येकमकारादीन्यक्षराणि नैकप्रकाराणि, तद् यथा–अथ अकारः सानुनासिको निरनुनासिकश्च पुनरेकैकस्त्रिधा ह्रस्वो दीर्घः प्लुतश्च,

पुनरेकैकस्त्रिप्रकार' उदात्तोऽनुदात्त' स्वरितश्चेत्येवमवर्णोऽष्टादशभेदः । एवमन्येपीकारप्रभृतयः। तथाऽक्षराणां सयोगा घट पट इति तुरगः सिंधुर इत्येवमादयोऽनता । ननु सख्येयानामकारादीनां कथमनताः सयोगाः ? उच्यतेऽभिधेयस्य पुद्गलास्तिकायप्रभृतेरनतत्वाद् भिन्नत्वाच्च, अभिधेयभेदे चाभिधानभेदसिद्ध्याऽनतसयोगसिद्धिरभिधेयभेदानत्य च यथा परमाणुर्द्विप्रदेशिकस्त्रिप्रदेशिको यावदनतप्रदेशिक इत्यादि । तथैकत्रापि चानेकाभिधानप्रवृत्तेरभिधेयधर्मभेदो यथा परमाणुर्निरश इत्यादि, न चैते सर्वथैकाभिधेयवाचका ध्वनयः सर्वशब्दानां भिन्नप्रवृत्तिनिमित्तत्वादित्येव सर्वद्रव्यपर्यायेष्वायोजनीयम् एव भिन्नाभिन्नाभिधानसमुद्भूता अनताः श्रुतज्ञानकृतयो निक्षेपास्ताश्च सामस्त्येन कथ च वक्तु पार्यंते समासतस्तु श्रुतज्ञान चतुर्दशभेदः तथाहि—अक्षरश्रुतम् १ । अनक्षरश्रुत २ । सज्ञिश्रुतम् ३ । असज्ञिश्रुत ४ । सम्यक्श्रुत ५ । मिथ्याश्रुत ६ । सादिश्रुतम् ७ । अनादिश्रुत ८ । सपर्यवसितम् ९ । अपर्यवसित १० । गमिकम् ११ । अगमिकम् १२ । अगप्रविष्टम् १३ । अनगप्रविष्ट च १४ । तेष्वक्षर त्रिधा सज्ञाक्षर १ व्यजनाक्षर २ लब्ध्यक्षर ३ च । तत्र सज्ञाक्षरम् अक्षराकारविशेषो यथा घटिकाकारो घकार इत्यादि । तथा व्यजनाक्षर सर्वमेव भाष्यमाणमकारप्रभृतिहकारपर्यवसितम् अर्थाभिव्यजकत्वाच्छब्दस्य । तथा घटः पट इति यदक्षरलभस्तल्लब्ध्यक्षरम्, एतच्चेंद्रियनोइंद्रियनिमित्त विज्ञान श्रुतग्रथानुसारि विज्ञेयम् । अत्र सज्ञाक्षर व्यजनाक्षर च द्रव्याक्षरयुक्त श्रुतज्ञानाख्यभावाक्षरकारणत्वात् । लब्ध्यक्षर तु भावाक्षर विज्ञानात्मकत्वात् १ । अनक्षरश्रुत तूच्छ्वसन निश्वसन निष्ठीवन काशन क्षुत निःसिंघनमनुस्वारवदनुस्वारम् अक्षरमपि यदनुस्वारवदुच्चार्यते हुकारकरणादिवत् सेटन चौरमिलनसज्ञादि इत्यादि विज्ञेय यदुक्त श्रीमदावश्यकनिर्युक्तौ ' ऊससिअ नीससिअ

निच्छूढं खासिअं च छीअं च । निस्सिंघिअमणुसारं, अणक्खरं छेलिआईअं ॥ १ ॥' इति उच्छ्वसितादि द्रव्यश्रुतमात्रध्वनिमात्रत्वात् । अथवा श्रुतज्ञानोपयुक्तस्य जंतोः सर्व एव व्यापारः श्रुतं तस्य तद्भावेन परिणतत्वात् । अत्राह-परः किमेवमुपयुक्तस्य चेष्टादि श्रुतं नोच्यते येनोच्छ्वासिताद्येवोच्यते ? अत्रोच्यते रूढ्याऽथवा श्रूयत इति श्रुतमित्यन्वर्थमधिकृत्योच्छ्वसिताद्येव श्रुतमुच्यते न चेष्टा तदभावात्, अनुस्वाराद्यभावात् अनुस्वारादयस्त्वर्थगमकत्वादेव श्रुतम्, इति भावितमनक्षरश्रुतम् २ । अथ संज्ञिश्रुतमुच्यते । तत्र संज्ञा त्रिविधा, दीर्घकालिकीहेतुवाददृष्टिवादोपदेशभेदात् । तत्र एतत् कृत्यं मया कृतमेतत् पुनः कुर्वन्नस्मि एतत् पुनर्मया करिष्यते इत्यादि त्रिकालवैषयिकसंज्ञाधरो दीर्घकालिक्या संज्ञया संज्ञी निगद्यते १ । ये पुनरसंचित्य इष्टानिष्टविषयेषु प्रायः सांप्रतमेव प्रवर्त्तंते निवर्त्तंते च न पुनर्दीर्घकालं ते हेतुवादसंज्ञया संज्ञिनः प्रोच्यन्ते २ । क्षायोपशमिकज्ञानेन पुनः प्रवर्त्तमानाः सम्यग्दृष्टयो दृष्टिवादोपदेशसंज्ञया संज्ञिनो निगद्यंते ३ । उक्तं च प्रवचनसारोद्धारे-'सन्नाओ तिन्नि पढमित्थ, दीहकालोवएसिआ नाम ? । तह हेउवाय २ दीट्ठि-वाउवएसा तदिअरा उ ॥ १ ॥ एवं करेमि एयं, कयं मए इममहं करिस्सामि । सो दीहकालसन्नी, जो इअ तिकालसन्नधरो ॥ २ ॥ जे उण चिंतेऊण, इट्ठाणिट्ठेसु विसयवत्थुसु । वसंति निअतंति अ, सदेहपरिपालणाहेऊ ॥ ३ ॥ पाएण संपइचिअ, कालम्मि नया वि दीहकालम्मि । ते हेउवायसन्नी, निव्चिट्ठा हुंति असन्नी ॥ ४ ॥ सम्मदिट्ठी सन्नी, संते नाणे खओवसमिअम्मि । असन्नी मिच्छत्तम्मि, दिट्ठिवाओवएसेण ॥ ५ ॥' एवं त्रिविधसंज्ञया ये संज्ञिनस्तेषां श्रुतं संज्ञिश्रुतं ३ । ये पुनरसंज्ञिनस्तत्संबंधिश्रुतम् असंज्ञिश्रुतं ४ । सम्यक्श्रुतं

मामायिकादि ५। मिथ्याश्रुतं तु पुराणादि ६। अथवा सर्वमेव सदर्शिनिभिः परिगृहीत हेयादेयविभागेन सम्यग्बुद्ध्या निभाज्यमान सम्यक्श्रुत, मिथ्यादर्शिनिभि' परिगृहीत तु हेयादेयविभागविकलतया मिथ्याश्रुत विज्ञेय ६। सादि ७ अनादि ८ सपर्यवसितम् ९ अपर्यवसित १०। च नयानुमारतो द्रव्यादिचतुष्टयापेक्षयाऽवसेयम्। गमिक पुनः प्रायोवृत्त्या दृष्टिवाद ११। अगमिक पुन' प्रायः कालिकम् १२। अगप्रविष्ट तु गणभृद्विरचितम् १३। अनगप्रविष्ट पुन. स्थविरविरचितम् १४। इति प्रपचित चतुर्दशधा श्रुतम्। अथवा पर्याय १ पर्यायसमासा-२ ऽक्षरा ३ ऽक्षरसमास ४ पद ५ पदसमास ६ सघात ७ सघातसमास ८ प्रतिपत्ति ९ प्रतिपत्तिसमासा १० ऽनुयोगाऽ ११ ऽनुयोगसमास १२ प्राभृत १३ प्राभृतसमास १४ प्राभृतप्राभृत १५ प्राभृतप्राभृतसमास १६ वस्तु १७ वस्तुसमास १८ पूर्व १९ पूर्व समास २० भेदेन विंशतिविध विज्ञेय श्रुतज्ञानम्। चतुर्दशविधविंशतिविधश्रुतसवादविधायिनी च द्वे इमे कर्मविपाक गाथे तथाहि-' अक्खर १ सन्नी २ सम्म, ३ साइअ ४ खलु सपज्जवसिअ च ५। गमिअ ६ अगपविट्ठ, ७ सत्त वि एए सपडिवक्खा १४ ॥ १ ॥ पज्जयअक्खर २ पय ३ स-घाया ४ पडिवत्ति ५ तह य अणुओगो ६। पाहुड ७ पाहुडपाहुड ८-वत्थु ९ पुव्वा १० य ससमासा ॥ २ ॥' इति व्याख्यात श्रुतज्ञानम्।

अथावधिज्ञानप्ररूपणा विधीयते। अवधिज्ञानस्य व्यासतः क्षेत्रसमयस्वरूपप्रमेयपरिच्छेदापेक्षया असख्येयाः प्रकृतयः, द्रव्यभावस्वरूपनेयापेक्षया पुनरनताः। एतासां काश्चन भवप्रत्ययाः शकुनाना वियद्गमनवत्, एताश्च सुरनैरयिकाणा विज्ञेया'। काश्चन पुन. क्षायोपशमिकयस्ताश्च तिर्यङ्नराणाम्। अत्राह परः क्षायोपशमिके भावेऽवधिज्ञानमुच्यते, समये भव

औदयिकः स कथं तासां प्रत्ययः ? उच्यते ता अपि क्षायोपशमिक्य एव किंत्वसावेवंविधोऽवधिक्षयोपशमस्तयोर्नारकामरभवयोरवश्यं स्यादिति कृत्वा भवप्रत्ययास्ताः । समासतस्तु ऋतु(६)भेदमवधिसंवेदनम् । अनुगामि १ अननुगामि २ वर्द्धमानं ३ हीयमानं ४ प्रतिपाति ५ अप्रतिपाति ६ । तेषु सुरनैरयिकाणामवधिज्ञानमनुगामि नयनवदनुयायि १ । अननुगामि पुनः स्थितप्रदीपवदननुयायि एतत्तु नरतिरश्चामेव एतेषामनुगाम्यपि २ । वर्द्धमानं क्रमेण वृद्धिमधिगच्छद्, हीयमानं पुनः क्रमेण क्षीयमाणं; तत्र वृद्धिरसंख्येयभागवृद्धिः संख्येयभागवृद्धिः संख्येयगुणवृद्धिरऽसंख्येयगुणवृद्धिरेवं चतुर्विधा भवति क्षेत्रसमयविषयिका, न पुनरनंतभागवृद्धिरनंतगुणवृद्धिर्वा क्षेत्रानेहसोरनंतयोरनधिगमादवधिसंवेदनेन; एवं हानिरपि चतुर्विधेन । द्रव्येषु पुनरनंतभागवृद्धिरनंतगुणवृद्धिरेवं द्विधा भवति वृद्धिः, एवं हानिरपि द्रव्याणामनंतत्वात् । पर्यायेषु पुनरनंतभागवृद्धिरसंख्येयभागवृद्धिः संख्येयभागवृद्धिः संख्येयगुणवृद्धिरसंख्येयगुणवृद्धिरनंतगुणवृद्धिरेवं षोढा स्याद् वृद्धिः, एवं हानिरपि पर्यवाणामानंत्यात् ३ । ४ । सकललोकावलोकनकुशलमुत्कर्षतः प्रतिपात्यवधिविज्ञानं ५ । ततः परमप्रतिपाति ६ । एतच्चाऽवधिविज्ञानं जघन्यतस्त्रिसमयाहारकसूक्ष्मनामकर्मोदयवर्त्तिपनकजीवदेहावगाहितक्षेत्रांतःस्थितमूर्त्तद्रव्यतत्पर्यायविषयं विज्ञेयम् । अत्र चायं संप्रदायः ' योजनसहस्रमानो, मत्स्यो मृत्वा स्वकायदेशे यः । उत्पद्यते हि सूक्ष्म-पनकत्वेनेह स ग्राह्यः ॥१॥
संहृत्य चाद्यसमये, सद्यायामं करोति च प्रतरम् । संख्यातीताख्यांगुल-विभागबाहुल्यमानं तु ॥ २ ॥
स्वकतनुपृथुत्वमात्रं, दीर्घत्वेनापि जीवसामर्थ्यात् । तमपि द्वितीयसमये, संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥
संख्यातीताख्यांगुल-विभागविष्कंभमाननिर्दिष्टाम् । निजतनुपृथुत्वदैर्घ्यां, तृतीयसमये तु संहृत्य ॥ ४ ॥

उत्पद्यते च पनकः, स्वदेहदेशे स सूक्ष्मपरिमाणः। समयत्रयेण तस्या-वगाहना यावती भवति ॥ ५ ॥
तावज्जघन्यमवधे-रालम्बनवस्तुभाजनं क्षेत्रम्। इदमित्थमेव मुनिगण-सुसम्प्रदायात् समवसेयम् ॥ ६ ॥'

इति नन्वेव कल्पना किं निदाना यद् योजनसहस्रमानो मीनस्त्रिभिः समयैः स्वप्रदेशान् सक्षिप्य यः समुत्पद्यते स्वदेहदेश एव सूक्ष्मपनकतया तस्यैव त्रिसमयाहारकस्य यावदवगाहनाक्षेत्रं तावदेव जघन्यमवधिचिदालम्बनवस्तुक्षेत्रं नान्यस्य सूक्ष्मपनकस्येति ? अत्रोच्यते-स एव हि महामत्स्यस्त्रिभिः समयैरात्मानं सक्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनः स्यान्नान्यः, स पुनः प्रथमद्वितीयसमययोरतिसूक्ष्मश्चतुर्थादिसमयेषु चाऽतिस्थूलस्त्रिसमयाहारक एव च स तद्योग्य इत्यतस्तद्ग्रहणम्। अथोत्कृष्टावधिज्ञेयवस्त्वाधारक्षेत्रमुच्यते तथाहि-सर्वबहवस्तेजस्कायिकजीवा बादराः प्रायोऽजितजिननाथके स्युस्तदारम्भक पुरुषबाहुल्यात्, सूक्ष्मा अप्युत्कृष्टपदवर्तिनस्तदा न विरुध्यते। एवं सर्वोत्कृष्टपदवर्तिनस्तेजस्कायिकजीवा नैरन्तर्येण श्रेण्या व्यवस्थाप्यते सा च श्रेणी अवधिज्ञानिनः सर्वासु काष्ठासु शरीरपरितो भ्राम्यते सा चासंख्येयानलोके लोकमानान् क्षेत्रविभागान् व्याप्नोति तया पुनरवधिज्ञानितनुपरितो भ्रामितया सूक्ष्मबादरतेजस्कायिकजीवश्रेण्या यावत् क्षेत्रं व्याप्यते सर्वदिक्कं तावत् परमावधेः क्षेत्रम्। एतावति क्षेत्रे चेद् द्रष्टव्यं स्यात्तदा पश्यति न पुनरलोके विलोकनीयमस्तीति। अथ मध्यमावधिः क्षेत्रसमयाभ्यां विभाव्यते किंचिदपि। तथाहि क्षेत्रमङ्गुलासंख्येयभागमात्रं पश्यन् समयमावलिकासंख्येयभागमितमध्यवस्यत्यतीतमनागतं च। अत्र च क्षेत्रसमयावलोकनमौपचारिकं, किंतु यथोक्तक्षेत्रव्यवस्थितानि दर्शनयोग्यानि मूर्त्तद्रव्याणि तत्पर्यायांश्च विवक्षितसमयान्तर्गतानध्यवस्यत्यवधिज्ञानी न पुनः क्षेत्रानेहसौ तयोरमूर्त्तत्वात्। एवमग्रतोऽपि विधेया भावना।

अत्र चांगुलं क्षेत्राधिकारात् प्रमाणांगुलं ग्राह्यमुत्सेधांगुलमित्यन्ये । तथांगुलसंख्येयभागमात्रं क्षेत्रं पश्यन्नावलिकायाः संख्येयमेव भागं पश्यति । तथांगुलमानं क्षेत्रमध्यवस्यन् भिन्नामावलिकामवलोकयति । तथांगुलपृथक्त्वमितं क्षेत्रं पश्यन्नावलिकां पश्यति । पृथक्त्वं पुनर्द्विप्रभृत्यानवभ्यः । तथा हस्तमितं क्षेत्रं पश्यन्नंतर्मुहूर्त्तं पश्यति । एवं गव्यूतमितं क्षेत्रं पश्यन् दिवसांतः पश्यति । योजनमानं तु क्षेत्रमालोकयन् दिवसपृथक्त्वमवलोकयति । पञ्चविंशतिं योजनानि तु पश्यन् पक्षांतः पश्यति । भरतं तु पश्यन्नर्द्धमासं, जंबूद्वीपं पुनः पश्यन् साधिकं मासं, समयक्षेत्रं तु पश्यन् संवत्सरं पश्यति, रुचकद्वीपं यावत्तु पश्यन् परिवत्सरपृथक्त्वं पश्यति । अतः परं संवत्सरसहस्रात् परतः संख्येयं समयं पश्यन् द्वीपांभोनिधीनपि संख्येयान् पश्यन् महांतं तु द्वीपमब्धिं वा पश्यत्येकं तद्देशं वा असंख्येयं तु पल्योपमादिलक्षणं कालं पश्यन् द्वीपाकूपारानप्यसंख्येयान् पश्यति महतस्तु तान् संख्येयांस्तमेकं तदेकदेशं वा पश्यति योजनापेक्षया त्वसंख्येयमेव क्षेत्रं सर्वत्राप्यसंख्येये समये । एवं समयवृद्धौ क्षेत्रस्य वृद्धिः स्यात्, द्रव्यपर्याययोरपि; क्षेत्रवृद्धौ तु समयः कदाचिद् वर्द्धते कदाचिन्न, क्षेत्रस्य सूक्ष्मत्वात् कालस्य तु स्थूलत्वात् क्षेत्रवृद्धौ द्रव्यपर्यायौ तु वर्द्धेते, द्रव्यपर्याययोर्वृद्धौ तु क्षेत्रानेहसौ भक्तव्यौ द्रव्यपर्याययोः सकाशात्तयोः स्थूलत्वात् द्रव्यवृद्धौ तु पर्याया वर्द्धंत एव, पर्यायवृद्धौ तु द्रव्यं भजनीयं, द्रव्यात् पर्यायाणां सूक्ष्मतरत्वात् । एवं क्षेत्रसमयरूपपरिच्छेद्यापेक्षया असंख्येयाः स्युर्मध्यमावधेर्भेदाः, द्रव्यपर्यायस्वरूपज्ञेयापेक्षया पुनरनंताः । परमावधिस्तु क्षेत्रतः प्राग्भावितः, कालतस्तु संख्यातीतोत्सर्पिण्यवसर्पिणीविषयः, द्रव्यतस्तु निखिलमूर्त्तद्रव्यपरिच्छेदकारी, भावस्त्वनंततत्पर्यायगोचरः । अयं च परमावधिर्मनुष्येष्वेव । मनुजतिर्यक्ष्वेव च जघन्यः । अथ त्रिविधावधेः संस्थानमुच्यते स्तिबुक-

स्तोयबिंदुस्तदाकारो वृत्तो जघन्यः पनकावगाहनाक्षेत्रस्य वर्त्तुलत्वात्। उत्कृष्टः पुनरायतः किंचिद् वह्निजीवश्रेणीपरिक्षेपस्य स्वदेहानुवृत्तित्वात्। मध्यमाऽवधिस्तु नैकसस्थानस्तथाहि तत्र उडुपस्तदाकारोऽवधिर्नैरयिकाणां, पल्लको लाटदेशे धान्यालय स्तदाकारोऽवधिर्भवनवासिनां, पटहाकारो व्यन्तरसुराणां, तथा चर्मावनद्धा विस्तीर्णवलयाकारा झल्लरी तदाकारोऽवधि र्ज्योतिष्काणां, तथा ऊर्ध्वायतोऽधो विस्तीर्ण उपरि च तनुर्मृदंगस्तदाकारः कल्पोपपन्नसुमनसां, तथा पुष्पशिखावलिरचिता चगेरी पुष्पचगेरी तदाकारोऽवधिर्ग्रैवेयकनाकिनां, तथा कन्याचोलकापरपर्याययवनालकाकारोऽवधिरनुत्तरसुराणाम्। अथ पुनरवधेराकारः सर्वसमय नियतोऽवसेयः। एतेषां मध्ये भवनपतिव्यन्तराणामुपरि बहुः स्यादवधिर्वैमानिकानां पुनरधोभागे ज्योतिष्कनैरयिकाणां तु तिर्यग् नरतिरश्चां तु नैकसस्थानो मध्यमावधिर्बहुविधश्च। अथ नरतिरश्चामवधिक्षेत्रस्यानियतत्वात् सुरनैरयिकाणामवधिपरिच्छेद्यद्रव्याधारक्षेत्रप्रमाणमुच्यते। तत्र देवानां जघन्यावधिक्षेत्रं पंचविंशतियोजनानि, एतत् पुनर्ज घन्यावधिक्षेत्रं दशसंवत्सरसहस्रायुषां भवनपतिव्यन्तराणामेवावसेयं, ज्योतिष्काणां पुनरसंख्येयस्थितिकानांजघन्येतरभेदमप्य- वधिक्षेत्रमसंख्येयान्येव योजनानि। वैमानिकानां पुनरंगुलासंख्येयभागमात्रं जघन्यमवधिक्षेत्रम्, एतच्चोपपातसमये परभव- सत्कमवधिमधिकृत्य विज्ञेयम्। उत्कृष्टं तु प्रथमकल्पद्वैतदेवतानां रत्नप्रभापृथिव्याः सर्वाधस्तनं भागं यावद् विज्ञेयं, तृतीय तुरीय-कल्पोत्पन्नसुराणां तु शर्कराप्रभाधस्तनदेशं यावत्, ब्रह्मलांतकस्वर्लोकोद्भवदेवानां तु वालुकाप्रभां यावत्, शुक्रसहस्रार- सुराणां तु पंकप्रभां यावत्, उपरितनस्वर्लोकचतुष्कनाकिनां तु धूमप्रभां यावत्, ऋतु(६)मित ग्रैवेयकवृन्दारकाणां तु तमःप्रभां यावत्, उपरितनग्रैवेयकत्रयसुमनसां तु सप्तमीं तमस्तमःप्रभापृथिवीं यावदुत्कृष्टमवधिविज्ञेयद्रव्याधारक्षेत्रमवसेयम्।

अनुत्तरसुरास्तु स्वविमानचूलिकापताकादेरूर्ध्वमदर्शनात् । किंचिदूनां लोकनालिं पश्यंत्यवधिना । उक्तं देवानां जघन्येतरभेदमवधिक्षेत्रम् । अथ नैरयिकाणां तदुच्यते । रत्नप्रभापृथिव्यां जघन्यमवधिक्षेत्रं सार्द्धगव्यूतत्रयम्, उत्कृष्टं तु योजनमानं, द्वितीयपृथिव्यां तु जघन्यं गव्यूतत्रयम्, उत्कृष्टं तु सार्द्धगव्यूतत्रयं, तृतीयपृथिव्यां तु जघन्यं सार्द्धगव्यूतद्वयम्, उत्कृष्टं तु गव्यूतत्रयं, चतुर्थपृथिव्यां तु जघन्यं गव्यूतद्वयम्, उत्कृष्टं तु तदेव सार्द्धं, पंचमपृथिव्यां जघन्यं सार्द्धं गव्यूतम्, उत्कृष्टं तु गव्यूतद्वैतं, षष्ठपृथिव्यां जघन्यं गव्यूतम्, उत्कृष्टं तदेव सार्द्धं, सप्तमपृथिव्यां तु जघन्यमर्द्धं गव्यूतम्, उत्कृष्टं तु गव्यूतमवधिक्षेत्रं विज्ञेयम् । इति भावितं समासतः किंचित् क्षेत्रसंस्थानभेदादिभिरवधिसंवेदनम् । विस्तरस्तु श्रीआवश्यकनिर्युक्तिपीठिकागताभिः ' संखाइआओ खलु, ओहीनाणस्स सव्वपयडीओ । काओ भवपच्चइआ, खओवसमिआ उ काओ वि ॥ १ ॥ ' इत्यादिकाभिर्गइनेरइआई आ हिठा जह वन्निआ तहेव इह । इति गाथा शकलपर्यंताभिर्गाथाभिर्भावनीयम् ।

अथ मनःपर्यवज्ञानं विभाव्यते, तथाहि—मनःपर्यायसंवेदनं द्विप्रभेदम्, ऋजुमतिर्विपुलमतिश्च । तत्र घटः पटो वाऽनेन चिंतित इत्यादिविशेषविमुखतया प्रायोवृत्त्या ऋजु सामान्यं तन्मात्रग्राहिणी मतिः ऋजुमतिः, तथा घटोऽनेन चिंतितः स वर्णतो रक्तः, प्रमाणतो द्रोणादिमानः, द्रव्यत एतावद्दलिकनिष्पन्नः, क्षेत्रतोऽमुकग्रामनिष्पन्नः, कालतः शीतर्तुघटितो निदाघघटितो वेत्यादिविशेषग्राहितया विपुलं प्रसंगतः पर्यायशतोपेतं वस्तु यया ज्ञायते सा विपुलमतिः । उक्तं च प्रवचनसारोद्धारे ' रिउ सामन्नं तम्मत्त–गाहिणी रिउमई मणोनाणं । पायं विसेसविमुहं, घडमित्तं चिंतियं मुणइ ॥ १ ॥

विउल वत्थु विसेसेण, नाण तग्गाहिणी मई विउला। चिंतिअमणुसरइ घड, पसगओ पज्जवसएहिं ॥ २ ॥' एतच्च मन'पर्यवज्ञान सयमविशुद्धिनिबधनत्वाद् गुणप्रत्यय मनुष्यक्षेत्रान्तर्वर्तिनिखिलसज्ञिमनोद्रव्यपर्यायालबन च विज्ञेयम्। यदुक्त श्रीमदावश्यकनिर्युक्तिपीठिकायां 'मणपज्जवनाण पुण, जणमणपरिचिंतिअत्थपागडण। माणुसखित्त-निबद्ध, गुणपच्चइअ चरित्तवओ ॥ १ ॥'

पचम तु केवलज्ञान–तच्च घनघातिकर्मचतुष्कनिश्शेषप्रक्षीणताप्रभव निखिलद्रव्यपर्यायस्वरूपसाक्षात्कारक च विज्ञेय-मनतमप्रतिपाति शाश्वत च। यदुक्त तत्रैव 'अह सव्वदव्वपरिणाम–भावविण्णत्तिकारणमणत सासयमप्पडिवाई, एगविह केवलनाण ॥ १ ॥' इति व्याख्यात पचधा ज्ञान।

अथ दर्शनस्वरूप प्ररूप्यते, तच्च समासत' प्रथमलहर्यां द्वितीयतरगे प्ररूपितम्। अत्र च किंचित्तदेव विस्तार्यते तथाहि जिनोक्ततत्त्वेषु श्रद्धानरूप सम्यक्त्वमेकविध द्विविध त्रिविध चतुर्विध पचविध दशविध वा। तत्रैकविध जिनोक्तमेव तत्त्व नान्यदिति सम्यक्श्रद्धानरूप। १। द्विविधत्व तु तस्य निसर्गाधिगमाभ्यां भवति। तत्र यद् गुरूपदेश विना जायते सम्यक् श्रद्धान तन्नैसर्गिकमिति कीर्त्यते। यत्र गुरूपदेशात्तदधिगमोद्भवमिति। २। त्रिविध तु क्षायिक। १। क्षायोपशमिकम् । २। औपशमिकमिति। ३। कारक १ रोचक २ दीपकमिति वा ३। एषा स्वरूप तु प्राग् व्याख्यातम्। तदेव क्षायिकादि सास्वादनसहितं चतुर्विध। ४। वेदकसयुक्त तु पचविध। ५। एतदेव पचविध निसर्गाधिगमाभ्या दशविध। १० भवति।

अत्र च गाथाः श्रीप्रवचनसारोद्धारगताः 'एगविह दुविह तिविह, चउहा पचविह दसविह सम्म। दव्वाइ-

कारगाईउवसमभेएहिं वा सम्मं ॥ १ ॥ एगविहं सम्मरुई १ निसग्गाहिगमेहिं २ तं भवे दुविहं। तिविहं तं खइगाई ३ अहवा वि हु कारगाईअं ३ ॥ २ ॥ सम्मत्तमीसमिच्छत्तं, कम्मखयओ भणंति तं खइअं। मिच्छत्तखओवसमा, खाओवसमं ववइसंति ॥ ३ ॥ मिच्छत्तस्स उवसमा, उवसमं तं भणंति समयन्नू। तं उवसमसेढीए, आइमसम्मत्तलाभे वा ॥ ४ ॥ विहिआणुट्ठाणं पुण, कारग १ मिह रोअगं तु सद्दहणं २। मिच्छदिट्ठी दीवइ जं तत्ते दीवगं ३ तं तु ॥ ५ ॥ खइआई सासायण-सहिअं तं चउव्विहं तु विन्नेअं। तं सम्मत्तब्भंसे, मिच्छत्तापत्तिरूवं तु ॥ ६ ॥ वेअयसंजुत्तं पुण, एअं चिअ पंचहा विणिदिट्ठं। सम्मत्तं चरमपुग्गल-वेअणकाले तयं होई ॥ ७ ॥ एअं चिअ पंचविहं निसग्गाहिगमभेयआ दसहा ॥' इति

अथवा निसर्गरुचि १ रुपदेशरुचि २ राज्ञारुचिः ३ सूत्ररुचि ४ र्बीजरुचि ५ रभिगमरुचि ६ र्विस्ताररुचिः ७ क्रियारुचिः ८ संक्षेपरुचि ९ र्धर्मरुचि १० र्दशधा रुचिरूपं दर्शनं समयानुसारेण विज्ञेयं, तत्र यो निसर्गेण स्वभावेन श्रीजिनोक्तान् द्रव्य-क्षेत्रकालभावभेदतो नामस्थापनाद्रव्यभावभेदतो वा चतुर्विधान् भावान् श्रद्धत्ते स्वयमेव यथास्थितान्, स निसर्गरुचि-र्विज्ञेयः ॥ एतानेव पुनर्भावान् जिनेन छद्मस्थेन वा गुरुणोपदिष्टान् यः श्रद्धत्ते, स उपदेशरुचिः सम्यग्दर्शनी समवसेयः ॥ २ ॥ तथा रागद्वेषौ शेषाश्च मोहनीयप्रकृतयो ज्ञानं च यस्य देशतोऽपगता स्युः स आज्ञयैवाचार्यादिसंबंधिन्या रोचमानः कुग्रहाभावाज्जीवाजीवादि तथेति प्रतिपद्यमानो माषतुषादिवदाज्ञारुचिर्निगद्यते ॥ ३ ॥ तथा यः सूत्रमधीयानः श्रुतेनांगं प्रविष्टेनाचारांगादिनानंगप्रविष्टेनोत्तराध्ययनादिना वा दर्शनमवाप्नोति स गोविंदवाचकादिवत् सूत्ररुचिर्विज्ञेयः ॥ ४ ॥

तथा यथोदकदेशस्थोऽपि तैलबिंदुः समस्तमुदकमाक्रामति तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मीयक्षयोपशमवशादशेपतत्त्वेषु रुचिमान् स्यात् स बीजरुचिरित्युच्यते यथा बीजमेकमपि क्रमेणानेकबीजानां जनकं स्यादेव तत्त्वैकदेशोत्पन्नरुचिरपि निश्शेप-तत्त्वविपयशेपरुच्यतराणां जनयित्री यस्य स्यात् स बीजरुचिरित्यर्थः ॥ ५ ॥ तथा येनैकादशागानि प्रकीर्णकानि चोत्तरा ध्ययनादीनि परिकर्मसूत्रादिभेदेन पचधा दृष्टिवादश्चैव समग्रमपि श्रुतमर्थतः समुपलब्ध स्यात् स अभिगमरुचिः परि-कीर्त्यते ॥ ६ ॥ तथा धर्मास्तिकायाऽधर्मास्तिकायादीनां द्रव्याणामेकत्वपृथक्त्वादयोऽशेपपर्यायाः प्रत्यक्षाद्यशेपप्रमाणैर्येन समुपलब्धा, अथ भावो येषु येषु द्रव्यपर्यायेषु यत्र यत्र प्रत्यक्षादे० प्रमाणस्य व्यापारस्ते तेन तेनैव प्रमाणेन प्रतीता इति तथा सर्वद्रव्याणां सर्वेऽपि पर्याया नैगमसग्रहादिभिः समग्रैरपि नयैर्येन समुपलब्धाः स विस्ताररुचिर्विज्ञेयः ॥ ७ ॥ तथा दर्शनाचारज्ञानाचारचारित्राचारतपआचारविनयसत्यसमितिगुप्तिप्रभृतिक्रियाद्यनुष्ठाने यस्य भावतो रुचिरस्ति स क्रियारुचि-रिति निगद्यते ॥ ८ ॥ तथा योऽनगीकृतसौगतादिमतः श्रीजिनप्रवचनरहस्येषु चानिपुणः शेपेषु च साख्यसौगतादिमतेषु चानभिज्ञः स्यात् चिलातीसुतादिवत् सक्षेपेणैव तत्त्वश्रद्धानमवाप्नोतीति सक्षेपरुचिः परिकीर्त्यते ॥ ९ ॥ तथा धर्मास्ति-कायादिनां पञ्चास्तिकायादीनां गत्युपष्टभप्रभृतिक धर्मं तथांगप्रविष्टाद्यागमरूप श्रुतधर्मं चरित्रधर्मं च जिनोदित यः श्रद्धत्ते स धर्मरुचिर्विज्ञेयो धर्मेषु पर्यायेषु धर्मे वा श्रुतधर्मप्रभृतिके रुचिरस्येति कृत्वा ॥ १० ॥ एतेपां मध्ये निसर्गोपदेशयोरभि गमादौ वा कचित् केपाचिदन्तर्भावेऽपि मुग्धमतिविनेयजनव्युत्पादनार्थमित्थमुपाधिभेदेन दर्शनभेदाभिधानम् ।

एतदर्थसवादकश्च श्रीमदागमः तथाहि " निसग्गु १ वएसरुई, २ आणरुई ३ सुत्त ४ बीअरुइ ५ चेव । अभि-

ई, ७ किरिआ ८ संखेव ९ धम्मरुई १० ॥ १ ॥ भूअत्थेणाहिगया, जीवाजीवा य पुन्नपावं च । सहस्संमुइआसव-संवरो अ रोएइ उ निसग्गो ॥ २ ॥ जो जिणदिट्ठे भावे, चउव्विहे सद्दहाइ सयमेव । एमेव नन्नहत्तिय-स निसग्गरुइत्ति नायव्वो ॥ ३ ॥ एए चेव उ भावे, उवइट्ठे जो परेण सद्दहइ । छउमत्थेण जिणेण व, उवएसरुइत्ति नायव्वो ॥ ४ ॥ रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ । आणाए रोअंतो, सो खलु आणारुईनाम ॥ ५ ॥ जो सुत्तमहिज्जंतो, सुएण उग्गाहई उ सम्मत्तं । अंगेण बाहिरेण वा, सो सुत्तरुइत्ति नायव्वो ॥ ६ ॥ एगेण अणेगाइं, पयाइं जो य सरई उ सम्मत्तं । उदएव्व तिल्लबिंदू, सो बीअरुइत्ति नायव्वो ॥ ७ ॥ सो होइ अभिगमरुई, सुअनाणं जेण अत्थओ दिट्ठं । इक्कारसअंगाइं, पइन्नगं दिट्ठिवाओ अ ॥ ८ ॥ दव्वाण सव्वभावा, सव्वपमाणेहिं जस्स उवलद्धा । सव्वाहिं नयविहीहिं य, वित्थाररुइत्ति नायव्वो ॥ ९ ॥ दंसणनाणचरित्ते, तवविणए सव्वसमिइगुत्तीसु । जो किरिआभावरुई, सो खलु किरिआरुईनाम ॥ १० ॥ अणभिग्गहिअ कुदिट्ठी, संखेवरुइत्ति होइ नायव्वो । अविसारओ पवयणे, अणभिग्गहिओ अ सेसेसु ॥ ११ ॥ जो अत्थिकायधम्मं, सुअधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहिअं, सो धम्मरुइत्ति नायव्वो ॥ १२ ॥"

इदं च सम्यग्दर्शनं सम्यगनुशीलयद्भिरिमानि सप्तषष्टिस्थानानि यथायोगं पालनीयपरिहरणीयतया विज्ञेयानि । तथाहि श्रद्धानचतुष्कं ४ लिंगत्रिकं ३ विनयदशकं १० शुद्धित्रयं ३ दोषपंचकं ५ प्रभावनाऽष्टकं ८ भूषणपंचकं ५ लक्षणपंचकं ५

पतनार्षट्कम् ६ आकारषट्क ६ भावनाषट्क ६ स्थानषट्कम् ६ इति सप्तषष्टिस्थानानि ज्ञेयानि।

एतेषां मध्ये परमार्थसस्तव १ सुदृष्टपरमार्थयतिजननिषेवन २ व्यापन्नदर्शनवर्जन ३ कुदृष्टिपरिहार ४ रूप श्रद्धान चतुर्भेदम्। तेषु जीवा १ ऽजीव २ पुण्य ३ पापा ४ श्रव ५ संवर ६ निर्जरा ७ बंध ८ मोक्ष ९ रूपाणां नवानामपि पदार्थानां यथायोग सत्पदप्ररूपणा १ सख्या २ क्षेत्र ३ स्पर्शन ४ काला ५ ऽतर ६ भावा ७ ल्पबहुत्व ८ रूपैरष्टभिः पदैर्ज्ञातानामपि पुनः पुनराकर्णन चिंतन च परमार्थसस्तवो भवति।

तत्र सत्पदप्ररूपणायामस्ति जीवः स च गुणस्थानेषु श्रुतिसमधिकदिग्(१४)मितेषु ' गइ १ इंदिए अ २ काए, ३ जोए ४ वेए ५ कसाय ६ नाणेसु ७। सयम ८ दसण ९ लेसा, १० भव ११ सम्मे १२ सन्नि १३ आहारे ४ ॥ १ ॥ ' इति गाथोक्तैश्चतुर्दशभिर्मार्गणास्थानैर्विचारणीयः। सा च विचारणा बहुविस्तरत्वान्न प्रतन्यते, तेन कर्मग्रथादिग्रथांतरेभ्य. साऽवसेया। एवमस्त्यजीव., अस्ति पुण्यमित्यादिशेषाष्टपदार्थानामपि यथायोग सत्पदप्ररूपणा विधेया १।

अथ जीवाजीवादीनां भेदगणनरूपा सख्या व्याख्यायते तत्र जीवाजीवादीनां क्रमेण चतुर्दश १ चतुर्दश २ द्विचत्वारिंशत् ३ द्व्यशीति ४ द्विचत्वारिंशत् ५ सप्तपचाशत् ६ द्वादश ७ चतु ८ मिता भेदा भवति। मोक्षे तु नवद्वाराणि व्याख्यास्यते। तेषु जीवस्य चतुर्दशभेदा विभाव्यते। तथाहि—जीवास्तावच्चैतन्यलक्षणा इति लक्षणानतिक्रमादेकविधा अपि ते उच्यते। द्विविधा वा ससारिणो मुक्ताश्चेति। त्रिविधा वा पुस्त्रीनपुसकभेदात्। चतुर्विधा वा जीवाः सुरनरतिर्यग्नैरयिकभेदात्। पचविधा वा जीवा एक–द्वि–त्रि–चतुः–पचाक्षभेदत। षड्विधा वा जीवाः पृथिव्यप्तेजोवायुवनस्पतित्रसभेदात्। सप्तविधा

वा जीवास्तथाहि-सूक्ष्मबादरभेदादेकाक्षाद्विप्रभेदास्तत्र सूक्ष्माः सूक्ष्मनामकर्मोदयवर्त्तिनश्चर्मचक्षुरगोचराः केवलिप्रत्यक्षलक्ष्याः सकललोकव्यापिनः पृथिव्यप्तेजोवायुसाधारणवनस्पतिरूपाः १। बादरास्तु बादरनामकर्मोदयवर्त्तिनः स्थूलपृथिव्यप्तेजोवायुसाधारणप्रत्येकवनस्पतिरूपाः । एतेषां मध्ये बादराणामपि चतुर्णां पृथिव्यप्तेजोवायूनामसंख्येयानां समुदितानामेव जंतूनां चर्मचक्षुर्गोचरता नैकद्वित्र्यादिसंख्याजुषाम् । वनस्पतीनां तु केषांचित्संख्येयानां केषांचिदसंख्येयानामपि वपुषां चर्मचक्षुः प्रत्यक्षता। उक्तं च 'इक्कं व्व दो व्व तिन्नि व, संखिज्झाण न पासिउं सक्का । दीसंति सरीराइं, पुढविजिआणं असंखवाणं ॥ १ ॥ आऊतेऊवाऊ, एसिं सरीराणि पुढविजुत्तीए ॥ दीसंति वणसरीरा, दीसंति असंख-संखिज्जा ॥ २ ॥ ' इति । एते च पृथिव्यादयो यथाक्रमं मसूरास्तिबुकसूचीपताकानैकसंस्थानसंस्थिता विज्ञेयाः । यदुक्तं ' मसूरए अ थिवुए, सुइ पडागा अणेगसंठाणा॥पुढविजलजलणमारुअ-वणस्सईणं तु संठाणा ॥१॥ ' इति। एतेषां च बादराणां मध्ये द्विविधाः पृथिवीजीवाः श्लक्ष्णाः खराश्च तत्र चूर्णिते लोष्ठकल्पा मृदुपृथिवी श्लक्ष्णा प्रोच्यते तदात्मका जीवा अप्युपचारतः श्लक्ष्णा इत्युच्यंते । एवमग्रेऽपि भावना विधेया । खराश्च कठिनाः । अनयोर्मध्ये कृष्णनील-लोहितपीतश्वेतपांडुरपनकवृत्तिकारूपाः सप्तभेदा भवंति श्लक्ष्णपृथिव्याः । पंचवर्णा तु पृथिवी प्रसिद्धा आपांडुरा तु आ ईषत् पांडुरा श्वेता एतद्ग्रहणं तु कृष्णादिवर्णानामपि स्वस्थानभेदांतरसंभवसूचकं, पनकस्त्वत्यंतसूक्ष्मरजोरूपः स एव मृत्तिका वनमृत्तिका पनकवन्नभसि वर्त्तमानस्याऽस्य लोके पृथिवीत्वेन रूढत्वात् पूर्वभेदसंग्रहेऽपि भेदेनोपादानम् । अन्ये त्वाहुः-पनक-मृत्तिका मरुषु पर्पटिकेति प्रसिद्धा यस्याः पादाभिघातेन झगिति वियत्युज्जृंभणम् । खरपृथ्व्यां षट्त्रिंशद्भेदास्त्विमामिः

षट्त्रिंशत्तमथीमदुत्तराध्ययनगाथाभिर्विज्ञेयास्तथाहि 'पुढवी अ सक्करा बालुआ य, उवले सिला य लोणुसे ॥ अय-तउअ तंबसीसग-रूप्प सुवन्ने अ वइरे अ ॥ १ ॥ हरिआले हिंगुलए मणोसिला सासगंजणपवाले ॥ अब्भपडलब्भवालुअबायरकायमणिविहाणा ॥ २ ॥ गोमिज्जए अ रुअगे, अंके फलिहे अ लोहिअक्खे अ । मरगयमसारगल्ले, भुअमोअग इंदनीले अ ॥ ३ ॥ चंदणगेरुअहंसगब्भपुलए सोगंधिए अ बोधव्वे ॥ चंदप्पभाव सलिणजलकंते सूरकंते अ ॥ ४ ॥' इति ।

आसां च विषमपदव्याख्या पृथिवी शुद्धपृथ्वी, शर्करा लघुशकलरूपा, उपलो गण्डशैलादिः, शिला च पाषाणरूपा, लवण-समुद्रलवणादि, ऊषः-क्षारमृत्तिका, अयस्ताम्रादयस्तु तत्तत्खानिसमवा धातुविशेषाः, वज्रश्च हीरकः, सासको धातुविशेषः, अञ्जन समीरकम्, पवाल विद्रुमः, अभ्रपटल प्रसिद्धम्, अभ्रवालुका तु अभ्रपटलमिश्रा वालुका । इह पृथिव्यादयश्चतुर्दश हरितालादयोऽष्टौ गोमेदकादयश्चतुर्दश । एषां च क्वचित् कस्यचित्कथञ्चिदन्तर्भावात् मीलिताः षट्त्रिंशद्भवन्ति भेदाः खरपृथिव्याः ।

अप्कायस्य तु बादरस्य इमे पञ्च भेदा भवन्ति शुद्धोदकादयः । तेषु शुद्धोदक पयोधिपाथोदादिसर्वमपि । अवश्यायस्तु शरदादिषु प्राभातिकसूक्ष्मवर्षरूपः । हरितनुश्च प्रातः स्निग्धपृथ्वीभवस्तृणाग्रतोयबिंदुः । महिका तु गर्भमासेषु सूक्ष्मवर्षरूपा । हिम च प्रसिद्ध । पञ्चत्व चैषामुपलक्षण, तेन स्त्यानीभूताप्कायरूपघनोदधिप्रभृतयोऽप्यस्य भेदा विज्ञेयाः ।

बादरतेजस्कायस्य पुनरङ्गारमुर्मुराग्निज्वालोल्काविद्युदग्निरूपा भवन्ति नैके भेदास्तत्राङ्गारो विगतधूमज्वालदह्यमानेंधनादि-

रूपः । मुर्मुरो भस्ममिश्राग्निकणरूपः । अविर्मूलप्रतिबद्धाऽग्निशिखा दीपशिखेत्यन्ये । ज्वाला तु छिन्नमूला । विद्युदुल्के तु प्रतीते । अग्निस्त्विहोक्तभेदातिरिक्तो विज्ञेयः ।

बादरवायुकायस्य तूत्कलिका–मंडलिका–घनवातगुंजावातसंवर्त्तकशुद्धवातप्रभृतयो भेदा विज्ञेयाः । तत्रोत्कलिका वातास्ते ये स्थित्वा स्थित्वा वांति । मंडलिकावातास्तु वातोलीरूपाः । घनवाताश्च रत्नप्रभाद्यधोवर्त्तिनां घनोदधीनां विमानानां चाधारभूतास्तुहिनपिंडप्रतिमाः प्रभंजनाः । गुंजावातास्तु ते ये गुंजंतो वायंते । बहिःस्थमपि तृणकाष्ठादि ये विवक्षित-क्षेत्रांतः क्षिपंति ते पुनः संवर्त्तकवाताः । शुद्धवातास्तु यथोक्तविशेषणविकला मंदानिलादयः ।

बादरवनस्पतिकायजीवास्तु द्विविधा प्रत्येकतनवोऽनंतकायिकाश्च । तत्र वृक्षगुच्छगुल्मप्रभृतयो द्वादशभेदाः प्रत्येकत-नूनाम् । तेषु वृक्षा द्विप्रभेदाः एकास्थिका अनेकास्थिकाश्च । तत्र येषां फले एकमेव बीजं ते एकास्थिकाः, सहकारनिंब-जंबूसालांकुल्लश्लेष्मांतकसल्लकीमोचिकीमाकुकबकुलपलाशनक्तमालपुत्रजीवकविभीतभल्लातकीप्रभृतयः । एतेषां मूलान्यसंख्येय-प्रत्येकतनुजीवात्मकानि । एवं कंदाः स्कंधास्त्वचः शाखाः प्रवाला अपि । तेषु मूलानि तानि यानि कंदस्याऽधस्ताद्भूमेरंतः प्रसरंति । तेषामुपरि च कंदाः । स्कंधास्तु स्थुडरूपास्त्वचच्छल्लयः । शाखाः प्रसिद्धाः । प्रवालाः पल्लवप्ररोहाः । एषां पुनः पत्राण्येकैकजीवाधिष्ठितानि । पुष्पाण्यनेकजीवानि; प्रायः प्रतिप्रसूनपत्रं जीवभावात् । फलानि चैषामेकास्थिकानि । येषां पुनः फलेषु बहूनि बीजानि तेऽनेकास्थिका । अस्थिकतिंदुककपित्थामलकदाडिमार्छडकमातुलिंगोदुंबरवटादयः । एतेषां मध्ये आमलकादीनामेकास्थिकत्वेऽपि बहुबीजत्वम् । यतो यावत्यस्तत्र मिंजास्तावंति तत्र बीजानि । एतेषामपि मूलादीन्य-

सख्येयप्रत्येकजीवात्मकानि । पत्राणि प्रत्येकजीवानि । कुसुमान्येकजीवानि । फलानि बहुबीजानि । १ । तथा य एकमूलकदं सरलं शाखासमुदयः । समुत्तिष्ठत्यन्योन्यमसबद्धः स गुच्छसज्ञया परिकीर्त्यते । तद्भेदाश्च सिंदुवाराऽतसीशणार्कप्रभृतयो विज्ञेया. । २ । यथा गुच्छास्तथा गुल्मा अपि विज्ञेया. । नवर किंचित् सरलत्ववर्जित परस्परमनुलग्नः शाखाप्रसरो गुल्म इति शब्द्यते । तद्भेदाश्च नवमालिकायुथिकाकणवीरबधुजीवककोरटकादयो विज्ञेया' । ३ । लतास्तूत्सेधबहुला अवितुच्छबाहल्या एककस्वरूपाश्च ज्ञेयाः । यासा स्कधप्रदेशे विवक्षितोर्ध्वगतिकशाखाव्यतिरेकेणान्यत्परिस्थूर शाखांतर न निर्गच्छति ता लता इति कीर्त्यन्ते । तद्भेदास्तु पद्मलताऽशोकलतानागलताचपकलताचूतलतावासतिकातिमुक्तककुदादयोऽवसेयाः । ४ । वल्लयस्तु प्रसिद्धस्वरूपाः कूष्मांडाकालिंगीतुम्बेलापटोलाप्रभृतयः । ५ । पर्वप्रधानास्तु पर्वगास्ते चेक्षुनलवीरणवशादयः । ६ । तृणानि तु कुशार्जुनप्रभृतीनि ज्ञेयानि । ७ । येषां पुनस्त्वग् वलयाकारेण व्यवस्थिता तानि वलयानि । तद्भेदाश्च ताल–तमाल–सरल–कदली–पूगफली–खर्जूरी–नालिकेरी–भूर्जतरु–हिंगुतरुवनतरुलवगकेतकी–प्रभृतयः समवसेया' । ८ । तथा हरितानि वास्तुलतदुलीयकबिल्लीप्रभृतीनि ज्ञेयानि । ९ । तथा बुभुक्षासदृक्षो व्याधिर्नैव वेधते विश्वस्मिन्नपि विश्वे तदुपशमौषधिसमा ओषध्यो नैकधा भवेयुः । शालिव्रीहिगोधूमयवकलममागल्यककलायतिलमुद्गमापवल्लचपलकुलत्थचनकचीनककोद्रवकगुरालकनरटिकाशणसर्षपाऽतसीकुसुममूलकबीजप्रभृतय. । १० । ये पुनर्मध्ये जल प्ररोहति ते जलरुहास्ते च सेवाकलत्तुकहठकसेरुकापद्मभेदादयो विज्ञेयाः । ११ । कुहणास्तु भूमिस्फोटसज्ञास्ते वायकायकुरकच्छत्रादयो ज्ञेयाः । १२ । एषां पुनर्वृक्षादीना नानाविधसस्थानानि । पत्राण्येकजीवानि । स्कधोऽप्येकजीवो विज्ञेयस्तले

सरलो नालिकेरीणाम् । एतेषां ग्रहणमुपलक्षणं तेनाऽन्येषामपि केषांचित् स्कंधानामेकजीनाधिष्ठितत्वं यथासूत्रं विज्ञेयम्; इतरथा तु प्रायोवृत्त्या वृक्षाणां स्कंधा असंख्येयप्रत्येकतनुजीवात्मका इत्यवसेयम् । ननु यदि वृक्षाणां मूलकंदस्कंधादयः प्रत्येकमनेकप्रत्येकतनुजीवाधिष्ठितास्तर्हि कथमेकशरीराकृतयः समुपलभ्यंते ? उच्यते यथा सकलसर्षपाणां श्लेषद्रव्यमिश्रिता-वलिता वर्त्तिरेकरूपा स्यात्, अथ च ते सकलसर्षपाः परिपूर्णशरीराः संतः पृथक्पृथक् स्वस्वावगाहनयाऽवतिष्ठंते; तथा प्रत्येक-शरीराणि जीवानां भवंति संघाताः । इह श्लेषद्रव्यस्थानीयं तथाविधं कर्म सकलसर्षपस्थानीयाः पुनः प्रत्येकतनुजीवाः । सकलसर्षपग्रहणं सर्षपवैविक्त्यप्रतिपत्त्या पृथक् पृथक् स्वस्वावगाहकप्रत्येकतनुवैविक्त्यप्रतिपत्त्यर्थम् । अत्रैवार्थे दृष्टांतांतर-मुच्यते, यथा वा तिलशष्कुलिका तिलप्रधानपिष्टमया पूपिकारूपा बहुभिस्तिलैर्मिश्रिता सती पृथक् पृथक् स्वस्वावगाहति-लात्मिका स्यात्, कथंचिदेकरूपा च । तथा प्रत्येकतनुजीवानां शरीरसंघाता कथंचिदेकरूपा पृथक् पृथक् स्वस्वावगाहनाश्च भवंतीति । यतो वृक्षाणामेव मूलकंदादिष्वसंख्येयजीवता प्रज्ञापनाद्यपदे निगदिता । ततो गुच्छादीनां मूलकंदादिषु प्रायः संख्येयजीवता विज्ञायते । यदुक्तं वनस्पतिसप्ततौ 'गुच्छाईणं पुण-संख-जीवया नज्जए इमं पायं । रुक्खाण वि अ जमसंखजीवभावो सुए भणिओ ॥ १ ॥' इति यानि कानिचित् पुनः कुसुमानि नालिकाबद्धानि जात्यादिगतानि तानि सर्वाण्यपि संख्येयजीवानि । स्नुह्यादीनां पुनरनंतजीवानि । शेषाणि जलजानि सहस्रदलादीनि स्थलजानि तु कोदीनि प्रसूनानि यानि कानिचिद्वृंतबंधजुतानि एतेषां मध्ये कानिचित् पत्रादिगतजीवापेक्षया संख्येयजीवानि कानिचिदसंख्येय-जीवानि यथासूत्रं विज्ञेयानि । सौगंधिकसुभगनलिनपद्मोत्पलारविंदकोकणशतपत्रसहस्रपत्राणां तु वृंतबाह्यपत्राणि च प्रायो

हरितरूपाणि यावन्कर्णिका पत्राधारभूता एतानि त्रीण्यप्येकजीवात्मकानि यानि पुनरभ्यतराणि दलानि च केसराणि याश्च-मिनाः फलरूपा एतानि प्रत्येकमेकैकजीवाधिष्ठितानि पद्मनाले त्वेक एव जीव.। तथा इक्कडिनलेक्षुप्रमुखाणां सर्वेषामपि च वशभेदानां यदक्षि यच्च पर्व यच्च पर्वपरिवेष्टन चक्राकार एतानि त्रीण्यप्येकजीवात्मकानि दलानि पुनरेषां प्रत्येकमेक-जीवाधिष्ठितानि पुष्पाणि त्वनेकजीवात्मकानि विज्ञेयानि। अथ फलेषु कश्चिद् विशेषो निगद्यते—शृङ्गाटकस्य फलेषु प्रत्येक द्वौ द्वौ जीवौ तथा पुष्पफलकालिंगतुबत्रपुषैलवालुवालुकघोषातकपटोलतिंदूसकादीनां वृतगिरकटाहरूप त्रिकमप्येकजीवात्मकम्, एतेषामेव च बीजानि सकेसराण्यकेसराणि वा प्रत्येकमेकैकजीवाधिष्ठितानि बोद्धव्यानि।

अथानतकायिकस्वरूप किंचित् प्रपञ्च्यते तथाहि—युगपदुत्पन्नानामनंतानामपि तेषां समसमयमेव वपुर्निर्वृत्तिस्तथा सम समयमेव प्राणापानयोग्यपुद्गलोपादान तत' समकालमेव तदुत्तरकालभाविनावानापानौ तथा यदाहारादिकमेको गृह्णाति शेषा अनता अपि तच्छरीराश्रितास्तदेव गृह्णति। तथा यद् बहूना ग्रहण तदेकस्या तनौ समावेशादेकस्यापि समासतो ग्रहण-मुच्यते। ततः सूक्ष्मबादरभेदभिन्नानामुभयेषामपि निगोदजीवानामेतल्लक्षण विज्ञेयम्। यत्साधारणशरीरनिर्वृत्तिः साधारण चाहारग्रहण साधारण चानापानोचितपुद्गलोपादानौ साधारणैवोच्छ्वासनिश्वासाविति। यथा लोहगोलो ध्मातस्तप्ततपनीय-सकाश सजात सन् सर्वोऽपि वह्निपरिणतो भवति तथा निगोदरूपे एकस्मिन्नपि वपुषि तच्छरीरात्मक तथाऽनतानामपि जीवानां परिणामो विज्ञेय'। अथ बादरसाधारणतनुज्ञानाय तल्लक्षण निगद्यते तथाहि—यानि मूलकदस्कधत्वक्शाखाप्रवाल पुष्पफलबीजानि भगे समानि भवति तान्यनतजीवानि विज्ञेयानि। अत्र पुनरयं विशेषः ये सर्वकाल समभगा भवति त एव

१

साधारणतनुरूपा न पुनर्ये कोमलतावस्थायां समभंगीभूय जरठतावस्थायां विषमभंगा भवंति तेषामनंततनुरूपता यतोऽंतर्मुहूर्त्तसमयं यावत्किशलयोद्गमं विमुच्य ये प्रत्येकतनवस्ते सर्वसमयं प्रत्येकतनवो ये तु साधारणशरीरास्ते सकलकालमपि साधारणशरीराः । यतः सूत्रे प्रकटमेव निषिद्धः परस्परस्वरूपविपर्ययः, उक्तं च वनस्पतिसप्ततौ 'इत्थं पुणविसेसोऽयं, समभंगा हुंति जे सया कालं । तच्चिअ अणंतकाया, न उणो जे कोमलत्तेणं ॥ १ ॥ पढमं चिअ समभंगा, होउण न हुंति जरठभावम्मि । अंतमुहुत्तं जं किस-लयस्स मुत्तूण उग्गमणं ॥ २ ॥ अन्नत्थ जे परित्ताणं, नावि अ ते तहा सया कालं । सुत्ते फुडं निसेद्धो, अन्नसरूवपल्लट्टो ॥ ३ ॥' तथा जरठान्यपि यानि मूलादीनि भंगे सहारकाणि भवंति तानि प्रत्येकजीवानि अहीरभंगानि पुनरनंतजीवानि ज्ञेयानि । तथा मूले कंदे स्कंधे शाखायां वा यत्र मध्ये सारादुपरि त्वक् स्थूलतरा भवति सानंतजीवाऽवसेया, यथा शतावर्याः । अस्याश्चांतःसारमप्यनंतजीवमेव ज्ञेयम् । विपर्यये तु प्रत्येकजीवता यथा सहकारादेः । तथा यत् पत्रं सक्षीरं निःक्षीरं वाऽनुपलक्षमाणस्नायुविशेषं स्यात् । तथा यदपि च सर्वथानुपलक्षमाणपत्रार्द्धद्वयसंधिर्भवति तदेवंविधं पत्रमनंतजीवं द्रष्टव्यम् । अथ समुदितं लक्षणसमुदितम् उच्यते यदनुपलक्षमाणस्नायुसंधिपर्वसमभंगमहीरकं छिन्नोद्भवं च तदनंतजीवं तद्विपरीतं तु प्रत्येकम् । अथ मूलस्कंधादीनां सर्वेषामपि साधारणशरीरत्वज्ञाने लक्षणांतरमुच्यते । यस्य मूलकंदस्कंधत्वक्शाखापत्रपुष्पादेर्भज्यमानस्य चक्राकारो भंगो भवति सम इत्यर्थः, तथा ग्रंथिः पर्वसामान्यतो वा भंगस्थानं स यस्य चूर्णघनो भवति कोऽर्थः? यस्य भज्यमानस्य ग्रंथेर्घनश्चर्णं उड्डीयमानो निरीक्ष्यते, तथा पृथ्वीनाम केदाराद्युपरिवर्तिनी शुष्कपर्पटिका श्लक्ष्णघटिकानिर्मिता वा यथा तस्याभिद्य-

मानाया' समो भेदो भवति, एव समभेदो न भिद्यमान मूलादिकमनतजीव विज्ञेयम् । बादरानतकायिका भेदाः पुनर्जलसेवाल शतावरी–कुमारी–गिरिकर्णिका–स्नुहीप्रभृतय इमाभिर्वनस्पतिसप्ततिगाथाभिर्विज्ञेयास्तथाहि 'ते हुति बायरा तदि–तरा य जे बायरा इमे ते उ । अजलो जो सेवालो, कुमारिथोहरिहलिद्दा य ॥ १॥ सूरणकदो अ तहा, नेआ खिलुहुडअहमुत्थाय । सत्तावरी गलोई, लूणी तह सिंगबेरे अ ॥ २ ॥ आलूअ कन्नकलया, महुपोयलई तहेव महुसिंगी । विरुहा सप्पसुअधा, छिन्नरुहा चेव बीअरुहा ॥ ३ ॥ पाढा मिअवालुकी, महुरसा चेव रायवल्ली य । दती चडी किट्ठी, मसिवल्ली मुग्गपत्ती अ ॥४॥ लहसणपलडू तह, वुन्नवज्झ कदा य हुति बत्तीस । एए अणतकाया, अन्ने वि तहा णेगेण ॥ ५ ॥' इति भाविताः प्रत्येकानतभेदेन द्विविधा वनस्पतिजीवाः श्रीप्रज्ञापनाद्यपदानुसारेण । इति भावितौ सूक्ष्मबादराख्यौ द्वौ भेदौ स्पर्शनरूपैकाक्षधारिणामेकेंद्रियाणां ॥ २ ॥

तथा स्पर्शनरसनारूपेंद्रियद्वयधारिणो द्वींद्रियास्ते च कृमिशखशुक्तिजलूकेलिकालसपूतखराटकप्रभृतयो ज्ञेयाः ॥ ३ ॥ तथा स्पर्शनरसनाघ्राणरूपकरणत्रितयधारिणस्त्रींद्रियास्ते च कुथुपिपिलिकावदेहिकायूकामत्कुणशतपदीप्रभृतयो विज्ञेयाः ॥ ४ ॥ तथा स्पर्शनरसज्ञानक्कनयनरूपेंद्रियचतुष्टयधारिणश्चतुरिंद्रियास्ते च वृश्चिकचिंचरीककीटपतगसलभकोलिकमक्षिकाखद्योतप्रभृतयोऽवसेयाः ॥ ५ ॥

तथासज्ञाऽसज्ञिभेदेन स्पर्शनरसनाघ्राणचक्षुःश्रवणरूपकरणपञ्चकधारिणः पञ्चेंद्रिया द्विप्रभेदाः । तेषु मनोव्यापाररूपसज्ञाधारिणः सज्ञिनस्ते च नैरयिकतिर्यग्मनुजदिविजभेदाचतुर्विधाः । तेषु सप्तपृथिवीसभवत्वेन नैरयिकाः सप्तविधाः पृथिव्यः

पुनरिमाः सप्त तथाहि–रत्नप्रभा १ शर्कराप्रभा २ वालुकाप्रभा ३ पंकप्रभा ४ धूमप्रभा ५ तमःप्रभा ६ तमस्तमःप्रभेति ७ । एतानि पुनरासां गोत्राणि नामानि पुनरासां यथाक्रमं घर्मा १ वंशा २ शैलाऽ ३ जना ४ रिष्टा ५ मघा ६ माघवत्य ७ इति ज्ञेयानि । एताश्च छत्रातिछत्रसंस्थिता भवंति । आसां च यथाक्रममशीति १ द्वात्रिंशद् २ ष्टाविंशति ३ विंशत्य ४ ष्टादश ५ षोडशा ६ ष्टसहस्राधिकयोजनलक्षमितः पिण्डोऽवसेयः । आसां च घनोदधिघनवाततनुवातवियद्रूपमाधारचतुष्टयं कीर्त्तितं श्रीमज्जैनसमये । एषां मध्ये घनोदधिर्विंशतियोजनसहस्राणि पिंडः घनवाततनुवातगगनानि तु पिंडेऽसंख्येययोजनानि गदितानि श्रीमज्जिनागमेऽनंतशर्मागमे । एतत्तु पिंडपरिमाणं पृथिवीनामधो मध्यभाग एव विज्ञेयं, हीयमानं पुनः प्रांते घनोदधिघनवाततनुवातरूपवलयत्रिकस्य प्रमाणं प्रथमपृथिव्यां यथाक्रमं षट्सार्द्धचतुःसार्द्धैकयोजनमितमुपदिशंति पञ्चमसंवेदिनः । द्वितीयायां पुनरस्मिन्नेव वलयमाने यथाक्रमं सत्रिभागगव्यूत १ गव्यूत २ गव्यूतत्रिभागरूपः क्षेपो विधेयः । तृतीयादिषु तु पृथिवीषु यथापर्यायमयमेव प्रक्षेपो द्वित्रिचतुःपञ्चषड्गुणितः कर्त्तव्यः । एवं चतुर्वलयसंगृहीताः सप्तापि पृथिव्यश्चतुर्ष्वपि हरित्सु न स्पृशत्यलोकमिति । एतासु पुनर्यथाक्रमं त्रिंशत् पञ्चविंशति पञ्चदश दश त्रिपञ्चोनैकलक्षपञ्चप्रमिता निरयावासा भवंति । सर्वेषां च मीलने चतुरशीतिलक्षाणि भवेयुर्निरयावासाः । उपर्युपरि गृहभूमिकाकाराः प्रतरास्तु प्रथमपृथिव्यां त्रयोदश द्वितीयपृथिव्यामेकादश तृतीयपृथिव्यां नव चतुर्थपृथिव्यां सप्त पञ्चमपृथिव्यां पञ्च षष्ठपृथिव्यां त्रयः सप्तमपृथिव्यां पुनरेक एव प्रतरो विज्ञेयः । सर्वेषां पुनर्मीलने एकोनपञ्चाशत् प्रतरा भवंति । एतेषु पुनः प्रतरेषु सीमंतादयोऽप्रतिष्ठानांता एकोनपञ्चाशन्निरयावासेन्द्रका भवंति । तेभ्यः श्रुति(४)मितासु दिक्षु विदिक्षु च विनिर्गता प्रत्येकमेकैका-

पंक्तिश्रेणिरूपा निरयावासकानाम्। तासां मध्ये प्रथमप्रतरे दिगावलिकास्ते एकोनपञ्चाशन्निरयावासका भवति। विदिक्षु चाष्टचत्वारिंशन्नरकेषु। द्वितीयादिषु पुनः प्रतरेष्वेकैकहीना पङ्क्तयो भवति यावत् सप्तममहीप्रतरे दिक्ष्वेकैको निरयावासको विदिक्षु तु नास्ति सर्वेषामप्यावलिकागतानां नरकावासकानां मीलने षड्नवतिशतानि त्रिपञ्चाशदधिकानि भवेयुः। शेषास्तु समयाशीतिशतसहस्राणि नवतिसहस्राणि त्रीणि च शतानि सप्तचत्वारिंशदधिकानि स्युः। एते सर्वेऽपि च योजनसहस्रत्रितय-मुणाः। केचित् संख्येययोजनानि विस्तृता आयताश्च। केचित् पुनरसंख्येययोजनानि सीमन्तकस्तु पञ्चचत्वारिंशल्लक्षयोजना-न्यायतो विस्तृतश्च। अप्रतिष्ठानन्तु सप्तमपृथिव्यां योजनलक्षमानस्तत् परितश्चतुर्दिग्व्यवस्थिताश्चत्वार' कालादयस्तु विस्तारायामपरिधिभिरसंख्येययोजनकोटीकोटीप्रमाणा आम्नातव्याः। इन्द्रकास्तु सर्वेऽपि वृत्तास्तदनन्तरिता आवलीकागता. सर्वेऽपि त्र्यस्रास्ततश्चतुरस्रास्ततोऽपि च वृत्ता एव तावद् वाच्य यावदालिकाप्रांताः पुष्पावकीर्णास्तु नैकसंस्थाना। एते च निरयावासा सहस्रं योजनानि पीठे सहस्रं च शुषिरे सहस्रं च स्तूपिकायाम्। एते च सप्त(६)मितासु पृथ्वीष्वध ऊर्ध्वं च योजनसहस्रं विहाय शेषं क्षेत्रविभागे यथासम्भवं सर्वत्र सति सप्तम्यां पुनरध ऊर्ध्वं च सार्द्धानि द्विपञ्चाशद्योजनसहस्राणि विमुच्य। अथ प्रतरांतरं निगद्यते। अध उपरि च योजनसहस्रस्य नरकावासकहीनत्वाद् योजनसहस्रद्वयहीना क्रियते बाहल्य माश्रित्य पृथ्वी, ततो यस्यां पृथिव्यां यावन्त' प्रतरास्तावत् प्रतरैर्निरयावासकानां योजनसहस्रत्रयोच्चत्वात्त्रिसहस्रगुणितैरूना क्रियन्ते', तत प्रतरापेक्षयान्तराणामेकोनत्वाद्रूपोनैः स्वस्वप्रतरैर्भागे हृते यदाऽऽयाति तत् प्रतरस्य प्रतरस्यांतरं भवति। तथाहि— रत्नप्रभाया बाहल्यमशीतिसहस्राधिकं योजनलक्षं तच्चोपरितनेनाऽधस्तनेन च योजनसहस्रेण हीनं क्रियते, जातमष्टसप्तति

सहस्राधिकं लक्षम् । एतस्माच्च त्रयोदशप्रतरास्त्रिसहस्रगुणिता एकोनचत्वारिंशत् सहस्ररूपा अपनीयंते स्थितमेकोनचत्वारिंशत् सहस्राधिकं लक्षम् । तस्य स्वप्रतरैरुपोनत्वाद् द्वादशभिर्भागे हृते लभ्यंते एकादशयोजनसहस्राणि पंचशतानि अशीत्यधिकानि चत्वारश्च द्वादशभागाः छेद्यछेदकराश्योश्चतुर्भिरपवर्त्तने लब्धो योजनस्य त्रिभागः एवावत्प्रमितं रत्नप्रभायां प्रतराणामंतरं परस्परम् । एवं शेषास्वपि करणं भावनीयं केवलमागतमेवोपदर्श्यते द्वितीयायां ९७०० तृतीयां १२३७५ चतुर्थ्यां १६१६६/⅔ पंचम्यां २५२५० षष्ठ्यां ५२५०० सप्तम्यां पुनरेक एव प्रतरस्तस्या न संभवत्यंतरमिति । एतेषु पुनः समुत्पन्नानां विपाकप्राप्तप्रागकृत-स्वदुष्कृतनिवहप्रणुन्नानां दुःखाकराणां नारकाणां न निमेषमात्रमपि सुखवर्णिका । यदुक्तं श्रीजीवाभिगमे 'अत्थिनिमीलणमित्तं, नत्थि सुहं दुक्खमेव अणुबद्धं ॥ नरए नेरइआणं, अहोनिसं पच्चमाणाणं ॥ १ ॥' विशेषश्चात्रैव 'उववाएवसायं, नेरइओ देवकम्मणा वावि ॥ अब्भवसाणनिमित्तं, अहवा कम्माणुभावेणं ॥ १ ॥' व्याख्या=यः प्राग्भवे दाहछेदादिविना मृतोऽनतिसंक्लिष्टो नैरयिको जायते न तस्य पूर्वभवानुबद्धमसातं नापि क्षेत्रजं नापि परमाधार्मिकनिर्मितं नापि परस्परकृतमित्यसावुपपातसमये सातं वेदयति । देवकर्मणा वा यथा बलदेवदेवात्कृष्णजीवस्य वेदनोपशमः सोऽपि कियत्समयं तत ऊर्ध्वमवश्यं क्षेत्रजाद्या वेदना भवत्येव । अध्यवसानाद् वा यथा सम्यक्त्वलाभे चक्षुर्लाभ इव जात्यंधस्य तत ऊर्ध्वं कदाचित्तीर्थकृदादिगुणानुमोदनादेर्बाह्यवेदनासद्भावेऽपि जिनजननाद्यपेक्ष्य सति कर्मणो विपाकोदयतो वा सातमनुभवति इतरथा तु सर्वदैवासातवेदनामेव वेदयंति नैरयिकाः । १ । सा पुनर्वेदना त्रिविधा क्षेत्रजा १ परस्परजा २ परमाधार्मिककृता च ३ । तत्र क्षेत्रजा रत्नप्रभाशर्कराप्रभावालुकाप्रभास्वृणा एतन्नारका शीतयोन-

कत्वेन केवलहिमप्रख्यशिशिरप्रवेशात्मकयोनिस्थानादन्यत्र सर्वस्यापि भूम्यादेः खादिरागारेभ्योऽप्यत्यततप्तत्वादुष्णवेदनां वेदयतीति प्राहुः प्रवचनविशारदाः । एवमन्यास्वपि भावना कार्य्या । पङ्कप्रभायां पुनर्बहुषूपरितनेषु नरकावासकेषूष्णा, अधस्तनेषु च शीता, धूमप्रभायां बहुषु शीता स्तोकेषूष्णा षष्ठ्यां सप्तम्यां च शीतैव । इयं च वेदना सर्वाप्यधोऽधोऽनन्तगुणतया तीव्रा तीव्रतरा तीव्रतमा च । तत्रोष्णवेदना स्वरूपमेवमागमज्ञा' प्रज्ञापयति, यन्मध्यारूढे वासराधीश्वरेऽनभ्रच्छाये विहायसि कस्यापि पुरुषस्य तीव्रतरपित्तप्रकोपपराभूतस्य परितः प्रकामज्वलितहुतवहज्वालामालाव्याकुलितस्य निरातपवारणस्य यादृग्विधोष्णवेदना जायते ततोऽप्युष्णवेदनेषु निरयेषु नारकाणामनन्तगुणा । अपि च यदि ते नैरयिकास्तेभ्य उत्पाट्य प्रज्वलत्खादिरागारनिकरे प्रक्षिप्यन्ते तदा चन्दनलिप्ता इवाननुभूतपूर्वपरमसुखास्वादान्निद्रामपि प्राप्नुवन्ति । शीतवेदनास्वरूपपुनरिति प्ररूपितं श्रीमदार्हतागमे तथाहि–पौषे माघे वा मासे निरभ्रच्छायायां त्रियामायां वपुःकम्पविधायिनि वाति मारुते हिमशिखरिशिखरस्थितस्य प्रावरणविरहितस्य निराश्रयस्य तुषारप्राग्भारपरिषिक्तवपुषः स्थविरतरनरस्य यादृशी शीतवेदना प्रादुर्भवतीति ततोऽपि नारकाणामनन्तगुणिता । किंच ते चेद् यथोक्ते नरस्थाने स्थाप्यन्ते तदा तेऽतीवनिर्वातस्थापिता इव निःशेषशीतार्त्तिविगमतः सुखनिद्रामुद्रितनेत्रा भवेयुरिति । तथा योऽपि बन्धन १ गति २ संस्थान ३ भेद ४ वर्ण ५ गन्ध ६ रस ७ स्पर्श ८ गुरुलघु ९ शब्द १० रूपो दशविधः पुद्गलानां परिणामः सोऽपि तथाविधक्षेत्रस्वाभाव्यादतिदुःखदस्तथाहि–प्रतिक्षणमाहार्य्यैस्तैस्तैः पुद्गलैः सार्द्धं संबन्धलक्षणो बन्धनपरिणामो नारकाणां ज्वलज्ज्वलनयोगादप्यतिदारुणः १ । गतिरपि करभादितुल्या सापि तप्तायःपुञ्जोपरिचरणचङ्क्रमणादपि दारुणतरा २ । संस्थानमतीव हुण्डं छिन्नपक्षपक्षिसदृक्षं दृग्गोचरीभूतमात्रमप्यात्मनो मनोमहोद्वेग

कारकम् ३। भेदः कुडयादिभ्यः पुद्गलानां विगलनं सोऽपि निशितासिधारानिपातादपि दारुणतरः ४। वर्णोऽप्यऽतीवजुगुप्सितः ५। गंधोऽपि मूषकमार्जारभुजगशृगालनकुलादिमृतकतनुसमुत्थगंधादपि शुभेतरः ६। रसोऽपि घोषातकीनिंबनिस्यंदादप्यनंतगुणकटुकः ७। स्पर्शोऽपि वृश्चिकयात्मगुप्तास्पर्शादप्यतिदारुणतरः यतो निरयावासा हि नित्यान्धतमसावृताः सर्वतो द्वारविरहिताः परितोऽपि मलमूत्रश्लेष्मपुरीषरुधिरवशामेदोरूपतापरिणततत्ताहग्विधपूतिगंधिपुद्गलोपलिप्तासिधनुधाराग्रसदृशस्पर्शतलाः समंततोऽपि पितृगेहवदस्थिपिशितकेशदशननखादिरूपपरिणतिपरिणतपुद्गलपटलपरिव्याप्ताश्च पदायकाः १०।

तथाऽन्याऽपि श्रीमदागमे नैरयिकाणां वेदना श्रमणधर्म(१०)भेदा निगदिता तथाहि 'नेरइआणं भंते! कइविहं वेअणपच्चणुभवमाणा विहरंति गोअमा! दसविहं तं जहा—सीअं १ उसिणं २ खुहं ३ पिवासं ४ कंडुं ५ परज्झं ६ जरं ७ दाहं ८ भयं ९ सोगं १०॥' तत्र शीतोष्णे प्रागभिहतस्वरूपे। क्षुधा तु नैरयिकाणां नित्यमवस्थिता तद्वदनविवरे निखिलत्रैलोक्यगतपुद्गलपटलप्रक्षेपेऽपि न क्षीयते। तृषा तु गलतालुलोलाधरशोषविधायिनी निश्शेषनीरनिधिनीरपानेऽपि नोपशाम्यति। कंडूस्तु तेषां क्षुरिकादिभिरप्यनुच्छेदनीया। तथा तेषां पारवश्यमपि सर्वदैव। ज्वरोऽपि तेषां यावज्जीवमत्रत्यज्वरादनंतदुःखदायी। दाहांतकशोका अपि अत्रत्येभ्यस्तेभ्योऽनंतगुणिताः। तथा विभंगज्ञानमपि तेषां परमाधार्मिकविकुर्विततत्तत्प्रहरणकरिष्यमाणवेदनादिभाविदुःखदर्शनान्महादुःखोत्पादकम्। इति भाविता किंचित् क्षेत्रजा वेदना।

अथान्योन्यजनिता किंचिद् विभाव्यते तथाहि—सम्यग्दर्शनिमिथ्यादर्शनिभेदाद् द्विप्रकारा नैरयिकास्तत्र यथेह किल पल्ल्यादिगतकौलेयकाः स्थानांतरात्समागच्छतो रात्रिजागरान्निरीक्ष्य कोपाकुलितचेतोवृत्तयः परस्परं ससंरंभं युध्यंते तथा

मिथ्यादर्शनिनैरयिका अपि विभङ्गज्ञानतो दूरात् परस्पर निरीक्ष्य क्रुत्कृशानुना प्रज्वलतो निर्मायातिघोर रूप वैक्रिय तेष्वेव स्वस्वनरकावासकेषु क्षेत्रानुभावसंभवै' पृथिवीपरिणतिरूपैर्विकुर्वितैर्वा शक्तिकुन्तकृपाणादिभि. प्रहरणै' करचरणरदनादिभिश्च परस्पराभिघातजननाद् विकृततनवो निर्झर निस्वनतः शूनांतर्गतमहिषादय इव रुधिरकर्दमे वेल्लते । सम्यग्दर्शनिनैरयिकास्तु जन्मांतरे नूनमस्माभिः कृत किमपि दुष्कृत येन वयमीदृग्विधे दु खाम्भोनिधौ निमग्ना इति भावयतः सम्यक् सहते परोदीरितान्यसुखानि; न पुनः परेषामुत्पादयति दृष्टकटुविपाकत्वादत एवैतेषां सम्यग्दर्शनिमिथ्यादर्शनिना श्रीपचमाङ्गे १८ शते ५ उद्देशे वेदनाविहितो विशेषो निगदितः । मानसिकासातप्रभूततया तु मिथ्यादृष्टिभ्य' सम्यग्दृष्टयो भूयिष्ठ दु'खाः प्रतिमानिता इत्यन्योन्यविहिता वेदना। परमाधार्मिक निर्मिता तु तप्तायस्त्रपुसीसकपान–प्रतप्तकालायसमयमहिलासमालिंगन–कूटशाल्मल्यग्रसमारोपण–वास्यादितक्षण–लोहघनघात –क्षतक्षारोष्णतैलनिक्षेप–कुन्तादिप्रोतन–भ्राष्ट्रभर्जन–क्रकचपाटन–यन्त्र-परिपीडन–वैक्रियानेककाकोलूककेसर्यादिकदर्थना–ऽसिपत्रवनप्रवेशन–वैतरणीसरित्प्लावन –तप्तवालुकानिकरावतारण–परस्पर-योधन–प्रभृतिका नैकविधाभिधीयते श्रीमदार्हतसमये । किंच कुंभीषु पच्यमाना नैरयिकास्तीव्रतरप्रादुत्कर्षतः पचयोजन शतान्यूर्ध्वमुच्छलते श्रीजीवाभिगमेऽप्युक्त ' नेरइआणुप्पाऊ–कोसो पचजोअणसयाइ । दुक्खेणभिदुआण, वेअणसयसपगाढाण ॥ १ ॥ ' ऊर्ध्वमुत्पत्य निपतत पुनर्विकुर्वितैर्वज्रवदनैः शकुनैस्त्रोट्यते, अवनिनिपतिताश्च विकुर्वित करालशार्दूलादिभिर्विलुप्यते, यतस्ते हि परमाधार्मिकाः पापकर्मकर्मठाः क्रूरक्रियाः क्रूरतरपचाग्निसाधनप्रभृतिक्रियासमा सादिततत्तादृग्विधक्रूरासुरत्वात् स्वयमन्यैरन्याश्च विडम्ब्यमानान् विलोक्य नारकान् केलीकिलतयेहत्य महिषमेषकुर्कुटादिक-

लिविलोककपुरुषा इव हृष्यंति। हृष्टतुष्टचेलोत्क्षेपाट्टहासत्रिपद्यास्फालनादि विदधतितरां ते। किंबहुना ? यथैषामेवं नैरयिककदर्थने निरीक्षणे मनस्तोषो न तथा सुरसुंदरीविरचितचारुप्रेक्षणकप्रेक्षणेऽपि। इति भाविता त्रिविधादिवेदना।

एतासु च सप्तसु पृथिवीषु समुत्पद्यंते संख्यातायुषः पंचेंद्रियाः पर्याप्तास्तिर्यंचो मनुष्याश्च। तेष्वसंज्ञिनः प्रथमां यावद् यांति, सरीसृपास्तु द्वितीयां यावत्, पक्षिणस्तु तृतीयां यावत्, पंचाननास्तु चतुर्थीं यावत्, उरगास्तु पंचमीं यावत्, नार्यस्तु षष्ठीं यावत्, सप्तमपृथिव्यां तु मानवा मत्स्याश्चैव समुत्पद्यंते नान्ये पंचेंद्रियाः। अत्र पुनरसंज्ञिनस्तिर्यंच एव ग्राह्या न पुनर्मनुष्यास्तेषामपर्याप्तत्वेन निरयगतेरभावात्, तथा संज्ञिनो ये निरये समुत्पद्यंते तेषामायुःकृतो विशेषस्तथा च श्रीमदार्हतागमः '**असन्निणं नेरइआउं पगरेमाणे जहन्नेणं दसवाससहस्साइं उक्कोसेणं पलिउवमस्स असंखिज्जइभागं पकरंति।**' तथा तेषां ज्ञानकृतोऽपि विशेषो यद् वृद्धाः असंज्ञिभ्य उत्पद्यमानास्तथाविधमंदतया पर्याप्तावस्थायां नाव्यक्तमप्यवधिसंवेदनमासादयंति। सरीसृपास्तु भुजपरिसर्पा गोधानकुलादयोऽत्रसेयाः। तथा चतुर्थ्यां सिंहो यातीति यदुक्तं तदुपलक्षणं तेन सिंहोपलक्षिता अन्येऽपि चतुष्पदा ग्राह्याः। उरगास्तु सर्पादयो विज्ञेयाः, सरीसृपादयः सर्वेऽपि गर्भजा एव ग्राह्याः। तथा सर्पादयः पक्षिणश्च गृध्रादयो मत्स्यजातयश्चैते प्रायोवृत्त्या निरयादायांति पुनर्विहितपंचेंद्रियप्रतिघातादिपातकाः प्रयांति निरयेषु प्रायोवृत्त्या; न पुनरयं नियमः यतो निरयादाऽऽगता अपि केचनैते संप्राप्य सम्यग्दर्शनादिकं प्राप्नुवंत्येव गतिं शुभतमाम्। सेवार्त्तसंहनिनां पृथिवीद्वयं यावदेव गमनम्। कीलिकासंहननेन तु तृतीयां यावत्। अर्द्धनाराचेन तु तुरीयां यावत्। नाराचेन तु पंचमीं यावत्। ऋषभनाराचेन तु षष्ठीं यावद्। वज्रऋषभनाराचसंहननेन तु सप्तमीं यावद् भवति गमनं

जतूनां महारम्भमहापरिग्रहमांसास्वादनपञ्चाक्षप्रतियातनप्रभृतिमहादुष्कृतनिर्मितिस्वरूपविहितमहामतूनाम् ।

अथैतासु सप्तसु लेश्या विभागेन विभाव्यते, तथाहि–प्रथमद्वितीयपृथिव्योः कापोतलेश्या नवर द्वितीयस्यां क्लिष्टतरा ज्ञेया । एवमन्यास्वपि सजातीयलेश्याऽधोध क्लिष्टतरा क्लिष्टतमा च वाच्या तृतीयस्या केषांचित् प्रथमप्रतरगतानां कापोता उत्कर्षतोऽप्येतस्याः पल्योपमासख्येयभागसमधिकसागरसमानत्रिकस्थितिकत्वात् शेषप्रतरगतानां तु नीला । पङ्कप्रभाया तु नीललेश्यैव । पञ्चम्यां पुन॰ केषांचित् प्रथमप्रतरसस्थितानां नीला उत्कर्षतोप्यस्याः पल्योपमासख्येयभागाभ्यधिकदशो-दधिसमसख्येयसमय यावदवस्थानात् । शेषप्रतरसस्थिताना तु कृष्णा । षष्ठसप्तमपृथिव्योस्तु कृष्णैव एवा अनतरोक्ता नैरयिकाणां द्रव्यलेश्या अवस्थिता विज्ञेयाः भावपरावृत्त्या पुनरेतेषां भवति षडपि लेश्याः । एवमग्रे सुराधिकारेऽपि भाव नीयम् इति भाविताः सप्तविधाः किंचिन्नारकाः ।

अथ किंचित्तिर्यक्स्वरूप प्ररूप्यते श्रीमदार्हतश्रुतानुसारेण तथाहि–तिर्यंचः समय(३)सख्येया भवेयुर्वारिचर–स्थलचर–खेचरभेदात् । तेषु वारिचरा मत्स्यकच्छपग्राहमकरशिशुमारप्रभृतयो विज्ञेयाः । स्थलचारिणस्तु चतुष्पदपरिसर्पभेदाद् द्विविधा । तत्र चतुष्पदाश्चतुर्विधाः प्रोक्ता एकखुरद्विखुरगडीपदसनखपदभेदात् तेष्वेकः खुरश्चरणाधोवर्त्यस्थिविशेषो येषां ते एकखुरास्तुरगादयः । एव द्विखुरा गोप्रभृतय॰ । गडी कमलकर्णिका तद्वद् वृत्ततया पदानि येषां ते गडीपदा दतिप्रभृतय । सनखपदाः पुनः पञ्चाननादयो ज्ञेयाः । परिसर्पास्तु नयन( २ )मेयप्रकारा भुजोरपरिसर्पभेदात् । तेषु भुजपरिसर्पा गोधान-कुलादयः समवसेयाः । उरःपरिसर्पास्तु सर्पगोणसप्रभृतयो विज्ञेयाः । खचरास्तु चर्मपक्षिलोमपक्षिसमुद्गपक्षिविततपक्षि–

भेदाच्चतुष्प्रकारास्तेषु चर्मरूपपक्षधारिणश्चर्मपक्षिणस्ते च चर्मचटकप्रमुखाः प्रकीर्त्तिताः। रोमपक्षिणस्तु राजहंसादयः। समुद्गपक्षिणः पुनः समुद्गाकारपक्षधारिणस्ते च मानुषोत्तरमहीधरबहिर्वर्त्तिनः सर्वदैव विस्तारिताभ्यामेव पक्षाभ्यां ये आसते ते विततपक्षिणः, इति दर्शिताः किंचिदतस्त्रिविधा संज्ञिनस्तिर्यंचः।

अथ मनुजभेदाः प्रादुष्क्रियंते किंचित्तथाहि—कर्मभूमिजाऽकर्मभूमिजांतरद्वीपजभेदेन मनुजास्त्रिप्रकाराः। एते च पंचदशत्रिंशत्षट्पंचाशद्भेदा भवेयुः। तत्र येषु क्षेत्रेषु कृषिवाणिज्यतपःसंयमानुष्ठानादिकर्माणि प्रवर्त्तंते तानि कर्मभूमिशब्देन कीर्त्यंते। तानि पुनर्भरतैरावतविदेहरूपाणि विज्ञेयानि। तेष्वेकं भरतवर्षं जंबूद्वीपे, द्वे च धातकीषंडे, द्वे च पुष्करवरद्वीपार्द्धे; एवं भवंति भरतानि पंच, एवमैरावतविदेहा अपि पंच पञ्च वाच्याः। एतासु पंचदशसु कर्मभूमिषु समुद्भवा मानवाः कर्मभूमिभवा निगद्यंते। अकर्मभूमयस्तु कर्मभूमिविलक्षणाः। तासु पुनर्युग्मधर्मिनरा एव समुत्पद्यंते। केवलकल्पपादपप्रदत्तनेपथ्याहाराद्युपभोगभाजः। एताश्च हैमवतहरिवर्षरम्यकैरण्यवतदेवकुरूत्तरकुरुलक्षणाः षड् जंबूद्वीपे, एता द्विगुणिता धातकीखंडे पुष्करवरद्वीपार्द्धे च। एतासु त्रिंशन्मितासु पुनरकर्मभूमीषु जाता अकर्मभूमिजा मनुजा निगद्यंते।

अथांतरद्वीपस्वरूपं प्ररूप्यते किंचित् तथाहि—भरतवर्षसीमाकारी कनककांतिः पर्वतो हिमवन्नामा पूर्वापरप्रांतयोः प्राप्तो लवणवीचिमालिनि। तस्य च पार्श्वद्वये प्रत्येकं द्वे द्वे दंष्ट्रे विदिग्विस्तृते। तासु पुनरुपरितनभूविभागे सागराद् विदिक्षु योजनशतत्रयमवगाह्य योजनशतत्रयविस्तीर्णाः किंचिदूनैकोनपंचाशदधिकनवशतयोजनपरिक्षेपाश्चत्वारः प्रथमेऽतरद्वीपा भवंत्येकोरुका १ भाषिक २ विषाणि ३ लाङ्गूलि ४ नामानः। एतेभ्यः श्रुति(४)मितेभ्योऽतरद्वीपेभ्यः परतश्चत्वारि योजनशतान्य-

तिर्यक्स्वरूपम्। मनुजस्वरूपञ्च।

वगाह्य चतुर्योजनविस्तारा भवेयुश्चत्वारोऽतरद्वीपा हयकर्ण १ गजकर्ण २ गोकर्ण ३ शकुलीकर्ण ४ नामान॰। एतेभ्योऽपि परतः पचयोजनशतान्यवगाह्य पचयोजनशतव्यासा आदर्शमुख १ मेढकमुखा २ ऽजामुख ३ गोमुख ४ नामानश्चत्वारो द्वीपा भवति। तेभ्योऽपि परतः षड्योजनशतान्यवगाह्य षड्योजनशतविस्तारा अश्वमुख १ हस्तिमुख २ सिंहमुख ३ व्याघ्रमुख ४ नामानः श्रुति(४)मिता द्वीपा भवेयुः। तेभ्योऽपि परत॰ सप्तयोजनशतान्यवगाह्य सप्तयोजनशतविस्तारा अश्वकर्ण १ हरिकर्णा २ कर्ण ३–कर्णप्रावरणाभिधानाश्चत्वारो भवति द्वीपा॰। तेभ्योऽपि परतो वसु(८)मितयोजनशतान्यवगाह्य वसु(८)मितयोजन शतव्यासा उल्कामुख १ मेघमुख २ विद्युन्मुख ३ मेघविद्युद्दता ४ ह्याश्चत्वारो भवेयुर्द्वीपा॰। तेभ्योऽपि परतो नवयोजन शतविस्तारा भवेयुर्वेद(४)माना द्वीपा घनदत १ लष्टदत २ गूढदत ३ शुद्धदत४ नामानः। एव सप्त वेद(४)गुणिता भवेयु रष्टाविंशतिः अतरद्वीपा॰ हिमवति महीभृति। एवमैरवतवर्षसीमाकारिणि शिखरिण्यपि धरिणीधरे भवति वसुविंशति(२८) सम्मिता अंतरद्वीपाः। एव षट्पचाशद् भवति, एतेषु षट्पचाशदतरद्वीपेषु जाता अतरद्वीपजाः प्रोच्यते। एतेषु युगल॰ धर्माणो मनुजास्तत्तद् द्वीपनाम्ना परिवसति। ते च वज्रऋषभनाराचसहनिनः समचतुरस्रसस्थाना इत्यादितत्सुषमावर्णन प्रथमलहर्यां प्रथमतरगे कृत तेन तत एव विलोकनीयम्। एतेषां च पृष्ठिकरडकाश्चतुष्पष्टिसख्याः। तनुमान पुनरेतेषां वसु(८) सख्यानि धनुषां शतानि। आयुः पुनरेषा पल्योपमस्यासख्येयभागः। आहारश्चैतेषा चतुर्थभक्तेन। अपत्यपालन पुनरेषा स्मरशरसमधिकाशीति(८५)दिनानि। उक्त च 'अतरदीवेसु नरा, धणुसयअट्ठुस्सया सया मुइआ। पालति मिहुणभाव, पल्लस्स असखभागाऊ॥ १॥ चउसट्ठीपिट्ठकरडयाण, मणुआण तेसिमाहारो॥ भत्तस्स

चउत्थस्स उ, पणसीइं दिणाणुपालणया ॥ २ ॥' इति एतेष्वपि षट्पंचाशत्स्वंतरद्वीपेषु मनुष्याः कल्पसाल-प्रपूरितसकलचेतोऽभिलाषाः। एतेषु द्वीपेषु पूर्वोक्तेषु च युगलिकक्षेत्रेषु त्रिंशन्मितेषु न दिनपतितमस्विनीपतिग्रहणं, न च यूकामत्कुणदंशमशकादिक्षुद्रजीवकृतोपद्रवः। सर्वथैव तेषु तेषामभावात्। इति भाविताः किंचित्त्रिविधाः संज्ञिनो मनुजाः ॥

अथ चतुर्विधविबुधस्वरूपं प्ररूप्यते। किंचित्तथाहि—भवनपतिव्यंतरज्योतिर्वैमानिकभेदाद्देवाश्चतुर्विधाः। तेषु भवनवासिनो दशविधाः स्वस्वनिकायभेदेन। तथाहि—असुरकुमारा १ नागकुमाराः २ स्वर्णकुमारा ३ विद्युत्कुमारा ४ अग्निकुमारा ५ द्वीपकुमारा ६ उदधिकुमारा ७ दिक्कुमाराः ८ पवनकुमाराः ९ स्तनितकुमाराः १०। एते च मंदरमध्यवर्त्तिरुचकाद्दक्षिणे उत्तरे च पार्श्वे भवंतीति दाक्षिणात्यौदीच्यभेदेन ते प्रत्येकं द्विविधाः। एवं विंशतिभेदा भवंति भवनवासिनाम्। तेषु दाक्षिणात्यानामसुरादीनामेते शचीपतयो यथापर्यायं, तथाहि—चमर १ धरण २ वेणुदेव ३ हरिकांता ४ ऽग्निशिख ५ पूर्ण ६ जलकांताऽ ७ मितगति ८ वेलंब ९ घोषा १० भिधानाः। उदीच्यानां पुनरसुरादीनामेते पुरुहूताः क्रमेण समुदाहृताः श्रीमदार्हतागमे। तथाहि—बलि १ भूतानंद २ वेणुदारी ३ हरिसहा ४ ऽग्निमाणवा ५ ऽविशिष्ट ६ जलप्रभा ७ मितिवाहन ८ प्रभंजन ९ महाघोष १० नामानः। एषामन्यतरोऽपि सुरपतिर्जंबूद्वीपमातपत्रं, मंदरं च दंडं निर्मातुमलंकर्मीणः निर्माय च धर्तुं वामहस्तेनाऽपि चैवं कुर्वतस्तस्य देवपतेः कश्चिद्व वपुर्व्यायामः।

अथैषां प्रत्येकं कश्चिच्छक्तिविशेषो निगद्यते। तथाहि—दाक्षिणात्यासुरकुमारेश्वरश्चमरः पुरयितुमलं सकलं भूमंडलं जंबूद्वीपादारभ्य चमरचंचां यावदसुरतत्कुरंगनेत्राभिः ॥ १ ॥ धरणः पन्नगाधिपतिस्तु जंबूद्वीपं फणमंडपेनाऽऽच्छादयितु-

मलम् ॥ २॥ एव जम्बूद्वीपाभिधान सर्वत्र प्राग्र वेणुदेवः पक्षेणाऽऽच्छादयितुम् ॥ ३॥ हरिकांतो विद्युता प्रकाशयितुम् ॥ ४॥ अग्निशिखोऽग्निज्वालयैकयाऽपि ज्वालयितुम् ॥ ५॥ पूर्णपाणिस्तलेनैकेनाप्याऽऽच्छादयितुम् ॥ ६॥ जलकांतस्त्वेकेनाऽपि जलकल्लोलेन पुरयितुम् ॥ ७॥ अमितगतिस्तु पादपार्ष्ण्या कपयितुम् ॥ ८॥ वेलम्बस्त्वेकया वातलहर्याऽभिवाप्तुम् ॥ ९॥ घोषस्त्वेकेनाऽपि स्तनितध्वनिना पूरयितुमल जम्बूद्वीपम् ॥ १०॥ उदीच्येषु तु शचीपतिषु पूर्वोक्ता शक्तिरधिकतरा विज्ञेया। तिर्यक् तु स्वकीयरूपैरेषां विंशतिमप्यादेकोऽप्यसंख्येयान् द्वीपोदधीन् पूरयितु समर्थः। एते पुनरसुरप्रभृतयः कुमाराऽऽकारत्वात् कुमारवत् क्रीडाप्रियत्वाच्च कुमारा इति कीर्त्यंते ॥

अथैषां चिह्नानि निगद्यते। असुरकुमाराः शिरःशेखरेषु चूडामणिचिह्नाः। नागकुमारा अलकारेषु फणचिह्नाः। एव सर्वत्रभूषणेष्विति वक्तव्य। सुपर्णकुमारादीनां क्रमेण सौपर्णेय ३ कुलिश ४ पूर्णकलश ५ केसरि ६ तुरग ७ सिंधुर ८ मकर ९ शरावसपुटानि १० चिह्नतया ज्ञेयानि।

अथैषां वर्णविभागो निगद्यते। असुरकुमाराः श्यामाः। नागोदधिकुमाराः पाण्डुराः। सुपर्णकुमारदिक्कुमारस्तनितकुमाराः कनकवर्णाः। विद्युत्कुमाराऽग्निकुमारद्वीपकुमाराः पुनररुणा उत्तप्तस्वर्णवत् किंचिद्रक्ताः। पवनकुमाराश्च प्रियगुवर्णांगरुचयः।

अथैतेषां वसनवर्णविभागः कीर्त्यंते। असुराणां वस्त्राणि शोणवर्णानि, नागोदधिसौदामिनी, द्वीपवह्निकुमाराणां पुनर्नीलानि। दिक्स्तनितवैनतेयकुमाराणां तु श्वेतानि। समीरकुमाराणां पुनः सन्ध्यारागसदृग्द्युतीनि।

अथैतेषां सामानिकात्मरक्षकसुरसंख्या निगद्यते–चमरपुरुहूतस्य चतुःषष्टिः सहस्राणि सामानिकासुराणां बलेस्तु षष्टिसह-

स्राणि, धरणप्रभृतिपुरंदराणां तु षट् षट् सहस्राणि सामानिकनाकिनाम् आत्मरक्षास्तु सर्वेषामपि सामानिकेभ्यश्चतुर्गुणा विज्ञेयाः ।

अथैषां निवासस्थानं निगद्यते—रत्नप्रभापृथिव्या अध उपरि च योजनसहस्रं विमुच्यैतेषां निवासोचितानि भवनानि भवंति तानि पुनर्लघूनि जंबूद्वीपकल्पानि, मध्यमानि पुनः संख्येययोजनकोटीकोटिव्यासानि, उत्कृष्टानि पुनरऽसंख्येययोजनकोटीकोटीविस्तराणि । एतानि सर्वाण्यपि मध्ये चतुरस्राणि बहिर्वर्तुलानि । अथ च कमलकर्णिकाऽऽकाराणि । पंचवर्णमणिमयानि अट्टालकसमलंकृतयंत्रशतशोभितप्रोत्तुंगप्राकारपरिवेष्टितानि, जलधिजलगंभीरपरिखापरिकलितानि प्रतोलीविनिवेशिरत्नमयकपाटसंपुटानि । किंकरामरनिकरपरिरक्षितानि द्वारप्रतिद्वारतोरणगणवंदनकलससंशोभितानि । रत्नमयपांचालिकापरिकलितस्तंभशतविभ्राजितानि । नानारत्ननिकरपरिपूरितानि परितो विकीर्णपंचवर्णपुष्पप्रकराणि बहुविधसुगंधिद्रव्यमिश्रितसुरभितरगोशीर्षचंदनद्रवपरिषिक्तानि । हरिचंदनदत्तपंचांगुलितलानि दह्यमानमानातिगतुरुष्ककृष्णागरुमघमघायमानानि पुष्करिणीशतशोभितोद्यानोपवननानाखेलनखेलमानसकलत्रसुमनःसमुदयानि, स्थानं स्थानं प्रारब्धपट्‌त्रिंशद्भाषोपनिबद्धगीतध्वनिजनितश्रुतिसौख्यानि, वाद्यमानवेणुवीणाचंगमृदंगादिरवविरचितशब्दाद्वैतानि । प्रमदप्रसरोद्वेलविमलतममणिमयकंकणनूपुरविराजमानकरचरणसुरहरिणेक्षणाविनिर्मितनयनामृतवर्षभूतसविलासलास्यानि । अनवरतमुदितदैवतनिवहसंताड्यमानगंभीरदुंदुभिस्वरसमाणाभ्यंतराणि । दशदिग्विस्तृतसमुदितदिनपतिशतसमधिकतेजःपुंजदुरवलोकनीयतराणि । कृतसुकृतशतसंचयकृतिजनप्रापणीयानि । मनोनयनानंदसुखदायकानि । प्रत्येकं च रत्नमणिमयवसुसमधिकशत( १०८ )प्रमितश्रीमदर्हत्प्रतिमितिसमलंकृतश्रीमज्जिनसदनपावनपावनीभूतानि । किंबहुना ? सामरूपेन रसनाशतेनाप्यनिर्वचनीयस्वरूपाणि तानि

भवनानि भवनवासिनां देवानाम् ।

अथैषां सख्या निगद्यते। असुरादीनां त्रयाणा निकायानां दाक्षिणात्यानां क्रमेण चतुस्त्रिंशच्चतुश्चत्वारिंशदष्टत्रिंशल्लक्ष सख्यानि भवनानि भवेयुः। विद्युत्कुमारप्रभृतीना तु पचनिकायाना चत्वारिंशल्लक्षाणि। वायुकुमाराणा तु पचाशल्लक्ष सख्यानि। स्तनितकुमाराणा तु चत्वारिंशल्लक्षाणि भवति भवनानाम्, उदीच्याना पुनरसुरादिनिकायानामेतान्येव चतुश्चतुर्लक्ष-हीनानि विज्ञेयानि। उभयनिकायभवनसख्यामीलने तु द्विसप्ततिलक्षमधिका. सप्तकोटयो भवेयुस्तावतानाम्। उक्त किंचिद् भवनपतिदैवतस्वरूपम्।

अथ व्यतर सुरस्वरूप लिख्यते लेशतस्तथाहि-रत्नप्रभाया' प्रथमयोजनमहस्रेऽध उपरि च योजनशतन्यूनें व्यतरसुराणा मनोहरतराणि पूर्वोक्तभवनप्रकाराणि नगराणि भवन्त्यसख्येयानि रत्नमयानि तानि पुनर्महाति जबूद्वीपसमानानि, मध्यमानि महाविदेहमानानि, लघूनि पुनर्भरतवर्षप्रमाणानि। तेषु पुनर्नगरेषु व्यतरसुराणा भवति वसु(८)मिता निकाया' पिशाच १ भूत २ यक्ष ३ रक्षः ४ किंनर ५ किंपुरुष ६ महोरग ७ गधर्व ८ नामान। एतेऽपि दाक्षिणा उदीच्या इति भव-न्त्येतेषां षोडशभेदाः। एतेषा च मध्ये दाक्षिणात्याना पिशाचादीनामेते वसु(८)मिता सुरपतयस्तथाहि-काल १ सुरूप २ पूर्णभद्र ३ भीम ४ किंनर ५ सत्पुरुषा ६ ऽतिकाय ७ गीतरुचि ८ नामान'। उदीच्याना पुनः पिशाचादीनां महाकाल १ प्रतिरूप २ माणिभद्र ३ महाभाग ४ किंपुरुष ५ महापुरुष ६ महाकाय ७ गीतयशो ८ ऽभिधाना भवेयुर्नाकिनायकाः। अथैषा चिह्नानि निगद्यते तथाहि-पिशाचादीनामानुपुर्व्या कदब १ सुलस २ वट ३ खट्वागाऽ ४ शोक ५ चपक ६ नाग ७

तुबरुं ८ लक्षणानि ध्वजेषु चिह्नानि भवंति। एतेषां मध्ये खट्वांगविवर्जिताः, सर्वेऽपि वृक्षविशेषा विज्ञेयाः। खट्वांगस्तु तापसविशेषाणामुपकरणविशेषः। अथैषां व्यंतराणां वर्णविभागो विभाव्यते, तथाहि–यक्षपिशाचमहोरगगंधर्वाः श्यामाः किंचित् कृष्णाः। किंनरास्तु श्यामा अपि किंचिन्नीलदेहद्युतयः। रक्षः किंपुरुषनिकायव्यंतरसुरास्तु श्वेताः। भूतास्तु कालतनुकांतयः प्रतिनिगदिताः ४ संस्थिता अष्टौ व्यंतरसुरनिकायाः। अथान्येऽपि प्रथमपृथिवीप्रथमयोजनशते भवंति वसु(८)संख्येया निकायास्तथाहि। अप्रज्ञप्ति १ पंचप्रज्ञप्ति २ ऋषिवादित ३ भूतवादित ४ क्रंदित ५ महाक्रंदित ६ कूष्मांड ७ पवका ८ ज्ञेया। एतेऽपि चापाचीना उदीचीना इति भवेयुरेषामपि षोडशप्रकाराः। एषां मध्ये दाक्षिणानामप्रज्ञप्तिप्रभृतीनामेते व्यंतरेश्वरास्तथाहि–सनिहित १ धातृ २ ऋषि ३ ईश्वर ४ सुवत्स ५ हास ६ श्वेत ७ पवक ८ नामानः। उत्तराणां तु सामानिक १ विधातृ २ ऋषिपालक ३ महेश्वर ४ विशाल ५ हासरति ६ महाश्वेत ७ पवकपत्य ८ भिधानाः। अथैतेषां द्वात्रिंशत्संख्यानामपि व्यंतरपतीनां सामानिकाऽऽत्मरक्षसंख्याऽभिधीयते। एतेषां श्रुति(४)मितानि सहस्राणि सामानिकानां, षोडशसहस्राण्याऽऽत्मरक्षव्यंतराणाम्, उक्तं किंचिद् व्यंतरसुरस्वरूपम्।

अथ ज्योतिष्कानां किंचिद् वक्तव्यता प्रस्तूयते। तत्र ज्योतिष्कविमानानि तिर्यग्लोके, स चाऽष्टादशयोजनशतोत्सेधः ततः समभूतलात् कियद्दूरे चंद्रादिविमानानीत्युच्यंते मंदरांतर्गतवसु(८)मितप्रदेशाऽऽत्मगोस्तनाकाररुचकसमानाद् भूतलाद्दशन्यूनेभ्यो वसु(८)मितयोजनशतेभ्य आरभ्योपरि दशोत्तरयोजनशते ज्योतिश्चक्रम्। तत्र ज्योतिश्चक्रस्य सर्वाधस्तनतलादूर्ध्वं योजनदशकेन सममहीतलापेक्षया संपूर्णैरष्टभिर्योजनशतैरतिक्रांतैस्तिग्मद्युतेर्मंडलं, तदुपरि चाऽशीतियोजनव्यतिक्रमे

हिमरश्मेर्विमानसमक्ष्मातलात्तु वसु(८)मितैर्योजनानां शतैरशीतिसमधिकैः। नक्षत्राणां तु मध्ये सर्वेषामधोभागे भरणीनक्षत्र चार चरति, उपरि पुनः सर्वेषा स्वातिधिषण्य सर्वेषा बहिस्तु मूलम्, अभ्यतरे पुनरभिजित्। केचित् पुनरेवमाहुः समभूतलान्न वतिसमधिकानि सप्तयोजनशतानि गत्वा भवति विमानानि, तारनिकरस्य तारकनिकरस्य चोपरि योजन दशशतकव्यतिक्रमे भवेयुर्वासरपतीनां विमानानि, तेषामुपरि चाशीतियोजनातिक्रमे भवति विमानानि कुमुदिनीनायकाना, तेषां चोपरि योजन-चतुष्कव्यतिक्रमे भवति धिषण्यानां विमानानि, तेषा चोपरिष्टात् श्रुति( ४ )मितयोजनातिक्रमे बुधग्रहस्य विमानम्, तदुपरि च योजनत्रिकातिक्रमे शुक्रस्य विमानम्। एवमुपर्युपरि योजनत्रयगमने क्रमेण सुरगुरुधरणीसुतरविसुतानां विमानानि भवति। एव सर्वेषा मीलने दशोत्तर योजनशत भवति ज्योतिश्चक्रस्य चारक्षेत्र। एतज्ज्योतिश्चक्र मनुष्यक्षेत्रान्तश्चर तद्बहि स्तु स्थिर चरन्तु मदरस्य परितो योजनानामेकविंशतिसमधिकान्येकादशशतान्यतर निर्माय चरति स्थिर पुनस्तेषामेकादशो-त्तराण्येकादशशतान्यतर कृत्वाऽलोकस्य तिष्ठति। तत्सन्निधानवर्ति इमानि पुनश्चद्रादीनां विमानान्यर्धीकृतकपित्थसस्थानानि। एतत् सस्थानसस्थितानि पीठानि विमानाना ज्ञेयानि। तदुपरि च चद्रादीना प्रासादास्ते च तथा कथचिद् व्यवस्थिता यथा पीठैः सह तेषां प्रायो वृत्तसस्थान स्यात्तच्च दूरतया समवर्तुलसस्थित प्रतिभाति। तथैतानि स्फटिकमणिमयानि लवणाऽर्णवे तु तथा जगत्स्वाभाव्यादम्भःस्फटिकमयानि। अत एव तेषां लवणशिखान्तश्चरता न जलनिर्मितो व्याघात.। तथै-तान्यऽसख्येयेभ्योऽपि व्यतरनगरेभ्यः सकाशात् सख्येयगुणानि।

अथैषां प्रपचादिप्रमाण प्ररूप्यते। तथाहि–प्रमाणांगुलेन निष्पन्न योजन बुद्धयैकषष्टिभागी क्रियते। तादृशाः षट्-

पंचाशदेकपष्टिभागीकृतयोजनभागाः प्रमाणं हिममयूखविमानस्य, अष्टचत्वारिंशत्तु सहस्रांशोः । ग्रहाणां तु विमानानि गव्यूतद्वयं, नक्षत्राणां तु गव्यूतमेकं, ताराणां पुनर्गव्यूतार्द्धमेतत् प्रमाणमायामविस्ताराभ्यां ज्ञेयं ज्योतिष्कविमानानाम् । एतदर्द्धं पुनरेषामुत्सेधमनुष्यक्षेत्रानुवहिस्थितस्य ज्योतिश्चक्रस्य विमानानामुक्तप्रमाणस्याऽर्द्धं विज्ञेयमायामादिषु । एते पुनर्ज्योतिष्काः पंचविधाश्चंद्राः सूर्या ग्रहा नक्षत्राणि ताराश्च । एते च यथोत्तरं शीघ्रगतयो महर्द्धयस्तु वैपरित्येन । एतेषां मध्ये ताराः पंचवर्णाः शेषाः पुनरुत्तप्ततपनीयदेहदीधितयः । सर्वेऽपि चैते विशिष्टनेपथ्यमंडिताः मौलिममलंकृतमौलयश्च । केवलं चंद्रमसां मुकुटाग्रभागे प्रभामंडलस्थानीयं चंद्रमंडलाकारं चिह्नम्, एवं वामरेश्वरादीनामपि मुकुटाग्रभागे स्वस्वमंडलाकारं चिह्नं वाच्यम् । एतानि ज्योतिष्कविमानानि तथाविधजगत्स्वभाव्यान्निरालंबनान्यपि चरंति, तथाप्याभियोगिका देवास्तथाविधाभियोगिकनामकर्मोदयात् समानजातीयानां हीनजातीयानां च तेषामितरेषां पुरतो निजस्वामिकर्मकर्मठतया वयमेतस्य माननीया इति स्वस्वामिमान्यतां प्रादुष्करणेनाऽत्यंतमुदितचित्ताः सततं वहनशीलान्यपि विमानान्यधः स्थित्वास्थित्वा सिंहादिरूपधारिणो वहंति, यथा कश्चिद्दामत्वमनुभवन्नपि अहमस्य सम्मत इति निजसमृद्धिदर्शनार्थे स्वोचितस्वस्वामिकर्म कुरुते, एवं तेऽपि देवाश्चंद्रादीनां विमानानि वहंति । तत्र चंद्रविमानं षोडशसुरसहस्राणि वहंति ते चैवं चत्वारि सहस्राणि केसरिरूपधारिणां सुराणां प्राक्तनपार्श्वे, एवं चत्वारि सहस्राणि करेणुरूपधारिणां दक्षिणे पार्श्वे, चत्वारि च वृषभरूपधारिणां पश्चिमतश्चत्वारि च तुरंगरूपधारिणामुत्तरतः, एवं भवति विधुविमानवाहकदेवानां षोडशसहस्राणि । एवं रविविमानवाहकानामपि षोडशसहस्राणि वाच्यानि । ग्रहविमानवाहकनामप्येवं वसु( ८ )संख्यानि सहस्राणि ज्ञेयानि । नक्षत्राणां तु

चतु सहस्राणि। तारकाणा पुनर्द्वे सहस्रे। एतेषा पचविधज्योतिष्काणां मध्ये चद्रसूर्याख्यौ द्वौ इद्रौ तत्रैकस्य कुमुदबधो मंगलप्रभृतयोऽष्टाशीतिर्ग्रहा अभिजित्प्रभृतीनि च नक्षत्राणि चतुर्विंशति( २८ )मितानि तारककोटीकोटीनां च षट्षष्टि सहस्राणि नवशतानि पचसप्ततिश्च भवति परिवारः। ननु मनुष्यक्षेत्रात' सर्वसख्यया चद्रमसा द्वात्रिंशदधिक शत स्यात् एकै कस्य च चद्रस्य चेदतावत् सैन्य भवेत्तर्हि कथ पचचत्वारिंशद् योजनलक्षमाने मनुष्यक्षेत्रे तत् माति? उच्यते इह द्वे मते तत्रैक सूरयः कोटीनामेव कोटीकोटीति सज्ञान्तर मन्यते। तेनैतास्ताराणां कोटय एव ग्राह्या न तु कोटीकोटयस्तथा पूर्वाचार्य-प्रसिद्धे'। अन्ये पुनरेवमाहुः। 'नगपुढविविमाणाईं मिणसु पमाणगुलेण तु' इति वचनात् प्रमाणांगुलनिष्पन्नानां ताराविमानानां स्वरूपेण यथोक्तसख्या' कोट्य एव सति पर यदा उत्सेधांगुलेन सर्वतो मीयते तदा यथोक्तमाना' कोटीकोटीया जायते इति। तत्त्व तु पचमावबोधिनो विदति।

एषा पुनरष्टाशीतिग्रहाणा मध्ये राहुर्द्विप्रकारः पर्वराहुर्नित्यराहुश्च, तेन तयो. स्वरूपमुच्यते। तथाहि–पर्वराहुः कदाचिदागत्य निजविमानेन शशिविमान सूर्यविमान वा तिरोधत्ते। तिरोहिते पुनरस्मिन् जनाना ग्रहणमिति प्रतीतिः। स ज जघन्येन षट्सु मासेष्वतिक्रातेषु शशिन' सूर्यस्य च करोत्युपरागम्। उत्कर्षतस्तु चद्रमसो द्विचत्वारिंशन्मासेषु समतिक्रांतेषु सहस्रांशोः पुनरष्टचत्वारिंशत्परिवत्सरेषु समतीतेषु विधत्ते पर्वराहुर्निजविमानेनाच्छादनम्, नित्यराहुविमान तु कृत्स्न सर्वकाल कलाभृद्विमानाद्धाऽविरहित चतुर्भिरंगुलैरप्राप्त च चद्रविमानास्याऽधस्ताच्चार चरति। तच्चैव प्रतिपद आरभ्य प्रतिदिनमेकैकां कुमुदिनीपतिमडलकलां बहुलपक्षे समावृणोति सौवपचदशभागेन शुक्लपक्षे तु प्रतिपद आरभ्य तथैव मुचति, इह

चायं संप्रदायः द्वाषष्टिभागीकृतस्य चंद्रविमानस्य द्वौ भागौ सर्वदैवाऽनावार्यौ, शेषाणां षष्टिभागानां पंचदशभिर्विभजने लब्धाश्चत्वारो भागास्ते चोक्तनीत्या प्रतिदिनमाच्छाद्यंते मुच्यंते च । एवं च जगति तद्बिंबस्य वृद्धिहानी प्रतिभासेते । ननु तुहिनद्युतिविमानस्य पंचमानैकषष्टिभागोनयोजनप्रमाणत्वात्तमोविमानस्य च ग्रहविमानत्वेनाऽर्द्धमानत्वात् कथं सैंहिकेयविमानेन कुमुदिनीपतिविमानाऽऽच्छादनं ? उच्यते ग्रहविमानानामुक्तप्रमाणस्य प्रायिकत्वात् राहुविमानमधिकमानमपि संभाव्यत इत्यदोष इत्येके । अन्ये पुनरेवमाहुर्लघीयसोऽपि सैंहिकेयविमानस्यातीवबहलेन कृष्णतरकिरणनिकरेण प्रसर्पता महदपि हिमद्युतिविमानमाव्रियत इति ।

अथ तारकविमानानामंतरं प्ररूप्यते । तथाहि-पर्वतादिस्खलनरूपे व्याघाते द्वादशयोजनसहस्राणि द्विचत्वारिंशदधिकं द्विशतसमधिकान्यंतरमुत्कृष्टं स्यादेतच्च मंदरमपेक्ष्य भावनीयं, तथाहि-मेरुर्दशयोजनसहस्राणि पृथुस्तस्य चोभयतः प्रत्येकमेकविंशतिसमधिकान्येकादशशतान्यऽबाधा । सर्वमीलने जातं यथोक्तमंतरमुत्कृष्टं । व्याघाते जघन्यं पुनरंतरं षट्षष्टिसमधिके द्वे शते योजनानि । एतच्च निषधकूटाद्यपेक्षं तथाहि-निषधभूधरश्चत्वारि योजनशतान्युत्सेधतस्तस्य चोपरि शिखराणि पंचयोजनशतोच्चानि तानि पुनरायामविष्कंभाभ्यां मूले पंचयोजनशतानि मध्ये त्रीणि पंच सप्तत्यधिकानि ३७५ उपरि च सार्द्धयोजनशते तेषां च कूटानामुपरितनभागस्य समश्रेणिप्रदेशे तथाजगत्स्वाभाव्यादुभयतोऽष्टौ अष्टौ योजनान्यंतरचरणरूपामबाधां विधाय परिभ्रमंति तारकविमानानीति जातं सर्वमीलने जघन्यमंतरं यथोक्तरूपं व्याघाते । पर्वतादिव्याघाताभावे पुनस्ताराविमानानां जघन्यमंतरं पंचधनुःशतानि, उत्कृष्टं तु द्वे गव्यूते ।

अथ नरक्षेत्रे शशिसूर्याणां प्रतिदिनमपरापरमंडलेषु परिभ्रमणतोऽवस्थितांतरत्वात्तद्बहिर्वर्त्तिनां तेषां घटाकारावस्थिता-नामंतरालप्रमाणमुच्यते । तथाहि—मनुष्यक्षेत्राद् बहिः शशिनः सकाशात्सूर्यस्य सूर्याच्च चंद्रमसः पंचाशद्योजनसहस्राण्यंतरम् एकस्माद्विधोः सकाशाद् द्वितीयविधोरेकस्मादहिमद्युतेश्च द्वितीयाहिमद्युतेः साधिकयोजनलक्षमंतरं प्ररूपितं श्रीमदार्हतागमे । एतच्चांतरं पूर्वोक्तयोः पंचाशद्योजनसहस्ररूपयोर्द्वयोरंतरयोर्मीलने मध्यस्थायिनो नभोमणिविमानस्य विधुविमानस्य वा संबंधिनो विष्कंभस्य प्रक्षेपे च स्यात् ।

सांप्रतं द्वीपोदधिषु शशिसूर्यसंख्याऽभिधीयते । तत्राऽपि प्रथमं तेषामेव प्रमाणमुच्यते तच्च सूक्ष्मोद्धारसागरसमानसार्द्धद्वितसमयैः स्यात्, तेन तत् स्वरूपं प्रथमलहरीप्रथमतरंगप्रोक्तमपि प्रस्तावागतत्वात् किञ्चिदुच्यते तथाहि—आयामविष्कंभाभ्या-मवगाहेन चोत्सेधांगुलनिष्पन्नैकयोजनमानो वृत्तसंस्थानः पल्यं एकदिनादिसप्तदिनयावज्जातयुगलजमनुजमूर्धमूर्धजैर्निबिडतरं तथा पूर्यते यथा कृशानुरपि न दहति पवनोऽपि नापहरति जलमपि न प्रवाहयति तद्वालाग्राणि । ततश्च प्रतिसमयमेकैक-वालाग्रापहारेण यावद्भिः समयैः स पल्यो निर्लेपः स्यात्तावत्समयमानमुद्धारपल्योपमं बादरम् । एतेषां च दशकोटीकोटी भिरुद्धारसागरसमं स्याद्बादरं, बादरे च प्ररूपिते सूक्ष्मं सुखावसेयं स्यादिति बादरोद्धारपल्योपमसागरोपमप्ररूपणं; न पुनरनयोः प्ररूपणे किंचिदपरं विशिष्टं प्रयोजनम् । अथ सूक्ष्मयोस्तयोः प्ररूपणा क्रियते । तान्येव वालाग्राणि प्रत्येकमसंख्येय-खंडीक्रियते । तानि च खंडानि द्रव्यतः प्रत्येकमत्यंतशुद्धलोचनः छद्मस्थो यदतीव सूक्ष्मं पुद्गलद्रव्यं चक्षुषा पश्यति तद संख्येयभागमात्राणि । क्षेत्रस्तु सूक्ष्मपनकशरीरं यावति क्षेत्रेऽवगाहते ततोऽसंख्येयगुणानि बादरपर्याप्तपृथिवीकायिकतनुतुल्या-

नीति वृद्धाः । ततः प्रतिसमयमेकैकखंडापहारेण सकलोऽपि पल्यनिर्लेपनाकालः संख्येयसंवत्सरवत्कोटीप्रतितः सूक्ष्म-उद्धारपल्योपम एषां च दशकोटाकोटीभिः सूक्ष्ममुद्धारसागरोपमम् । एतस्मिंश्च सूक्ष्मे सार्द्धे उद्धारसागरद्वैते यावंतः समया-स्तत्समयसमानाः सर्वेऽपि द्वीपपाथोनिधयो द्विगुणद्विगुणविस्ताराः प्रथमवर्जं सर्वेऽपि चलयाकाराश्च । एतेषां च द्वीपोदधीनां मध्ये प्रथमो जंबूद्वीपश्चरमश्च स्वयंभूरमणः । जंबूद्वीपस्तु वृत्तस्तैलापूपसंस्थितो योजनलक्षमानश्च । अस्मिंश्च कनकरत्नरजत-मयोऽनादृताभिधानतद्द्वीपाधिपतिसुरनिवासस्थानभूत उत्तरकुरुवर्त्ती जंबूनाम्ना तरुः शाश्वतः समस्ति पार्थिवः । अपरेऽपि तत्र देशे बहवो जंबूवृक्षाः सश्रीकाः संति, अत एतस्याभिधानं जंबूपलक्षितो द्वीपो जंबूद्वीपः । सनातनं चैतदभिधानमेवमऽग्रे-तनानामपि धातकीखंडादीनां वाच्यम् । जंबूद्वीपस्याऽधिपतिरनादृतो लवणजलधेस्तु तत्परिवेष्टनकारी सुस्थितो द्वितीयः पुनरेतद्द्वीपाधिपतिदेवावासभूतपूर्वापरार्द्धद्वयसंस्थितधातकीमहाधातकीतरुसमुपलक्षितो धातकीखंडाऽऽख्यो द्वीपः परिवेष्टय लवणजलधिं स्थितः । अस्य च स्वामिनौ सुदर्शनप्रियदर्शनाभिधानौ देवौ । एवमग्रेतनेष्वपि द्वीपोदधिषु पूर्वापरार्द्धयोर्द्वौ द्वौ स्वामिनौ वाच्यौ । अरुणोदं यावच्चैते सर्वेऽपि पल्योपमस्थितयः । एतत् परिवेष्टनकारी च कालोदजलनिधिः । एतस्यापि परिवेष्टनकृत्तृतीयः पुष्करवरद्वीपः । पुष्करं पद्मं तदुपलक्षित इति कृत्वा । अस्य चार्द्धे मनुष्यसीमाकारी मानुषोत्तरमहीधरः । अर्द्धं चैतस्य द्वीपस्य तत्परतः । अस्य च परिक्षेपकारी पुष्करवरसागरः । एवमग्रेतनेष्वपि द्वीपेषु द्वीपसमानाभिधानाः समुद्रा वाच्याः । तुरीयस्तु वारुणीवरद्वीपः आगमे तु वरुणवर इति वीक्ष्यते । पंचमो द्वीपः क्षीरवरः । षष्ठसप्तमौ तु घृतवरेक्षुरसौ एतेषु श्रुति( ४ )मितेष्वपि द्वीपेषु द्वीपाभिधानसमानरसवारिसमापूरितत्वाद् द्वीपनामभिरेव सागरा अपि वक्तव्याः ।

द्विपञ्चाशत्सिद्धायतनेषु चतुर्विधसुराश्चातुर्मासिकसांवत्सरिकजिनजननादिमहामहेष्वष्टाह्निकामहिमानं कुर्वन्तः सुखेनासते, तदेव नद्या समृद्ध्या ईश्वरः स्फातिमान् नतु नाम्नैवेति नदीश्वरः । अय चाष्टमद्वीपः । नवमः पुनरशोकवीतशोकाभिधानयोः पूर्वापरार्द्ध तयोः सर्ववज्ररत्नमयपर्वतप्रभृतेश्च प्रभयारुणत्वादरुणो, दशमस्त्वरुणवरः, एकादशोऽरुणवरावभासः, द्वादश कुंडलस्त्रयोदश कुंडलवरश्चतुर्दशः कुंडलवरावभास एतानि पुनर्जंबूद्वीपादारभ्य क्रमेणाऽभिधानानि । अत ऊर्ध्वं शंखरुचक-भुजगकुशक्रौंचादिनामभिर्द्वीपाम्भोनिधयो ज्ञेया यथा कथञ्चित्; परं तेऽपि सर्वे शंखः शंखवरः शंखवरावभास इत्येवं त्रिप्रत्यवतारा विज्ञेयाः । एते च हारार्द्धहारप्रभृत्यलङ्कारचीनांशुकपट्टांशुकाद्यंशुकघनीलोत्पलाद्युत्पलतिलकपद्मनिधानजल-कांतचंद्रकांतादिमणिविधानहिमवदादिवर्षधरमहीधरपद्महृदादिमहाहृदमंदाकिनीसिंधुप्रभृतिशैवलिनीकच्छादिविजयवक्षस्कार-सौधर्मादिकल्पवासदेवकुरूत्तरकुरुमंदिरतिर्यग्लोकवार्त्तिशक्राद्यावासकूटाभिजित्प्रभृतिनक्षत्रशशिसूर्यप्रभृतिप्रशस्तवस्तुनामभिर-भिधेयाः । परं ते सर्वेऽपि देवद्वीपादर्वाक् सूर्यवरावभाससागरं यावत् पूर्वोक्तविधिना त्रिप्रत्यवतारा च विज्ञेयाः प्रत्येक-मेकनाम्नाऽसंख्येयाश्च ततः परं देव १ नाग २ यक्ष ३ भूत ४ स्वयंभूरमणाभिधानाः पञ्च प्रत्येकमेकैका एव विज्ञेया न पुनस्त्रिप्रत्यवतारा नापि पूर्ववत् प्रत्येकमसंख्येयाः । अय भावः यथा जंबूलवणादिनामभिः प्रत्येकमसंख्येया द्वीपोदधयः संति तथा न देवादिमंदर( ५ )मितनामभिरपरो द्वीपः सागरो वा विद्यत इत्यर्थः । एतेषां समुद्राणां मध्ये लवणजलधौ लवणादपि क्षारतरं नीरं, वारुणीवरे तु वारुणी मदिरा, सा च सुजातपरमद्रव्यसन्मिश्रा ततोऽपि मधुरतररसं सलिलं, क्षीरवरे तु मधुधूलिमिश्रितत्रिभागावर्त्तितक्षीरादपि मनोहरतरास्वादमुदकं, घृतवरे तु शारदिकसुरभितरहैयंगवीनादपि रम्यतररस

५

सलिलं, कालोदे पुष्करवरसागरे स्वयंभूरमणार्णवे च पयोदमुक्तोदकास्वादसमः, शेषेषु पुनर्नंदीश्वरादिसागरेषु सर्वेष्वपि सद्यस्केक्षुरससदृशरसं नीरं, लवणार्णवे पुनः पञ्चयोजनशतमाना मकरकच्छपाद्या मत्स्यजातयः, कालोदे तु सप्तयोजनशतमानाः, स्वयंभूरमणार्णवे तु दशयोजनशतमानाः । एतच्च 'सरीरमुस्सेहअंगुलेण तहा' इति संग्रहिणीवचनादुत्सेधांगुलनिष्पन्नयोजनरूपं मानं विज्ञेयम् । विशेषश्चात्र लवणार्णवे योनिप्रभवा जातिप्रधानाः सप्तकुलकोटिलक्षाः कालोदेन च स्वयंभूरमणे पुनरर्द्धत्रयोदश, शेषेषु पुनः पाथोनिधिषु स्वल्पा एव मत्सजातय इति । इति प्रसंगागतं द्वीपोदधिस्वरूपं किञ्चित् प्रपंच्य प्रक्रांतमेव प्रतन्यते ।

द्वौ शशिनौ द्वौ च दिनकरौ जंबूद्वीपे, लवणार्णवे तु द्विगुणिताः शशिनः सूर्याश्च, धातकीखंडे तु द्वादशहिमांशवोऽहिमांशवश्च, अतः परं पुनः पाश्चात्याद् द्वीपादुदधेर्वा सकाशादग्रेतने द्वीपे पयोधौ वा त्रिगुणाः क्रियंते निशामणयो नभोमणयश्च । पूर्वसर्वद्वीपोदधिगताश्च ते मध्ये प्रक्षिप्य प्रक्षिप्तेषु च तेषु तेषां मानं धातकीखंडाग्रेतनेषु द्वीपोदधिषु विज्ञेयं, यथा धातकीखंडे द्वादशनिशाकरा दिनकराश्च ते च प्रत्येकं त्रिगुणिता षट्त्रिंशद् भवंति, तन्मध्ये च द्वौ जंबूद्वीपसत्कौ श्रुति( ४ )मिताश्च लवणाम्भोधिसंबंधिनः शशिनः सूर्याश्च क्षिप्यंते, क्षिप्तेषु च तेषु भवति चत्वारिंशन्निशामणयो नभोमणयश्च कालोदजलनिधौ । अनेनैव करणेन सर्वद्वीपार्णवेषु चंद्रसूर्यसंख्या वक्तव्या यथा पुष्करवरद्वीपे चतुश्चत्वारिंशदधिकशतं सितद्युतीनामहिमद्युतीनां च तदर्द्धे तु द्वासप्ततिस्तयोर्विज्ञेया । एवमग्रेतनेष्वपि द्वीपोदधिशशिसूर्यसंख्या वक्तव्या पुष्करवरद्वीपार्द्धे च मानुषोत्तरभूधरः प्रोक्तस्तत्स्वरूपं चेदं यथा नरक्षेत्रसीमाकारी पुष्करवरद्वीपार्द्धविभागकृत्तस्य च प्राकारः स क्ष्माभृदेकविंशति-

सिहरतले। तथा रुअगवरस्स उ मज्झे, नगुत्तमो पव्वओ रुअगो। पागारसरिसरूवो रुअगदीवं विभयमाणो ॥ ७ ॥ रुअगस्स य उस्सेहो, चउरासीइं भवे सहस्साइं। एगं चेव सहस्सं, धरणिअलमहे समोगाढो ॥ ८ ॥ दस चेव सहस्सा, खलु बावीसा जोअणाणं बोधव्वा। मूलम्मि अ विक्खंभो, साहिओ रुअगसेलस्स ॥९॥' एतस्य मध्यशिरोविस्तारस्तु गाथास्वनुक्तोऽप्यन्यत्र निगदितत्वादत्र लिखितोऽस्ति। उक्तं प्रासंगिकं मानुषोत्तरादिभूधरस्वरूपम्।

अथ प्रस्तुतं प्रस्तूयते प्राग् द्वीपार्णवेषु शशिसूर्यसंख्या ख्याता। अथ ग्रहादिगणना परिज्ञानाय करणमुच्यते। यत्र द्वीपे पयोधौ वा ग्रहनक्षत्रतारकगणना विज्ञातुमिष्यते। तत्र तद्गतसितद्युतिभिरेकस्य जैवातृकस्य सेना गणनीया। गणितायां च तस्यां सर्वाग्रं स्याद्ग्रहोडुतारकाणाम्। अथ चंद्रसूर्यपंक्तिस्वरूपं प्ररूप्यते द्वे द्वे शशिसूर्यपंक्ती एकांतरिते मंदरं प्रदक्षिणयंत्यौ पट्पष्टिप्रमाणे मनुष्यक्षेत्रे परिभ्रमतः। एवं ग्रहादीनामपि पंक्तयः प्ररूपणीयाः। नवरं ध्रुवं सन्निधवर्त्तिन्यस्तारास्तमेव प्रदक्षिणयंत्यस्तत्रैवाऽहर्निशं पर्यटंति।

अथ चंद्रसूर्यमंडलस्वरूपं प्ररूप्यते, तथाहि–जंबूद्वीपे द्वौ निशामणी द्वौ च नभोमणी तयोश्च दक्षिणोत्तरायणे कुर्वतोः प्रतिदिनभ्रमितक्षेत्रलक्षणानि निजबिंबप्रमाणचक्रवालविष्कंभाणि यथाक्रमं पंचदशचतुरशीत्यधिकं शतं मंडलानां भवंति। तेषां चांतरालसहितानां सामस्त्येन क्षेत्रविष्कंभमानं दशसमधिकानि पंचयोजनशतानि भवेत् एकषष्टिभागीकृतस्य योजनस्य च वसुश्रुति(४८)मिता भागाः स्थापना ५१०$\frac{४८}{६१}$। तद्भावना यथा सूर्यस्य मंडलानामंतराणि त्र्यशीतिसमधिकशतमितानि।

एषां च विष्कम्भमानं द्वे द्वे योजने। अतस्ते त्र्यशीतिसमधिकशतेन गुण्येते जातानि त्रीणि शतानि षट्षष्टिसमधिकानि योजनानाम्। ये च सूर्यमण्डलविष्कम्भसत्कास्तेऽष्टचत्वारिंशदेकषष्टिभागीकृतयोजनभागास्ते चतुरशीत्यधिकशतेन गुण्यते। जातानि ८८३२ एषां च योजनानयनार्थमेकषष्ट्या भागे हृते लब्धं शतं चतुश्चत्वारिंशदधिकं योजनानां १४४ ४८/६१ एतच्च पूर्वराशौ प्रक्षिप्यते। जातं यथोक्तं क्षेत्रमानम्। यदा तु सर्वाभ्यन्तरात् मण्डलात् परतो यावत् सर्वबाह्यमण्डलात् इत्यय चारस्या ध्वा चिन्त्यते तदा पूर्णानि पञ्चयोजनशतानि दशाधिकानि भवन्ति। तथाहि—यदि सूर्यस्यैकेनाहोरात्रेण द्वे योजने एकस्य च योजनस्याष्टचत्वारिंशदेकषष्टिभागाश्चारक्षेत्रं लभ्यते, ततस्त्र्यशीत्यधिकेनाहोरात्रशतेन किं लभ्यते राशित्रयस्थापना

२ ४८/६१ १८३ अत्र च सवर्णनार्थं द्वयोर्योजनयोरेकषष्ट्या गुणने उपरितनाष्टचत्वारिंशद् भागप्रक्षेपे च जातं १७०। एतत् पुनरन्त्य राशिना १८३ रूपेण गुण्यते जातानि ३१११०, ततोऽस्य राशेर्योजनानयनार्थमेकषष्ट्या भागे हृते लब्धानि ५१० योजनानि। एतावता तपस्य विष्कम्भक्षेत्रकाष्ठा शशिनस्तु मण्डलविष्कम्भ षट्पञ्चाशदेकषष्टिभागा योजनस्य चारक्षेत्र पुनर्योजनानि ५०९ मितानि त्रिपञ्चाशत् पुनरेकषष्टिभागा योजनस्य। तथाहि शशिनः पञ्चदशमण्डलानि तदन्तराणि च चतुर्दश, एषां च प्रत्येकं विष्कम्भमानं पञ्चत्रिंशद् योजनानि त्रिंशत् पुनरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कश्चत्वारश्च भागाः स्थापना ३५ ३०/६१ ४/७ यदि च चन्द्रस्यैकेनाहोरात्रेण षट्त्रिंशद् योजनानि पञ्चविंशतिश्चैकषष्टिभागा योजनस्य चत्वारश्च सप्तभागा एकषष्टिभागस्य चारक्षेत्रं लभ्यते ततश्चतुर्दशभिरहोरात्रैः किं लभ्यते राशित्रयस्थापना

| |
|---|
| ३६ |
| २५ |
| ६१ |
| ४ |
| ७ |

१४। अत्र च सवर्णनार्थमादौ षट्त्रिंशदेकषष्ट्या गुण्यते तेषु चोपरितनाः २५ भागाः प्रक्षिप्यंते, क्षिप्तेषु च जातं १२२१, एतेषां च सप्तभिर्गुणने ४ भागक्षेपे च जातं १५५५१ ततो योजनानयनार्थं छेदकराशिरप्येकषष्टिरूपः सप्तभिर्गुण्यते जातं २१७७१४ ततश्छेद्यच्छेदकराश्योः सप्तभिर्भागे हृते जातश्छेद्यराशिः ३११०२ छेदकराशिस्तु ६१ मितः। अनेन चैकषष्टिरूपेण छेदकराशिना भागे गते भवति यथोदितानि योजनानि ५०९$\frac{५३}{६१}$ चंद्रचार ६१ क्षेत्रविष्कंभकाष्ठा, एतस्यां पुनरवधिभूतायेंदुमंडलविष्कंभक्षेपे सामस्त्यरूपेण क्षेत्रं यथोक्तं योजन५१रूपं भावनीयम्।

अथ चंद्रः सूर्यो वा कियज्जंबूद्वीपे लवणे च प्रविशतीत्युक्ते ? शशिसूरौ लवणार्णवोपरितनं भागमष्टचत्वारिंशदेकषष्टिभागाभ्यधिकत्रिंशदधिकयोजनशतत्रयमानमवगाह्य चारं चरतः। जंबूद्वीपोपरितनभागं पुनरशीतिसमधिकयोजनशतमवगाह्य। एवं च चंद्रसूर्ययोश्चारं कुर्वतोः क्रमेण लवणजलधौ दशैकोनविंशत्यधिकशतमितानि मंडलानि भवंति। जंबूद्वीपे तु पर्यायेण पंच ५ पंचषष्टि ६५ प्रमाणानि, तानि च मेरोः पूर्वतो निषधनगोर्द्धभागे त्रिषष्टिमितानि हरिवर्षजीवाकोट्यां च नयन( २ )-माने सुमेरोः पश्चिमतस्तु नीलवत्शैले समय( ३ )षष्टिमानानि रम्यकजीवाकोट्यां तु द्वे इति वृद्धाः। नक्षत्रं तु तारकाणां तु सर्वदैवावस्थितमेकमेव मंडलं तेषां दक्षिणोत्तरायने न स्त इति भावः।

अथ शशिसूर्ययोः सामानिकात्मरक्षसुरसंख्या निगद्यते चंद्रस्य सूरस्य च प्रत्येकं सामानिकानां श्रुति( ४ )मितानि सहस्राणि भवेयुरात्मरक्षास्त्वेतेभ्यश्चातुर्गुणाः। इत्युक्ताः किंचिज्ज्योतिर्वक्तव्यता।

अथ वैमानिकनाकिस्वरूप प्ररूप्यते । तथाहि–वैमानिका द्वेधा कल्पोपपन्ना' कल्पातीताश्च । तत्र कल्पः स्थितिर्जीत मर्यादा चेत्येकार्थाः । स पुनरिंद्रतत्सामानिकादिव्यवस्थारूपस्त प्रतिपन्नाः कल्पोपपन्ना द्वांदशत्रिदशलोकनिवासिनः ग्रैवेयकानुत्तर विमानवासिनस्तु कल्पातीता' । तेषां सर्वेषामप्यहमिंद्रत्वात् । कल्पोपपन्ना देवास्तु दशभेदास्तथाहि इद्राः १ सामानिकाः २ त्रायस्त्रिंशाः ३ पार्षधा॰ ४ आत्मरक्षा ५ लोकपाला॰ ६ अनीकरूपा॰ ७ प्रकीर्णकाः ८ आभियोग्या ९ किल्बिषिकाः १० । तेषु पुनरिंद्रा परमैश्वर्यशालिन॰ सर्वस्यापि स्वर्लोकनिवासिनाकिनिकरस्य स्वामिनस्ते च दशैव भवति तद्यथा–सौधर्मादिषु वसु(८)मितेषु कल्पेषु प्रत्येकमेकेकः आनतप्राणताख्यकल्पद्वैते आरणाच्युतरूपकल्पयुगले च प्रत्येकमेकैक इति १ । तथा इद्रनामांतरेण शेषे द्युतिविभवादौ समाने भवाः सामानिकाः इद्राणाममात्यपितृगुरूपाध्यायवत्पूज्याः पर तेऽपि स्वस्वामि-तया स्वीकृतवत॰ पुरुहूतान्, ते च सौधर्माधिपतिप्रभृतीनां दशानामपि पुरुहूतानां यथा पर्याय चतुरशीत्य१ऽशीति २ द्वासप्तति ३ सप्तति ४ षष्टि ५ पचाश ६ चत्वारिंशत् ७ त्रिंशद् ८ विंशति ९ दश १० सहस्रसख्येया ज्ञेयाः २ । त्रयस्त्रिंशदेव त्रायस्त्रिंशास्ते पुन पुरुहूतानां राज्यचिंताशांतिकपौष्टिकादिकार्यकारिणो मंत्रिपुरोहितस्थानीयाः ३ । पर्षदि साधवः पार्षधास्ते पुनः शचीपतीनां सुहृत्प्राया अभ्यतरमध्यमबाह्यपर्षद्भेदेन समय( ३ )सख्या विज्ञेयाः ४ । मघवतामात्मान रक्षतीत्यात्मरक्षास्ते पुनः प्रत्यपायाभावेऽपि स्वस्थितिपरिपालनकृते शक्राणा च प्रीत्युत्पादनहेतवे सम ततः सुदृढनिबद्धसुभ-टोचितपरिकराः कार्मुकासिशक्तिकुंतप्रभृतिहेतिनिवहविहस्वहस्ता' स्वस्वामिविनिवेशितनिष्प्रकपनेत्राः परेषां क्षोभमापादयतो-ऽगरक्षका इव तिष्ठति । एते च पूर्वोक्तेभ्य' सामानिकेभ्यो यथाक्रम चतुर्गुणाः प्ररूपणीयाः ५ । लोकान् पालय तीति लोकपाला

आरक्षका इव स्वस्वामिसमुपदिष्टदेशरक्षणपरायणा अन्यायिनियंत्रकाश्च एते च सोम १ यम २ वरुण ३ वैश्रवणाख्याश्चत्वारो विज्ञेयाः ६ । अनीकं च तुरग १ मतंगज २ रथ ३ वृषभ ४ पत्ति ५ गंधर्व ६ नाट्यभेदतः ७ सप्तविधम् । तेषु प्रथमानि पंचानीकानि संगरसमुचितानि गंधर्वनाट्यानीके पुनरुपभोगकृते ७ । प्रकीर्णकास्तु पौरजनपदादिप्रकृतिसदृशाः ८ तथाऽभिसमंताद् युज्यंते प्रेष्यकर्मणि व्यापार्य्यंत इत्यभियोगाः प्रेष्यप्रायाः ९ । किल्बिषमशुभकर्म तद्वंतः किल्बिषिकाश्चांडालप्राया १० । एवं यथा वैमानिकानां दशभेदास्तथा भवनपतीनामपि प्ररूपणीयाः । नवरमनीकेषु वृषभस्थाने महिषा वाच्याः । व्यंतरज्योतिष्कनिकाययोस्तु तथा जगत्स्वाभाव्यात्त्रायस्त्रिंशलोकपालनर्जिताः । शेषा अष्टावेव भेदा विज्ञेयाः ।

अथ कल्पनामानि निगद्यते सौधर्मे १ शान २ सनत्कुमार ३ माहेंद्र ४ ब्रह्म ५ लांतक ६ शुक्र ७ सहस्राराऽऽ ८ नत ९ प्राणताऽऽ १० रणा ११ ऽच्युत १२ नामानस्तरणि ( १२ ) गणिताः कल्पा भवेयुः । एतेषां मध्यादष्टसु स्वर्लोकेषु यथाक्रमं द्वात्रिंशद१ऽष्टाविंशति २ द्वादशा ३ ऽष्ट ४ चतु ५ र्लक्षपंचाश ६ च्चत्वारिंशत् ७ षट् ८ सहस्राणि भवेयुर्विमानानां द्वयोः पुनरानतप्राणतयोः प्रत्येकं शतचतुष्टय विमानानाम् आरणाच्युतयोस्तु प्रत्येकं शतत्रयम् अधस्तनग्रैवेयकत्रिके पुनरेकादशोत्तरं शतं विमानानाम्, मध्यमग्रैवेयके तु सप्तोत्तरं शतम्, उपरितनग्रैवेयकत्रिकेषु शतम् । उपरि तु पंचैवानुत्तरविमानानि तेषां मध्ये मध्यस्थितं लक्षयोजनमितं सर्वार्थसिद्धनाममहाविमानं प्रसिद्धम्, अस्मिंश्चैकानतारिण एव जीवाः सुरतया समुत्पद्यंते । तत्परितश्चतुर्दिक्षु चत्वारि विजय १ वैजयंत २ जयंता ३ ऽपराजिताभिधानानि भवेयुः । एतेषु पुनः संख्येयभवा एव जीवाः समुत्पद्यंते देवतया । यदुक्तं ' सव्वट्ठाओ निअमा, एगम्मि भवम्मि सिज्झएवस्सं । विजयाइं

विमाणेहिं, असखेज्जभवाओ नायव्वा ॥ १ ॥' इति सर्वसख्यया पुनरूर्ध्वलोके चतुरशीतिलक्षाणि सप्तनवतिसहस्राधिकानि भवति विमानानां गृहभूमिकाकारा प्रस्तटा. पुनरुपरि लोके द्वापष्टिर्भवति । ते चैव सौधर्मेशानयोरेकवलयाकारतया व्यवस्थितयोः समप्रायभूमिकयोस्त्रयोदशप्रतरा भवति । यद्यपि च सौधर्मे ईशाने च प्रत्येक त्रयोदशप्रतरास्तथाप्येकवलयाकारतया व्यवस्थानाचयो. समुदितयोस्त्रयोदशविवक्षिताः । एवमन्येष्वप्येकवलयाकारेषु स्वर्लोकेषु वाच्यम्, सनत्कुमारमाहेंद्रयोस्तु द्वादश, ब्रह्मलोके तु ऋतु( ६ )मिताः, लातकस्वर्लोके तु पच, महाशुक्रे तु चत्वारः, सहस्रारेऽपि च, आनतप्राणतयोश्च चत्वारः, एव आरणाच्युतयोरपि, ग्रैवेयकनवके पुन प्रत्येकमेकैकः, एकस्तु प्रस्तटोऽनुत्तरविमानेषु एव द्वापष्टिः प्रस्तटा भवत्यूर्ध्वलोके एतेषु प्रस्तटेषु प्रत्येकमेकैकांतःस्थितो मुख्यविमानभूतः स्याद् विमानेंद्रकः । एवमेते द्वापष्टिर्भवति । एते पुनरुडु १ चद्र २ रजत ३ वल्गु ४ वीर्य ५ वरुण ६ आनद ७ इत्यादयो भवेयुः । एतेभ्यश्च चतुर्षु दिक्षु चत्वारः पक्तयो भवति विमानानां तास्ताश्च प्रथमप्रस्तटे द्वापष्टिविमानानिका स्युः ।

द्वितीयादिषु प्रतरेषु पुनरेकैकविमानहीनाः पक्तयस्तावद् वाच्या यावद् द्वापष्टितमे प्रतरे तु दिक्ष्वेकैकमेव विमानम् । आद्यप्रतरे तु द्वापष्टिरावलिका विमानान्येव भवति, एक देवद्वीपोपरि द्वे च नागसागरे चत्वारि च यक्षद्वीपे भूतसमुद्रे तु वसु( ८ )मितानि स्वयभूरमणद्वीपे तु पोडश स्वयभूरमणार्णवे पुनरेकत्रिंशत् एवमग्रेतनेष्वपि प्रतरेषु वाच्य यावद् द्वापष्टितमे प्रतरे चतुर्दिक्षु देवद्वीपोपर्येकैक विमानम् ।

अथ विमानसस्थानान्युच्यते तथाहि–सर्वेष्वपि प्रतरेषु मध्यगतानींद्रकविमानानि वृत्तसस्थानानि । ततश्चतुर्दिक्षु प्रथम

त्र्यस्रं ततश्चतुरस्रं ततो वृत्तमेवं त्र्यस्रं चतुरस्रं वृत्तमित्येषा परिपाटी तावद् श्रेणिपर्यंतः वृत्तविमानानि सर्वाण्यप्येकद्वाराणि त्र्यस्रविमाने तु त्रीणि द्वाराणि चतुरस्रे तु चत्वारि वृत्तविमानानि सर्वाण्यपि प्राकारपरिवेष्टितानि चतुरस्रविमानानि पुनः सर्वाण्यपि चतुर्दिक्षु सुंडप्राकाररूपे वेदिकापरिक्षिप्तानि त्र्यस्रविमानेषु तु यतो वृत्तविमानं ततो वेदिका स्यात् शेषेषु तु पार्श्वेषु प्राकारः परिकीर्त्तितः श्रीमदार्हतसमये। यदुक्तं 'सव्वे वट्टविमाणा, एगदुवारा हवंति नायव्वा। तिन्नि अ तसविमाणे, चत्तारि अ हुंति चउरंसे ॥ १ ॥ पागारपरिक्खित्ता, वट्टविमाणा हवंति सव्वेऽवि। चउरंसविमाणाणं, चउद्दिसिं वेइआ होइ ॥ २ ॥ जत्तोवट्टविमाणा, तत्तोतंसस्स वेइआ होइ। पागारा बोधव्वा, अवसेसेसुं तु पासेसु ॥ ३ ॥' इति एतासां च पंक्तीनामंतरेषु पूर्वाशां विमुच्य कुसुमानीवेतस्ततोऽवकीर्णत्वात् कुसुमावकीर्णानि नंद्यावर्त्तखड्गादिविचित्रसंस्थानानि विमानानि भवंति। अथ सौधर्मादिकल्पेष्वावलिकागतसकलप्रतरस्थितविमानगणनाविज्ञानाय करणमुच्यते तथाहि—सकलेष्वपि कल्पेषु प्रथमप्रतरगतावलिकाविमानान्यंतिमप्रतरस्थितावलिकाविमानानि चैकत्र मील्यंते मीलयित्वा चार्द्धीक्रियते अर्द्धीकृत्य च प्रतरैश्च स्वकल्पगतैर्गुण्यते ततो विवक्षिते कल्पे आवलिकागतविमानानां सर्वाग्रं भवति तत्र सौधर्मेशानकल्पयुगले प्रथमप्रतरे शतद्वितयमेकोनपंचाशदधिकं त्रयोदशप्रतरे तु शतद्वैतमेकोत्तरम् अनयोश्च मीलने शतचतुष्टयं पंचाशत् समधिकं स्यात्। तदर्द्धं तु सपादं शतद्वितयम्। एतच्च सौधर्मेशान—संबंधिभिः प्रतरैर्गुण्यते जातं सौधर्मेशानवलयसत्काऽऽवलिका—गति—विमान—सर्वाग्रमेकोनत्रिंशच्छतानि पंचविंशतिसमधिकानि २९२५। शेषाणि तु कुसुमावकीर्णकानि विमानानि तानि च सौधर्मेशानकल्पयुगले षष्टिलक्षमध्याऽऽवलिकागतानां पंचविंशतिसमधिकैकोन-

त्रिशत्कृतविमानानां कर्णादेकोनषष्टिलक्षाणि सप्तनवतिसहस्राणि पञ्चसप्तत्यधिकानि स्युः ५९९७०७५ एवमन्येष्वपि स्वर्लोकेषु भावना विधेया। अथ सौधर्मेशानसनत्कुमार १ माहेंद्र २ प्रभृतिषु १३ त्रयोदशसु स्थानेषु तत् सुखज्ञानाय यंत्रकं लिख्यते, तद्यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ अनुत्तरविमान | ५ | ० | ० | ० | १ | ५ | ० |
| ३ ग्रैवेयक | १७ | ९ | २४ | १३ | ३ | ३९ | ६१ |
| ३ ग्रैवेयक | २९ | २१ | ५० | २५ | ३ | ७५ | ३२ |
| ३ ग्रैवेयक | ४१ | ३३ | ७४ | ३७ | ३ | १११ | ० |
| २ आरण ११ अच्युत १२ | ५० | ४५ | १०२ | ५१ | ४ | २०४ | ९६ |
| २ आनत ९ प्राणत १० | ७३ | ६१ | १३४ | ६७ | ४ | २६८ | १३२ |
| १ सहस्रारकल्प ८ | ८९ | ७७ | १६६ | ८३ | ४ | ३३२ | ५९९८ |

| | प्रथमप्रतर विमाना-न्यावलिकागतानि | अंतिम प्रतर-विमाना-न्यावलिका गतानि | प्रथमांतिम-प्रतराव-लिकागत-विमान-मीलने | अर्द्धे | प्रतर | पंक्ति-विमानानि | पुष्पावकीर्णविमानानि |
|---|---|---|---|---|---|---|---|
| १ शुक्रकल्प ७ | १०५ | ९३ | १९८ | ९९ | ४ | ३९६ | ३९६०४ |
| १ लांतककल्प ६ | १२५ | १०१ | २३४ | ११७ | ५ | ५८५ | ४९४१५ |
| १ ब्रह्मलोक ५ | १४९ | १२९ | २७८ | १३९ | ६ | ८३४ | ३९९१६६ |
| २ सनत्कुमार ४ माहेंद्र ३ | १९७ | १५३ | ३५० | १७५ | १२ | २१०० | १९९७९० |
| २ सौधर्म १ शान २ | २४९ | २०१ | ४५० | २२५ | १३ | २९२५ | ५९९७०७५ |

अधुना विमानानामाऽऽधारो निगद्यते । तथाहि–द्वयोः सौधर्मेशानकल्पयोर्घनोदधिराधारभूतः । स च स्त्यानीभूताप्कायपिंडरूपो न कदाचन स्पंदते तथा जगत्स्वाभाव्यात् । सनत्कुमारमाहेंद्रब्रह्मलोकरूपेषु तु त्रिषु स्वर्लोकेष्वत्यंतनिचिताऽपरिस्पंदवातरूपो घनवातो विज्ञेयः । आधारतया त्रिषु पुनर्लांतकशुक्रसहस्रारूपेषु कल्पेषु तदद्वितयमाधारतया । अत

ऊर्ध्वमानशादिषु पुनस्ते एव केवलमाधारतया विज्ञेयम् । अथ विमानाधारभूतपृथ्वीपिंडस्य विमानोत्सेधस्य च प्रमाणमुच्यते तथाहि–द्वयोः सौधर्मेशानयोः कल्पयोः सप्तविंशतियोजनशतानि पृथ्वीपिंडो भवत्युत्सेधतः पंचाशतानि च योजनानां विमानोच्चत्व, तदनुक्रमेण द्वयो सनत्कुमारमाहेंद्रयोस्तथा ब्रह्मलोकलांतकस्वर्लोकयोस्तथा शुक्रमहस्रारयोस्तथाऽऽनतादिषु श्रुति(४)मितेषु कल्पेषु तथा ग्रैवेयकनवकेऽनुत्तरविमानपंचके एव द्विके त्रिके चतुष्के नवके पंचके च पृथ्वीपिंडेषु शतमेकं हीयते योजनानाम् । विमानेषु च तदेव वर्द्धते यावदनुत्तरविमानेष्वेकविंशतियोजनशतानि पृथ्वीपिंडोत्सेधः । विमानोच्चत्व पुनरेकादशशतानि पृथ्वीपिंडविमानोच्चत्वमीलने च सर्वेष्वपि सौधर्मेशानप्रभृतिषु स्थानेषु द्वात्रिंशद् योजनशतानि भवति ।

अथावलिकागतविमानानां स्वामित्वविभागो विभाव्यते तथाहि–सौधर्मेशानादिषु कल्पेषु दाक्षिणाऽऽवलिकागतविमानानि दाक्षिणात्येन्द्राणाम्, ऊदीच्याऽऽवलिकागतविमानानि पुनरौत्तरसुरेश्वराणाम् । ये पुनर्वृत्तविमानेंद्रकास्ते दाक्षिणात्यस्वःपतीनां पूर्वतः पश्चिमतश्च यानि वृत्तानि विमानानि तान्यपि दक्षिणदिक्स्वःपतेः त्र्यस्राणि चतुरस्राणि च विमानानि सामान्यानि भवति, कोऽर्थः ? अर्द्धं तेषां दक्षिणदिग्पतेः अर्द्धं चोदीचोदिक्स्वामिनः। उक्तं च 'जे दाहिणेण इंदा, दाहिणओ आवली मुणेयव्वा । जे पुण उत्तरइंदा, उत्तरओ आवली तेसिं ॥ १ ॥ पुव्वेण पच्छिमेण य, सा मन्ना आवली मुणेयव्वा। जे पुण वट्टविमाणे, मज्झिल्ला दाहिणिल्लाण ॥ २ ॥ पुव्वेण पच्छिमेण य, जे वट्टा ते वि दाहिणिल्लस्स। तंसचतुरंसगा पुण, सामन्ना हुंति नायव्वा ॥ ३ ॥' इति सर्वेष्वपि च कल्पेषु स्वस्व कल्पान्तसकभूतानि शचीपतिनिवासोचितानि विमानान्यतिमप्रतरे भवति । तेभ्यश्च श्रुति(४)मितासु दिक्षु भवेयुर्विमानानि

लोकपालनाकिनां सोमयमवरुणवैश्रवणाभिधानानाम् ।

अथ स्वर्लोकनाकिनां चिह्नविभागो निगद्यते-सौधर्मादिषु स्वर्लोकेषु यथाक्रमं मृग १ महिष २ वराह ३ सिंह ४ छगल ५ शालूर ६ तुरग ७ गज ८ भुजंग ९ खड्ग १० वृषभ ११ विडिम १२ रूपचिह्नचिह्नितमौलयो भवेयुर्देवाः, खड्गो गंडकनामाटव्यामाटश्चतुष्पदविशेषः, विडिमस्तु मृगविशेषो देशीभाषया, शेषं प्रतीतम् ।

अथ विमानानां वर्णविभागो निगद्यते तथाहि–द्वयोः सौधर्मेशानयोर्विमानानि पंचवर्णानि, द्वयोः सनत्कुमारमाहेंद्रयोश्च कृष्णविरहितचतुर्वर्णानि, ब्रह्मलांतककल्पयोश्च शुक्लपीतलोहितानि, शुक्रसहस्रारसुरलोकयोश्च शुक्लपीतानि, अत ऊर्ध्वं पुनरानतादारभ्याऽनुत्तरविमानांतेषु श्वेत एव वर्णः, एतानि च सर्वाण्यपि पताकासहस्रपरिमंडितानि, भवनपतिव्यंतरज्योतिष्काणां तु पंचवर्णानि भवनविमानानि । तथा भवनपत्यादयस्त्रयोऽपि कायसेविनः, कल्पद्वयसुराश्च द्वयोश्च स्वर्लोकयोः स्पर्शप्रवीचाराः, द्वयोश्च रूपप्रवीचारा, द्वयोश्च शब्दप्रवीचाराः सुरा भवंति, आनतादिषु पुनः श्रुति(४)मितेषु मनःप्रवीचाराः । अयं भावः भवनपतिप्रभृतय ईशानांताः सुरास्तथाविधक्लिष्टोदर्कपुंवेदानुभावेन मनुष्यवन्मैथुने निमज्जंतः सर्वांगीणकायक्लेशजनितस्पर्शानंदसुखमासाद्य संतुष्यंति नेतरथा, सनत्कुमारमाहेंद्रदेवास्तु देवीनां स्तनजघनभुजोरुप्रभृतिदेहावयवसंस्पर्शमात्रतः सुरतसुखमनुभवंति, ब्रह्मलोकांतकस्वर्लोकिनस्तु कमनमहानरेंद्रराजधानीस्थानीयं दिव्यमुन्मादजनकं समालोक्य रूपं रतिसातास्वादमासादयंति । शुक्रसहस्रारसुरास्तु स्ववधूनां हसितगीतसविलासभाषितरणनमणिमयनूपुरादिभूषणगणक्वणनमाकर्ण्य कामसुखमुपभुंजते । आनतादिषु तु श्रुति( ४ )मितेषु सुरलोकेषु सुरतेच्छया यदा सुराः सुरीश्चेतोगोचरीकुर्वंति

तिष्यगुप्तादुत्पन्नाः षोडशवत्सरव्यतिक्रमे श्रीवीरजिनपञ्चमज्ञानोत्पत्तेः । अतस्तत्स्वरूपं किंचित् प्ररूप्यते । तथाहि–राजगृह नाम्नि नगरे गुणशैलकचैत्ये चतुर्दशपूर्वी वसुनामा सूरिः समाजगाम । तदन्तेवासी च तिष्यगुप्तः सप्तममात्मप्रवादपूर्वमध्यापयत् साधून् ' एगे भंते जीवपएसे जीवत्ति वत्तव्वं सिया ? नो इणमट्ठे समट्ठे । एवं दो जीवपएसा तिन्नि संखिज्जा असंखिज्जा वा जाव एगेण वि पएसेण ऊणा नो जीवत्ति वत्तव्वं । कह जम्हा कसिणे पडिपुन्ने लोगागासपएसे जीवत्ति वत्तव्वं ' इत्यस्याऽऽलापकस्याध्यापनावसरे मिथ्यात्वमोहनीयकर्मोदयवशवर्त्तितया चरमस्यैव जीवप्रदेशस्य जीवत्वं निर्णीतवान् । तदनु पुनः स्वमनःकल्पितमत्यप्रदेशस्यैव जीवत्वं प्ररूपयन्निवारितः स एव गुरुभिः ' भद्र ! मैवमभ्यधाः ' यतः समस्तैरेव प्रदेशैः पूर्णो जीवः स्यान्नेतरथेत्युक्तोऽपि यदा स न प्रतिबुद्धस्तदा गुरुभिस्तस्यागविषये तनूत्सर्गे निर्मिते, परमात्मानं च वितथप्ररूपणया प्रतारयन् जगामाऽऽमलकल्पायां नगर्याम् । तत्र पुनराम्रशालवने स स्थितवान् सपरिवारः, तस्यां च नगर्यां मित्रश्रीनामा श्रमणोपासकस्तं समागतं निह्नवं विज्ञाय तत्प्रतिबोधकृते सत्खडिकादिने तं निमन्त्रयामास निजसौधे, निमन्त्र्य च पक्वान्नसिद्धान्नतीमनादिनिखिलवस्तुस्तोमं स तदग्रतो ढौकयामास, ढौकयित्वा च सर्वस्यापि वस्तुनोऽस्य लेशमात्रं वितीर्य वसनस्याऽपि तंतुमाकृष्य तमपि च दत्त्वा वदयामास, तं प्रति वन्दित्वा च स सौवपरीवारमभ्युवाच 'वन्दध्वं भो यूयं यत् प्रतिलाभिताः स्वयं स्वहस्तेन मया गुरवः । तदहं धन्योऽस्मि कृतपुण्योऽस्मि यन् मदीयसदने समागताः श्रीगुरवः, प्रतिलाभिताश्च मया स्वयं स्वहस्तेन सर्ववस्तुनाऽपि ' इति तेनोक्ते स प्रोचे निह्नवगुरुः ' किमिति वयं निमन्त्र्य धर्षिताः ' इति तेनोक्ते स प्रोचे श्रमणोपासकश्चेद् भवतां मतं प्रमाणं तर्हि मया यूयं

प्रतिलाभिताः पूर्णाः, चेद् भगवतः श्रीवर्द्धमानस्य वचः प्रमाणभूतं तत्र प्रतिलाभिताः ' इति तेनोक्ते स प्रोचे निह्नवाचार्यः ' साधूक्तं भवतां यदेवमुत्पथप्रवृत्ताः सम्यग् युक्त्या वयं प्रतिबोधिताः ' इति तेषु प्रतिबुद्धेषु निह्नवेषु समानंदितमनाः स श्रमणोपासकपुंगवः सौवमानसिकभक्त्या विधिपूर्वं तान् प्रति प्रत्यलाभयत् । तदनु तदुत्सूत्रवचनं सम्यगालोच्य प्रतिक्रम्य च श्रीगुरुपादमूले सम्यक् श्रीमद्भगवदाज्ञापालनलालसाः समभूवन् । इत्युक्ता द्वितीयनिह्नववक्तव्यता एषा च दृष्टिः समुत्पन्ना ऋषभपुरे । राजगृहऋषभपुरयोश्च घटकुंभवदेकार्थत्वमेव विज्ञेयम् ।

अथ तृतीयाऽव्यक्तनिह्नवस्वरूपं प्ररूप्यते । तत्राऽव्यक्ताः संयताद्यवबोधे संदिग्धबुद्धयस्ते चार्याषाढाचार्यतो यथा समुत्पन्नास्तथा ते कथानकेनोच्यंते मया, तथाहि श्वेतविकायां नगर्यां श्रीवर्द्धमानजिननिर्वाणकल्याणकादनु व्यतीते सति चतुर्दशाधिके संवत्शतद्वैते पोलासोद्याने श्रीमदार्याषाढाचार्याः सगच्छपरिवाराः समाजग्मुः । तेषां च तमस्विनीसमये समुत्पन्नमकस्माद् हृदयशूलं तद्व्यथया च ते परासुतां प्राप्ताः सौधर्मे नलिनीगुल्मविमाने समुत्पन्नाः सुपर्वतया । अथ च तेषां सूरिवराणां गणे बहवो विनेया आगाढयोगिनः संति वाचनाचार्यस्तु नेतरः कश्चिद् वर्त्तते तत्र गणे । तेन तेषामागाढयोगिनां निजविनेयानां योगानुष्ठानपरिसमाप्तिनिमित्तं देवभूयंगतास्त एव सत्वरा अवधिसंवेदनदत्तोपयोगाः समागत्य तत्र स्थाने तामेव निजतनुमधिष्ठाय तस्थिवांसः पूर्ववत् स्मारणवारणप्रभृतिसमस्तश्रीगुरुनिर्मेयकर्मनिर्मितपराः । अथ च कियद्दिनातिक्रमे समाप्ते सति तस्मिन्नागाढयोगविधौ, निजांतेवासिनां नवीनमेकं विधाय विधेयविनेयमात्मीयं वाचनाचार्यं तदनु पुनः संमील्य समग्रं सौवांतेवासिवर्गं कथयांबभूवस्ते तं प्रति यदियंतं समयमसंयतेन सता मया योगसमाप्तिनिमित्तं यूयं

प्ररूपणा। ननु मोक्षे प्रस्तुते सिद्धप्ररूपणायाः कोऽवसर ? उच्यते जीवस्य कृत्स्नकर्मक्षयेण यत्स्वरूपावस्थान स मोक्ष उच्यते
स च जीवस्यैव धर्म' धर्मधर्मिणोश्च कथचिदभेदात् सिद्धप्ररूपणया मोक्षप्ररूपणा कृता स्यादिति नाप्रस्तुताभिधानम्।

अथ पूर्वपर्यायसारनयालबनेन गतिप्रभृतिमार्गणास्थानेषु मोक्षपदस्य सत्पदप्ररूपणा क्रियते। तथाहि–गतिद्वारे
मनुष्यगतावेव मोक्षो नेतरस्मिन् गतित्रये। जातिद्वारे च पचेंद्रियजातावेव मोक्षो नान्यस्मिन् जातिचतुष्टये। कायद्वारे
त्रसकाय एव मोक्षो नान्यस्मिन् कायपचके। योगद्वारे तु योगत्रयेऽपि न मोक्षोऽयोगिन एव तत् सभवात्। वेदद्वारेऽपि न
मोक्षः क्षपितवेदस्यैव तत्सभवात्। कषायद्वारेऽपि न मोक्षस्तत्क्षय एव मुक्तिप्राप्तिः। ज्ञानद्वारे केवलज्ञान एव मोक्षो
नान्यस्मिन् ज्ञानचतुष्टये। सयमद्वारे तु यथाख्यातचरित्र एव मुक्तिर्न शेषसयमचतुष्टयदेशसयमासयमेषु। दर्शनद्वारे तु केवल-
दर्शन एव मुक्तिर्न शेषदर्शनत्रिके। लेश्याद्वारे तु न मोक्षोऽलेश्यस्यैव सिद्धिगमनात्। भव्यद्वारे तु भव्यस्यैव मोक्षो नाभव्यस्य।
सम्यक्त्वद्वारे तु क्षायिकसम्यग्दर्शन एव मोक्षो न शेषदर्शनचतुष्टये। सज्ञिद्वारे तु सज्ञिन एव मोक्षो नाऽसज्ञिनः। आहार-
कद्वारे त्वनाहारकस्यैव मोक्षो नाऽऽहारकस्य। इति भाविता पूर्वपर्यायसारनयानुसारेण गत्यादिचतुर्दशमार्गणास्थानेषु यथा
योग मोक्षस्य सत्पदप्ररूपणा १। द्रव्यप्रमाणे चिंत्यमाने सिद्धजीवद्रव्याण्यनतानि भवति २। क्षेत्रप्रमाणे चिंत्यमाने लोक-
स्याऽसख्येयतमे भागे एकः सिद्धः सर्वेऽपि वा सिद्धाः यतोऽसख्येयस्य तारतम्येनाऽसख्येयभेदत्व वर्त्तते ३। स्पर्शनाद्वारे
क्षेत्रावगाहनात. स्पर्शनाऽधिका भवति, अयमर्थः यावति क्षेत्रेऽसावेकः सिद्धोऽवगाढोऽनेको वा तस्य क्षेत्रस्य येऽनतराः
सर्वदिक्षु प्रदेशास्तेऽपि तावति क्षेत्रे स्थितेऽनेकेनाऽनेकैर्वा सिद्धैः स्पृश्यत इति हेतोः ४। कालद्वारे एकसिद्धापेक्षया कालः

साधनंतः सर्वसिद्धापेक्षया पुनरनाद्यनंतः, अनादिसमयादारभ्य सिद्धानां सद्भावात् सर्वसिद्धापेक्षयाऽनादिता, ततश्च्यवनाभावात् पुनरनंतता ५ । अंतरद्वारे तु प्रतिपाताभावात् सिद्धानां च्यवनस्यांतरं नास्ति, उत्पातमाश्रित्य पुनर्वर्त्तते यथा जघन्यत एकः समय उत्कर्षतः षण्मासाः ६ । भागद्वारे त्वभव्येभ्योऽनंतगुणा अपि सिद्धाः सर्वजीवानामनंततमे भागे वर्त्तंते ७ । भावद्वारे तु सिद्धाः क्षायिके पारिणामिके च भावे वर्त्तंते तत्र सिद्धेषु केवलज्ञानकेवलदर्शनादिकं क्षायिके भावे वर्त्तते, जीवत्वं च पारिणामिके भावे विज्ञेयं ८ । अल्पबहुत्वद्वारे मोक्षगमनभवे ये नपुंसकत्वमनुभूय सिद्धान्ते नपुंसकसिध्धाः एवं स्त्रीपुंसोरपि वाच्यं, तेषां मध्ये स्तोका नपुंसकसिद्धास्तेभ्योऽपि स्त्रीसिद्धाः संख्येयगुणास्तेभ्योऽपि पुरुषसिद्धाः संख्येयगुणाः । ननु नपुंसकानां चारित्रमपि न भवति कुतो मोक्षगमनम् ? उच्यते ये जन्मनपुंसकास्तेषां चारित्रं न भवति ये तु पश्चान्नपुंसकीकृतास्तेषां तु भवति तेन क्षतनपुंसकानां सिद्धिरपि भवतीति कृता सत्पदप्ररूपणादिभिर्नवभिर्द्वारैर्मोक्षतत्त्वप्ररूपणा तत्कृतौ च व्याख्यातः सप्तषष्टिस्थानमध्ये प्रथमपरमार्थसंस्तवाख्यश्रद्धानभेदः १ ।



अथ सुदृष्टपरमार्थयतिजननिषेवनाख्यो द्वितीयस्तद्भेदो व्याख्यायते । तथाहि गीतार्थचरित्रिणां तथा सम्यग्दर्शनिनां च विनयबहुमानपूर्वकं पर्युपास्तिः सुदृष्टपरमार्थयतिजननिषेवनमुच्यते । तत्र गीतशब्देन सूत्रमुच्यते, अर्थश्च तद् व्याख्यानं तद्द्वैतेन समन्विता ये ते गीतार्था इत्युच्यंते यदाऽऽर्षे ' गीयं भन्नइ सुत्तं, अत्थो तस्सेव होइ वक्खाणं । उभएण य संजुत्तो, सो गीयत्थो मुणेअव्वो ॥ १ ॥ ' चारित्रिणस्तु सप्तदशविधसंयमाराधकाः सम्यग्दर्शनिनस्तु शुद्धश्रद्धावंतः तेषां सेवा विनयबहुमानपूर्वकं विधेया तत्र विनयो बाह्योपचाररूपः बहुमानस्त्वाभ्यंतरभक्तिरूपः । यतस्तेषां गीतार्थादीनां

सेवया जीवाजीवादिपदाना यथावत् परिज्ञानयोगाच्च सम्यग्दर्शनस्य विशुद्धता बोभवीति ॥ इति व्याख्यातो द्वितीयः श्रद्धानभेद ॥ २ ॥।

अथ व्यापन्नदर्शनवर्जनस्वरूपस्तार्तीयकः श्रद्धानभेद प्रोद्भाव्यते । तत्र व्यापन्न विनष्ट दर्शन सम्यक्त्व येषां ते व्यापन्नदर्शनास्ते च निह्नवयथाच्छन्द'प्रभृतयो विज्ञेया. । तेषु यथार्थवादिनोऽपि ये काप्यशे जिनवचनापलाप विदधति ते निह्नवाः । गुरुसिद्धातनिरपेक्षतयैव सर्ववस्तुस्वरूपप्ररूपकास्तु यथाछदसः । एतेषु बहुरत १ जीवप्रदेशा २ ऽव्यक्त ३ सामुच्छेद ४ द्वैक्रिय ५ त्रैराशिका ऽ ६ बद्धिक ७ स्वरूपाः सप्त निह्नवा भवेयुस्तेषु बहुषु समयेषु रता बहुरता दीर्घकालद्रव्यप्रवृत्तिप्ररूपिणस्ते च श्रीवर्द्धमानस्वामिनः पचमावबोधसमुत्पत्तेश्चतुर्दशसवत्समतिक्रमे समुत्पन्ना भगवज्जामातुर्जमालेः सकाशात्तेन तत्स्वरूप किमप्युच्यते ।

तथाहि अन्यदा कदाचिद् भगवान् श्रीमान् वर्द्धमानस्वामी समवासार्षीत् कुडपुरनाम्नि नगरे, तत्र च भगवद्भगिनी-सुदर्शनातनूजन्मा जमालिनामा राजकुमारः श्रीवीरतीर्थंकर समाकर्ण्य समवसृत तद्वदनतद्वचनसमाकर्णनविषयोत्सुकितचेतोवृत्तिः समागमत्तत्समीपे सपरिकरः सर्वद्धर्या, तत्र च समेत्य त्रिः प्रदक्षिणीकृत्य च सोत्सुसुर चरमतीर्थंकर विधिवद्वन्दनपुरस्सर स समुपविष्ट समुचितः प्रदेशे सपरिच्छदः । तदा च निर्मिता भगवता भवनिर्वेदजननी सुकृतदेशना सवेगरगरगत्तरगसगमगगापगासमाना । तां च समाकर्ण्य सम्यक्त्वसवेगरगपूरितांतरग. पचप्रकारसांसारिकसुखसवेदनविषयविरक्तचेतोरगः समापृच्छ्य पितरौ निष्क्रातः पचशतपरिवृतः स समहामह श्रीमन्महावीरतीर्थंकरसमीपे । तत्प्राणप्रियाऽपि तमनु

प्रव्रजिता सहस्रपरिवृता भगवच्चलननलिनमूले भवनिर्विण्णचेतोवृत्तिरनोद्यानामधेया । अन्यदा च स्थविरोपांतसमधीतैकादशांगः श्रीमच्चरमतीर्थंकरसम्यक्समाराधनैकतानीकृतांतरंगः स जमालिः श्रमणगुणालिशालिनः प्रक्षालितबहुलकल्मषः सम्यक्सुचरण-समाचरणेन श्रावस्तीपुरीं प्रति विजिहीर्षुः प्रभुमापृच्छय प्रतस्थे तां प्रति सपरिकरः । तां च प्राप्तस्तस्थौ तिंदुकोद्याने कोष्ठकचैत्ये स सपरिवारः । तस्य च तत्र स्थितस्यांतप्रांतातिशीतरूक्षाहाराभ्यवहारेण प्राक्कर्मप्रणुन्नः कश्चित् प्रादुर्बभूव भूयानामयविशेषः । तेन दुःखेनाऽस्याहतोऽशक्नुवन्नुपवेष्टुं वेष्टरे स समादिशत् साधुपुंगवानेवं यद् यूयं रचयध्वं संस्तरमिति तेनोदिते ते प्रवृत्तास्तं निर्मातुम् । अस्मिन्नवसरे च स बाढं तद्बाधाभिभूतः सन् पुनस्तानुवाच किं संस्तरः कृतः क्रियते वेति तेनोक्ते ते प्रत्यूचुः । संस्तारको नो कृतः किं तु क्रियत इति एवं तैरुक्ते सति स चिंतयामास यद् भगवताऽऽख्यातं 'चलमाणं चलिए' इत्यादि तन् मिथ्या । यत इदं प्रत्यक्षमेव वीक्ष्यते संस्तारकः क्रियमाणो न कृत इति ।

उक्तं च श्री पंचभांगे 'तए णं से जमाली अणगारे बलिअतरवेदणया अभिभूते समाणे दोच्चंपि समणे णिग्गंथे सद्दावेति, सद्दावित्ता दोच्चंपि एवं वदासी मम न्नं देवाणुप्पिया सेज्जासंथारेए किं कडे कज्जत्ति तत्तेणं ते समणा णिग्गंथा जमालिं अणगारं एवं वदासी णो खलु देवाणुप्पियाणं सेज्जासंथारए कडे कज्जत्ति । तत्तेणं तस्स जमालियस्स अणगारस्स अयमेतारूवे अब्भत्थिते जाव समुप्पज्जित्था । जं णं समणे भगवं महावीरे एवं आइक्खंति जाव एवं परूवेइ एवं खलु चलमाणे चलिए उदीरिज्जमाणे उदीरिए जाव णिज्जरिज्जमाणे णिज्जिणे तं णं मित्था । इमं च णं पच्चक्खमेव दीसति सेज्जासंथारए कज्जमाणे अकडे

वदापितास्तत् क्षन्तव्योऽय युष्माभिरविनयो मदीयः। इत्युक्त्वा तत् प्राग्भवसबधिवपु परित्यज्य स सूरिसुरस्त्रिदशधाम जगाम जनितविस्मयः सर्वेषां सौवशिष्यवराणाम्। अथ च ते सर्वेऽपि विनेयास्तां निजगुरुतनु व्युत्सृज्य चितयामासुरेव यथाऽनेन देवेन सता वय वदापितास्तथा न ज्ञायते एतेषामस्माक मध्येऽन्यः कश्चन देवो भविष्यति तस्याऽसयतस्य माभूयाद्वदनमित्यलमस्माक मिथो वदनेनेति गृहीताऽव्यक्तव्यता अपरैर्गीतार्थैर्बोधिता अपि त नैवाऽबुधन्। तदनु ते श्रमणसघेन निह्नवा इति बहिष्कृता स्वसाधुवर्गात्। अथ च ते निह्नवा विहारेण विहरन्त क्रमेण राजगृह जग्मुर्नगरम्। तत्र च मौर्यवशजो बलभद्राभिधानो नृपति श्राद्धपुगवोऽस्ति। तेन ते समागता विज्ञाताऽधिज्ञाय पुनराकारिता स्वसन्निधौ तदुधानाञ्जिजभटैः। तदनु पुनस्ताञ्जिनसेवकजनान् प्रत्येवमादिशत् स महीनेता 'यदाऽऽनीयता वशकटास्तथा सज्जीक्रियता मत्तमतगजास्तदनु पुनरेतान् मारयत कटमर्दन।' इति तेनोक्ते ते साधवः प्रोचु 'राजन्! भवान् श्रावकत्वेन विदितोऽभूदस्माभिस्तत् किमिति मारयसे त्व साधुभूतानप्यस्मान्?' इति तै. प्रोक्ते स नृपतिरिति कथयाचकार 'भोः! किं ज्ञायते यूय यतयस्तस्करा वा हेरिका वा?' इति तेनोदीरिते सति ते प्रोचुः 'भो! पचमलोकपाल! क्ष्मापाल! वय साधव एव न तु तस्करा हेरिका वा'। इति तैरुक्ते सति स नृपतिः पुनस्तानूचे 'भो अव्यक्ततया परस्पर वदनादिविनयकर्मपराङ्मुखाः कथमस्माभिः श्रद्धीयते यूय साधुतया, अव्यक्ततया च कथमह विज्ञातो युष्माभिः श्राद्धतया' इति तेन शिक्षितास्ते त्रपावश प्राप्ता सत. प्रबुद्धास्तदव्यक्तमतत्याग चक्रु। तदनु तेन महीपतिना 'युष्मत्प्रतिबोधकृते कृतमिद मये' त्युदीर्य क्षमयित्वा च त निज वचनापराध सविनय सत्कृत्य च विमुक्तास्त्यक्ताव्यक्तमतास्ते यतिपुगवाः, तदनु ते विजह्रुः सर्वेऽपि श्रीमद्-

भगवदाज्ञया । इत्युक्तं तृतीयनिह्नवस्वरूपं ।

अथ च तुरीयसामुच्छेदनिह्नवस्वरूपं किमप्युच्यते तत्र समुच्छेदं वस्तुनः समुत्पन्नस्य समुत्पत्त्यनंतरमेव क्षणक्षयित्वं वदंतीत्येवंशीलाः सामुच्छेदास्ते च मिथिलायामश्वमित्रतो यथा समुत्पन्नास्तथा तत्स्वरूपं प्ररूप्यते तथाहि । मिथिलायां नगर्यां लक्ष्मीगृहोद्याने श्रीमहागिरिगुरोरंतेवासी कौडिन्यनामा समाजगाम । तच्छिष्यश्चाश्वमित्रः श्रीवीरनिर्वाणाद् व्यतीते सति विंशतिसमधिके वत्सरशतद्वयेऽनुप्रवादपूर्वस्य नैपुणिकं वस्तु पपाठ, तत्र चायमालापकः 'पडुप्पन्नसमया नेरइआ वुच्छिज्जंति एवं जाव वेमाणियत्ति' एवं च तस्य पठतो मिथ्यात्वमोहनीयकर्मोदयवशतः समुत्पन्नो विपर्यासः श्रीमत्सु सैद्धांतिकेषु शुद्धवाक्येषु । एवं चेत् क्षणक्षयिता सर्वेषां भावानां तर्हि कथं सुकृतदुष्कृतफलविपाकवेदनम् । एवं च स वदन्न-ऽनुशासितः श्रीगुरुभिः 'भद्र ! मैवमभ्यधा यतः सर्वेऽपि भावा द्रव्यरूपतया नित्याः पर्यायरूपतया चानित्या' इत्युक्तोऽपि स गुरुभिस्तदश्रद्दधानः स्वीकृतक्षणभंगमतः समुत्पत्तिसमनंतरमेव समस्तवस्तूनां विनश्वरत्वं प्ररूपयन् आप्तवान् कांपील्य-पुरनाम्नि पत्तने सपरिकरः । तत्र च नगरे खंडरक्षाख्या श्रमणोपासकाः शौल्किकाः संति तैस्ते समागता विज्ञाताः सामुच्छे-दास्तदनु तैः श्राद्धवरैः प्रतिबोधकृते ते मारयितुं प्रारब्धाः तदा च ते प्रोचुः सामुच्छेदाः 'यूयं जनकिंवदंत्या श्रुताः श्रावक-तया तत् किं विधीयते यतिघातो भवद्भिः' इति तैरुक्तास्ते श्रमणोपासकपुंगवाः प्रोचिरे 'रे ! कथं कथमिव भवंतो यतयः यतो युष्मन्मतेन ये साधवः समभूवंस्ते तु तत्समयमेव व्यवच्छिन्नाः । भवंतस्तु केऽप्यपरे परमोषिणः संभाव्यंते । तत् कथमस्माभिर्युष्माकं न क्रियते निग्रह' इति तैर्युक्त्या शिक्षिताः संतः प्रतिबुद्धाः परित्यज्य तत् कुमतं ते प्रपन्नाः सम्यक्-

श्रीजैनमार्गं तदनु तैस्ते तमपराधं क्षमयित्वा विमुक्ता इति किंचिदक्षरन्यासीकृता तुरीयनिह्नववक्तव्यता ।

अथ पञ्चमद्वैक्रियनिह्नवस्वरूपं किमप्युच्यते । तत्र कालाभेदेन क्रियाद्वयानुभववादिनो द्वैक्रियास्ते चोल्लुकातटे गंगतः सञ्जाताः समतीते श्रीवीरनिर्वाणतो वसु(८)विंशतिसमधिके संवत्सरशतद्वैते तत्कथानकं चेदम् । तथाहि उल्लुकाभिधाने जनपदे उल्लुकासरित एकस्मिंस्तीरे खेटस्थानं नाम पुरमपरतीरे पुनरुल्लुकातीरं पुरम् । तस्मिंश्च महागिरिगुरोरन्तेवासी धनगुप्तनामा पश्चिमतटे प्रवर्त्तते । तच्छिष्यस्तु गंगसूरिनामा पूर्वाशातटसंस्थिते सन्निवेशे । स चाऽन्यदा कदाचित् शरत्समये निजगुरुधनगुप्तपादवन्दननिमित्तमुल्लुकासरित्तीरमुत्तरन्नधःशीतमुपरि च तरणिकिरणतापं संवेदयन्नेकस्मिन् समये क्रियाद्वयसंवेदनं स्वीचकार । तदनु च स गुरुचरणनमस्करणपुरस्सरं गुरून् प्रति विज्ञपयामास 'भगवन्मया सरिद्वारि समुत्तरता समसमयमेव शीतातपवेदनलक्षणं क्रियाद्वयमनुभूतम् । तर्हि एकस्मिन् समये युगपत् क्रियाद्वयानुभवतो 'जुगव दो नत्थि उवओगा' इत्यस्य वाक्यस्य कथं प्रमाणता ' इति तेनोक्ते तद्गुरवस्ते धनगुप्तसूरयः प्रोचुः ' भद्र ! नैवमब्रवी यतः समयः परमसूक्ष्मतमः कालस्तद्भेदोऽरूपश्च क्रियाद्वयानुभूतौ स पुनः कमलदलशतव्यतिभेदक्रियापृथक्कालवत् सूक्ष्मत्वान्नोपलक्ष्यते ।' इति गुरुभिर्बोध्यमानोऽपि स यदा न प्रतिबुद्धस्तदा तैस्स गणान्निर्वासितः सन् जगाम राजगृहनामधेयनगरम् । तत्र च वैभारगिरिनितम्बनिकटप्रतिष्ठितपञ्चधनुःशतमितायामविस्तारो महातपस्तीरप्रभाभिधानो जलाशयविशेषो वर्त्तते । तत्परितश्च समन्तादुद्यानम् । तत्र च मणिनागो नाम नागस्तच्चैत्ये सभायां क्रियाद्वयवेदनं प्ररूपितवान् स गंगनामाचार्य्यः । तदा च तदुत्सूत्रवचनं निशम्य श्रुत्यनुचितक्रोधाक्रान्ततनुः स नागः प्रत्यक्षीभूय तमेवमाचख्यौ रे ! दुष्टात्मन् ! रे ! दुर्बुद्धे ! किमेवंविधमवक्तव्यमुत्सू

वदसि संसदि सपदि दुर्गतिदुःखदायकम् । यतस्त्वयि किं श्रीवीरतीर्थंकरादप्यधिकतरं संवेदनं यत्तदुक्तमेकस्मिन् समयक्रियाद्वयानुभवनिषेधं जनसमक्षमुत्थापयस्यऽवगणितश्रीवीतरागवाक्यः तत्त्यजैनमसमंजसप्रलापं नो चेत्तदाऽकाल एव विमुच्यसे प्राणैः । ' इति तेन साक्रोशं भाषितः स प्रबुध्धः सन्नृपादेशमिव तदवचनं स्वीचकार । तदनु स गुरुपादमूले गत्वा तदुत्सूत्रप्ररूपणमालोचयामास इति किंचिल्लिखिता पंचमनिह्नववक्तव्यता ।

अथ षष्ठत्रैराशिकनिह्नववक्तव्यता किंचित् प्रपंच्यते । तत्र जीवाजीवनोजीवलक्षणराशित्रयवादिनस्त्रैराशिकास्ते च श्रीमद्वर्द्धमानजिननेतुर्निर्वाणाद् व्यतिक्रांते सति चतुश्चत्वारिंशदधिके संवत्शतपंचकेऽतरंजिकानामिकायां नगर्यां षडुलूकात्समुत्पन्नास्तत्र षट्पदार्थप्ररूपणादुलूकगौत्रत्वाच्च षडुलूकः । स च रोहिगुप्तस्तत्कथा चेयम् । अंतरंजिकायां नगर्यां बलश्रीनामा नृपतिस्तत्र च भूतगृहनाम चैत्यम् । तस्मिंश्च चैत्ये श्रीगुरुनामधेयाः श्रीमदाऽऽचार्यास्तस्य च शिष्यश्च रोहगुप्तः परस्मिन् ग्रामे स्थितः प्रायः समायाति वंदितुं श्रीगुरुपादपद्ममूले । अस्मिंश्चावसरे कोऽपि परिव्राजको विद्याबलशाली वादकलालब्धलब्धिः पोट्टशालनामा समागमत्तत्रस्थाने । स च विद्यया मे उदरं स्फुटतीति देशीभाषया पोट्टे उदरे लोहपट्टं धत्ते । मत्समश्च कोऽप्यपरो जंबूद्वीपे वादी नास्तीत्यखर्वगर्वाक्रांततनुः स्वहस्तविषये जंबुतरुशालां च दधातीति पोट्टशालाख्यया जनैराख्यातः पटहं वादयति स्म यन्मत्समानः कोऽप्यन्यो वादी न प्रवर्त्तते जंबूद्वीपे । स चैवं पटहं वादयन्निवारितो रोहगुप्तेनाऽहं वाद्यस्मीति सस्मयमुदीर्य । तदनु स तत् पटहनिवारणं गुरवे निवेदयामास वादत्रासविरहितः । तदा च तदुक्तमेतत्समाकर्ण्य तं प्रति प्रोचुः श्रीश्रीगुप्तसूरयः । 'भद्र ! भवता नैतद्भव्यमाचरितम् । यतः स विद्याबलशाली वादे कदाचिद् विजितोऽपि विद्याभिर्युद्धं विधत्ते

क्रमम् । ते च रोहगुप्तेन परिपाटया पराजिताः केकिप्रभृतिभिः । एवं प्रतिनादिना रोहगुप्तेन प्रतिविद्याभिर्वादिविद्यासप्तकेऽपि विफलीकृते स वादी सस्मार रासभीं विद्याम् । सापि कृतखरीरूपा शीर्षोपरि रजोहरणं भ्रामयता तेन रोहगुप्तेन विफलीकृता सती परिव्राजकशीर्षोपरि विष्ठामूत्रे विधाय विरसं रसंती यातवती सौवस्थानम् । एवं तेन रोहगुप्तेन निर्जितः स वादी त्रपानतवदनः स्थाने स्थाने जनैर्जनैर्निंद्यमानो जगाम यथागतम् । जितकाशी स रोहगुप्तोऽपि गत्वा गुर्वंतिके यथास्थितं सर्वं निवेदयामास वादिविजयस्वरूपम् । तदा च गुरुभिः प्रोक्तं ' भद्र ! भवता वादप्रांते इत्थं कस्मान्न प्रोक्तं यद्वादिविजयाय मया जीवाजीवनोजीवलक्षणं राशित्रयं कल्पितम् । किंतु वस्तुवृत्त्या द्वावेव पदार्थौ न पुनस्त्रितयम् । चेत्तदा त्वयैतन्न प्रोक्तं तर्हि अधुनापि तत्र गत्वा निवेदयैतत् । ' इत्थं गुरुभिरुक्तोऽपि स स्वमहत्त्वक्षतिभीत्या तत्र न गतवान् मिथ्यादुष्कृतदानहेतवे; परं गुरूणामग्रेऽपि स्थापयामास स्वोक्तमेव । तदा च श्रीगुरवो नृपसमीपे गत्वा कथयामासुः ' यदस्माकं मते जीवाजीवलक्षणौ द्वावेव पदार्थौ न पुनर्नोजीवलक्षणस्तृतीयः पदार्थः । तदनेनास्मदंतेवासिनास्मत्सिद्धांतविरुद्धोक्त्या स्थापितं वस्तुत्रितय 'मिति गुरुभिः प्रोक्ते सति स गुरुभिरपि सार्द्धं स्वोक्तस्थापनाय षण्मासान् यावन्नृपसमक्षं चकार साहंकारतया विवादम् । एवं च षण्मासप्रांते निर्विण्णेषु नृपप्रभृतिषु तैः परिवृताः श्रीगुरवस्तन्मतनिर्लोठनाय कुत्रिकापणं जग्मुस्तत्र च देवतांतिके जीवाजीवनोजीवलक्षणवस्तुत्रययाचने जीवाजीवौ सा दत्तवती नोजीवास्तु न संतीत्युक्तवती । एवं चतुश्चत्वारिंशत्समधिकशतप्रश्नैः स निर्जितो गुरुभिः । तत्स्वरूपं च किंचिदुच्यते तथाहि ।

तेन रोहगुप्तेन द्रव्य १ गुण २ कर्म ३ सामान्य ४ विशेष ५ समवायलक्षणाः षण्मूलपदार्थाः प्ररूपिताः । अतएव षट्-

पदार्थप्ररूपणादुलूकगोत्रत्वाच्च तस्य षडुलूक इति नामांतरं विज्ञेयम्। तेन च षडुलूकापरपर्यायेण रोहगुप्तेन पूर्वोक्तानां षण्णां मूलपदार्थानामुत्तरभेदाः षट्त्रिंशत् प्रणीतास्ते चाऽमी पृथिव्यप्तेजःपवनवियत्समयदिगात्मनः स्वरूपं द्रव्यं नवधा। रूप१रस २ गंध ३ स्पर्श ४ संख्या ५ परिमाण ६ पृथक्त्व ७ संयोग ८ विभाग ९ परत्वा १० ऽपरत्व ११ बुद्धि १२ सुख १३ दुःखे १४ च्छा १५ द्वेष १६ प्रयत्ना १७ ख्या गुणाः सप्तदशभेदाः। उत्क्षेपण १ वक्षेपा २ कुंचन ३ प्रसारण ४ गमन ५ लक्षणं कर्म पंचप्रकारम्। सत्तारूपपरसामान्य १ द्रव्यत्वादिरूपाऽपरसामान्य २ पृथिवीत्वादिरूपसामान्यविशेष ३-लक्षणं सामान्यं त्रिधा। विशेषास्तु निश्चयतो नित्यद्रव्यवृत्तयोऽन्त्या विज्ञेयाः। इह तंतुषु पट इत्यादिवदिह प्रत्ययहेतुः समवायः। एवमेतेषां मीलने षट्त्रिंशदुत्तरभेदा भवेयुः। प्रत्येकमेतेषु च भेदेषु पृथिवी १ अपृथिवी २ नोपृथिवी ३ नोअपृथिवी ४ लक्षणाश्चत्वारो भेदा भवंति। एवमेते षट्त्रिंशच्चतुर्गुणिताश्चतुश्चत्वारिंशत्शतमितभेदा भवंति। एषां च पृथक् पृथक् प्रश्ने चतुश्चत्वारिंशत्शतं प्रश्नानां भवति। तत्र पृथिवीमार्गणे दत्तं देवतया मृत्तिकाखंडम् अपृथिवीयाचने च दत्तं तोयादि एवं नोपृथिवीयाचने च वितीर्णं वारिप्रभृति नोऽपृथिवीप्रार्थने च दत्तं मृत्तिकाशकलमेव नान्यत् किंचन। एवमापोऽनापो २ नोआपो ३ नोअनापः प्रभृतीन्यपि प्रश्नानि भावनीयानि। तदनु निर्जितः स रोहगुप्तो गुरुभिः तन्मस्तके च श्लेष्ममल्लको भग्नः श्रीगुरुभिः। तदनु पुनस्तेन खेलमल्लकमस्मात् मुंडितवपुषा त्रैराशिकमतं प्रवर्तितम्। इत्युक्ता किंचित् षष्ठत्रैराशिकमतवक्तव्यता ६।

अथ सप्तमाऽबद्धिकनिह्नवस्वरूपं किंचित् प्ररूप्यते। तत्राऽबद्धं स्पृष्टमेव कर्म प्ररूपयतीत्यऽबद्धिकास्ते च दशपुरनगरे श्री-

श्री ... गच्छीय ज्ञान मन्दिर, जय...पुर

वर्द्धमानजिनपतिनिर्वृतिसमनंतरमतीतेषु चतुरशीतिममधिकपंचशतमितेषु वर्षेषु यथा गोष्ठामाहिलतः समुत्पन्नास्तथा किंचिद् भाव्यते । तत्र गोष्ठामाहिलेन श्रीआर्यरक्षिताचार्यैर्दुर्बलिकापुष्यमित्रस्य सूरिपदवीदानात्तदुपर्यभिनिवेशेनाऽन्यथा प्ररूपणाद् बद्धिकत्वमाहतम्, तेन प्रथमं किंचित् श्रीमदाऽऽर्यरक्षिताचार्यस्वरूपं प्रपंच्यते। तथाहि—अवंतिदेशे दशपुरनाम्नि नगरे उदायनो नाम महीनेता । तदीयराज्ये च श्रीमान् सोमदेवनामा पुरोहितः । तत्प्राणप्रिया च विदितजीवाजीवादिनवतत्त्वा रुद्रसोमा नामधेया विज्ञातहेयादेया । तयोश्च तनयौ चार्य्यरक्षितफल्गुरक्षिताभिधानौ । तौ च तज्जनकेनाध्यापितौ चतुरो वेदान् । तथाप्यार्यरक्षितस्तद्विशेषं पिपठिषुः सघृतसितपायसभोजनमिव पठनं प्रियतमं स मन्यमानः प्रययौ पाटलीपुरनगरम् । तत्र पुनश्चोपाध्यायादधीतवान् सवेदरहस्यम् । तदधीत्य पुनर्गृहीतोपाध्यायानुज्ञः स समाययौ स्वपुरपरिसरोद्याने । तदा च तज्जनकज्ञापिततद्वृत्तांतेन तत्पुरपरिवृढेन विहितप्रवेशमहामहः स सोमदेवसुतः प्रतिसदनं कुलवृद्धसधववनिताप्रदत्त-जय जीव नंदेत्याशीर्वादः समासदन्निजनिकेतनांगणमपराह्णे । तदा च तदीयमाता रुद्रसोमा विधाय सामायिकं धर्मध्यान-विधानसावधानाऽऽस्ते । अस्मिन्नवसरे च सा चिरसमयोत्कंठितेन भूमितलमिलन्मौलिना प्रणता तत्तनूजन्मना तदा च सा रुद्रसोमा स्वसामायिकव्रतातिचारपरिहाराय तं नानंदयामास स्वागतनारीजनदाशीर्वादप्रदानेन । सोऽपि च तदिच्छया तत्सविधे समासीनश्चिरसमयादपि तदनास्या निर्विण्णः संचिंतयामास किमनेन मदधीतेन जननीमनस्तापदेन, यन्मामिलातल-लुठन्मौलिमपि नानंदयत्याशीर्वादप्रदानेन मत्सवित्री । इति विचिंत्य स विज्ञप्तवान् 'मात ! किं न ते तोषो मदध्ययनेन यन् मां विनयावनम्रमपि न जल्पयसी 'त्युक्ते सा प्राह 'पुत्र ! दुर्गतिदुःखप्रदेन कथं भवति भवदधीतेन मम मनस्तोष'

इत्युक्त' सन् स आह ' जननि ! यदध्ययनेन तत्रभवत्यास्तुष्टिर्वोभविति तद् भवत्या समाख्य प्रसादमाज्ञापय ' इति तेनोक्ता सती सा स्व धन्य मन्यमाना सप्रणय प्रोक्तवती ' वत्स ! निर्दलितदुर्नयविवाद दृष्टिवाद पठ शठताविप्रयुक्तः ' स चिंतयामास यस्याभिधानमपि मनोहर तदध्ययन तु कीदृग्विध भविष्यतीति समुत्पन्नतत्पठनकौतुकः स सौवसवित्रीं प्रश्नयाबभूव 'भूवलयतिलकतुल्य तदध्यापक गुरु प्रकटीकुरु यथा तन्निकटे तत् पठामि।' इति तेन विज्ञप्ता सती सा त प्रत्युवाच 'तनयास्मीयेक्षुवाटके तोसलिपुत्रनामान श्रीजैनाचार्या' सर्वजनाश्चर्यकारिज्ञाननिधय. समवसृता' सन्ति तत्पार्श्वे त्वमधीष्व विश्वजनीन श्रीजिनोपज्ञ श्रीदृष्टिवाद कृतभव्यजनताचित्ताह्लादम् ।' इति तयोक्त' .स प्रातःसमये तत्र यास्यामीत्युदीर्य तद्ध्यानैकतान मनास्त्रियामामतिवाहयामास विनिद्रतया । प्रत्यूषे तु स चलितस्तत्पठनाय । तदा च तस्यार्द्धमार्गे तज्जनकसुहृत्तत्प्राभृतहेतुकासतटप्रतिष्ठापितसार्द्धनवेक्षुदडः कोऽपि द्विजन्मा मिलितः सम्मुखस्तेनालिंगनपुरस्सर सपृष्ट. ' किमर्थमेवमेकाकी गच्छन्नसि रसालवाटके, इक्षुवस्तु त्वदर्थं मयानीता' सति तेन व्याघृत्य समागच्छ मया सम सौवसौधे ।' इति तेनोक्तः सन् स आर्यरक्षितः कथयामास–' जनन्यादेशादह व्रजन्नस्मि शीघ्रमेव समेष्यामि ततः कृतकृत्यः, पूज्यपादैस्तु गतव्य सौधावासे बधु प्रसत्तिहेतवे ।' इत्युक्त्वा सौवेक्षुवाट प्रति स त्वरँश्चिंतयामास ' अस्मान्निमित्ततो दृष्टिवादस्य परिच्छेदा अध्याया वा नव सार्द्धाः समाप्तिं यास्यति न समधिक'मिति निश्चित्य गत स प्रातः समये शारदवारिदगर्जितरवानुकारियतिजनविधीयमान स्वाध्यायध्वन्याद्वैतमयोपाश्रयद्वारदेशम् । तत्रागतः सन् स चिंतयामास कथमेतच्छासनानभिज्ञेनैतद्वन्दन विधेयमिति चिंतयतस्तस्य श्रीगुरुवदननिमित्त तत्र ढड्ढराभिधः श्राद्धः समागमत् । तत्पृष्ठानुगः सोऽपि तत्क्रियमाण गुरुवदनादि

विलोक्य तद्वच्चक्रुतवान्, सर्वसाधुवंदनानंतरं च श्राद्धवंदनं तु स नाऽकार्षीदहृष्टत्वात्तस्य । इत्यनेन चिह्नेनाऽभिनवं तमालोक्य श्रीगुरवस्तं प्रश्नयांचक्रु 'भद्र ! कुतस्ते धर्मावाप्ति 'रिति तैः पृष्टः सन् स प्रोचिवान् । 'भगवन्नस्मादेव ढड्ढरश्रमणोपासकपुंगवात् ।' इति तेनोक्ते सति कश्चिद् यतिस्तं लक्षयांबभूव 'भगवन् ! यस्य ह्यो दिने नृपतिना प्रवेशमहामहश्चक्रे सोऽयं पुरोहिततनूजन्मार्यरक्षितनामा प्रथमगुणस्थानवर्त्ती न ज्ञायते केनापि निमित्तेनाऽत्र संप्राप्तोऽस्ती 'ति । अथ चार्यरक्षितः श्रीगुरुनभिवंद्य विज्ञपयामास निजजनन्युक्तम् । तच्चाकर्ण्य संजातकौतुकास्ते श्रीसूरिपादाश्चितयामासुर्यदयं द्विजन्मापि पुरोहिततनूजन्मापि नृपतिपूज्योऽपि कीदृग्विधमार्दवगुणवान् वर्त्तते । तदयं योग्यः श्रीमदार्हतधर्म्मस्येति विचिंत्य श्रुते सोपयोगास्तेऽभूवन् । तदुपयोगदानाच्च तं प्रभावकं विज्ञाय तं प्रति ते कथयामासु'र्भद्र ! जैनप्रव्रज्यामंतरेण न भवति दृष्टिवादपाठस्ततः प्रथमं तामेव स्वीकुरु चेत्तदध्ययनार्थी '। इति तैरुक्तः सन् स विज्ञप्तवान्–'भगवन् ! मातुरादेशकृते तामपि स्वीकरिष्यामि परं नृपतिप्रभृतिकः समस्तोऽपि जनः सांसारिकरागेण मेऽप्यनुरक्तस्तेन प्रव्रज्यादानसमनंतरमत्र स्थितस्य मम तन्मोक्षमपि प्रसह्य कारयंति नृपतिप्रभृतयस्तेन मयि दीक्षिते श्रीप्रभुपादैरन्यत्र विहर्त्तव्यम् ।' इति तेनोक्ते सति तदुक्तं स्वीकृत्य तं दीक्षयामासुर्जैनदीक्षया श्रीसूरिपादाः । तत्तपस्यासमनंतरमेव तं पुरस्कृत्य ते विजहुरन्यत्र नगरांतरे । तत्र च तमध्यापयामासुस्ते सामायिकप्रभृतिकं श्रुतं यावत्स्वाधीतं पूर्वगतम् । अधीते शेषं तत्पाठाय च ते प्रेषयांचक्रुस्तमवंतीस्थितश्रीवज्रप्रभुपादसमीपे समं गीतार्थसाधुभिः । स च गच्छन् मार्गे कस्मिंश्चिन्नगरे समागमत्तत्र च श्रीवज्रस्वामिसूत्रदायिनः श्रीभद्रगुप्तसूरयः संति । तदुपाश्रये श्रीमानार्यरक्षितः प्राविशत् तदा च तैः श्रीभद्रगुप्तसूरिभिस्तदंतिके स्वागतादि

पृष्टः स प्रोक्तः ' भद्र ! मम निर्यामकताकृते कियतमपि समयमवतिष्ठ त्वं यथा मम त्वन्निर्यामनात्समाधिमृतिर्भवेत् । यतः प्रेत्यसुखाभिलापिणामयमेवावसरः सम्यक्साधितो विलोक्यते ' इति तैरुक्ते सति तद्वचि तद्वचनं प्रपद्य स तत्र तस्थिवान् । तत्र च स्थितेन तथा ते शुश्रुषिता यथा तेषां देवभूयगततामिव समभूत् समाधिः । एवं च तद्वपरिवस्याविधानसावधाने तस्मिंस्ते गोप्यमिदं तस्मै निवेदयामासु ' यद्दुज्जयिन्या प्राप्तेन भवता पृथगुपाश्रये शयनादने विधेये । यतो वज्रस्वामिमहत्या येन सकृदपि स्वापसदने निर्मिते स तैः सममनशनप्रतिपन्ना भविष्यति । भवाश्च श्रीमदार्हतमतप्रभावको भविता तेन मद्वचनं विधेयं भवता ' इति तैरुक्तः सन् स तथेत्युदीर्य तद्वचनं प्रपन्नवान् । अथ च श्रीमद्रगुप्ताचार्येषु तन्निर्यामनात् समाधिना देवत्वमधिगतेषु स श्रीमानार्यरक्षितस्ततः स्थानाद् विजहार श्रीवज्रप्रभुपादसमीपे । अथ च नगरासन्ने तस्मिन् समागते सति श्रीवज्रस्वामिना निशाविरामे स्वप्नो ददृशे यत् केनापि प्राघूर्णकेन परमान्नं मत्पतद्ग्रहस्थितं बहु भक्षितम् अल्पमेव स्थितमिति । स च श्रीगुरुभिः स्वविनेयानां पुरस्तादुक्तः द्विवारोऽप्येवं यदेतत् स्वप्नानुभावेन कोऽप्यद्य विनेयः समायास्यति स च मयि स्थितं बहु श्रुतं पठिष्यति स्वल्पमेव स्थास्यति । इति तस्मिन् स्वविनेयानां पुरः स्वप्नविचारं प्ररूपयति सति सम्प्राप्तः श्रीमानार्यरक्षितस्तदा च श्रीवज्रस्वामिपादास्तमभिनवमभ्यागतं समागतं निरीक्ष्याभ्युत्थानपुरस्सरं तं प्रति स्वागतादिप्रश्नं चक्रुः । सोऽपि श्रीपूज्यपादानभिवन्द्य समुपविष्टस्तत्पादपद्ममूले । तदा च ते श्रीगुरवस्तं प्रति प्रश्नयाबभूवु ' महानुभाग ! कुतस्ते किं निमित्तमावागमन ' मिति तैः पृष्टः स प्रोचिवान् ' भगवँस्तोसलिपुत्रसूरिपादानां समीपात् ' तदा च तैरुक्तं ' भवान् किमार्यरक्षितोऽधीतशेषपूर्वगतश्रुतपाठाय समायातोऽसी 'ति तैः पृष्टे स ' ओ ' मित्यु-

चिवान् । तदा च तैः प्रोक्तं 'चेदध्ययनाय समायातोऽसि तर्हि तवोपधिः क्व प्रवर्त्तते ?' इति तैरुदीरिते 'पृथगुपाश्रये स मुक्तोऽस्ती' ति स प्रोक्तवान्, यतः पठनं श्रीपूज्यपादपद्ममूलेऽशनादिकन्तु श्रीभद्रगुप्तसूरिपादानामादेशात् पृथगुपाश्रये करिष्ये इति तेनोक्ते श्रुतोपयोगदानादेतद् युक्तमेवेति विज्ञाय तमध्यापयामासुरादरेण पृथगुपाश्रयस्थायिनमपि । एवं च पठता तेनाधीतानि नवपूर्वाणि दशमस्य च पूर्वस्य जिन(२४)मानानि जविकानि परं दशमपूर्वार्द्धगततत्पाठे दुर्गमगममंगक-सदृशजविकावलिघोषतस्तस्य महानायासः समभूत् । अस्मिन्नवसरे च तदीयमाता रुद्रसोमा चिंतयामास यन्मयाऽऽर्यरक्षित-तुल्यस्तनयो मदीयनयनविषयतो दूरीकृतस्तन्मम लाभमिच्छतो मूलहानिरभवद् । यतस्तद्विप्रयोगः कृशानुवन्मदीयतनुं प्रज्वालयत्यहर्निशम् । तदद्यापि लघुतनयं फल्गुरक्षितं प्रेषयित्वा तमाकारयामि । यतो मम मनःसमाधिर्बोभवतीति विचिन्त्य तदाऽऽहूतिविषये सा प्रश्नयामास सौवप्राणप्रियं सोऽपि कथयामासैतद्विषये भवत्येव प्रमाणम् इति तेनोक्ता सति सा श्रीआर्यरक्षितसमाहूतये फल्गुरक्षितं प्रेषयामासेति शिक्षयित्वा यज्जननी श्रीवीरजिनेनापि मानिता सा किं न त्वया स्मर्यते ? । अन्यच्च चेत्तव निर्ममता मात्रादिस्वजनविषये तथापि त्वयि समायाते त्वत्संबंधिमत्प्रभृतिस्वजनवर्गस्य प्रव्रज्या-दानलाभोऽपि संभवतीत्यादिदत्तजननीशिक्षः प्रणततच्चलननलिनयुगलश्चालितः स्वबंधुसमाहूतये फल्गुरक्षितः । प्राप्तश्च कियद्भिरपि वासरैः स्वसोदरसमीपे । तत्रागतेन च तेन निवेदितं तदखिलं निजजनन्युक्तं स्वसोदर्याग्रतः । तस्मिन्निवेदिते च स प्रोक्तवानार्यरक्षितः 'यदि सर्वोऽपि मदीयस्वजनवर्गः प्रव्रज्यां जिघ्रहीषुस्तत् प्रथमं त्वमेव तां स्वीकुरु चेन्मयि स प्रणयः' । इति तेनोक्ते सति फल्गुरक्षितस्तद्वचनं प्रतिपन्नवान्, प्रतिपन्नवति च तस्मिन्नार्य्यरक्षितस्तमनुजग्राह जैन-

प्रव्रज्यया । अथ चार्यरक्षितः पुनः पुनर्जननी वदापनविषये प्रेरयति लघुभ्राता । सोऽपि च जविकाध्ययने बहुक्लेशमनुभवन् श्रीवज्रस्वामिन प्रति विज्ञप्तवान् 'भगवन्, दशमपूर्वस्याद्यापि कियदवशिष्यते ? ।' इति तेन विज्ञप्ते श्रीवज्रगुरुरपि प्रोक्तवान् 'अधीष्यस्पक्षेप किमनेन प्रश्नविधानेन ? ।' पुनरपि व्यतीते सति कियत्यपि सत्यपि समये स तमेव प्रश्न चकार गुर्वन्तिके । श्रीगुरवोऽपि त प्रत्यूचु'र्महानुभाग ! मदरस्तिष्ठति सर्षपस्त्वधीत' इति श्रीगुरुभिरुक्ते स कियत्यपि दिनानि पुनर्महोद्यम व्यधात्तदध्ययने । अथ च मातृवदापनविषये पुनः पुनरनुजन्मना प्रेरितस्तद्विषयोत्कण्ठितचित्त' स विज्ञप्तवान् श्रीगुरुम् 'अनुजानीष्व मां जननीप्रभृतिसासारिकवर्गवदापनविषये । ततः कृतकृत्य पुन॰ मत्वर समेष्यामि श्रीपूज्यपादपादमूले पुरत पठनार्थं' तदा च श्रीगुरुभि॰ श्रुतोपयोगदानादवगत यद्दशमपूर्वमध्येव स्थास्यति मदीयायुषः स्तोकत्वात् प्रत्यागतस्य चास्य मया सार्द्धममिलनात् । इति दत्तश्रुतोपयोगैस्तै॰ पूज्यपादै॰ प्रोक्त–'भद्र ! तव इयत्येव प्राप्तिस्तेन तव मिथ्यादुष्कृतमस्तु त्वया सुखसयमयात्रया गतव्यम् ।' इति दत्तानुज्ञ स श्रीपूज्यपादपादवदनपुरस्सर विजहार दशपुरपुर प्रति । स सोदरः मार्गे च मिलितः स पाटलीपुरनगरे स्वधर्माचार्याणा श्रीतोमलिपुत्राणाम् । तदा च ते गुरवः स्वविनेयमधीतसार्द्धनवपूर्व श्रीआर्यरक्षितनामान योग्य विज्ञाय त सौवपदे स्थापयित्वा परलोक साधयामासु॰ । श्रीआर्यरक्षितसूरयोऽपि स्वधर्मगुरुषु श्रीतोसलिपुत्रसूरिषु दिवगतेषु सुखसयमयात्रया प्रापुर्दशपुरनाम्नि पुरे । तत्रागतैश्च तै॰ श्रीआर्यरक्षितसूरिभिः स्वदेशनया प्रतिबोध्य प्रव्राजितः स्वजननीभगिनीप्रभृतिक' पितृवर्ज स्वजनवर्गः । पिता तु तै सार्द्धं तिष्ठति प्रेम्णा तपस्यां तु न गृह्णाति वदति च गुरूणां पुरत॰ 'आजन्मावधिगृहीतोपवीतकरपात्रिकावस्त्रयुगलछत्रिकोपानत्॰

प्रभृतिकं भूमिदेववेषं कथं मुंचामि ?। चेदेतान्यनुजानीध्वं तदा प्रपद्येऽहं युष्मदीयां प्रव्रज्याम्' इति जनकेनोक्ते गुरवश्चिंतयामासुः—अनेन वेषेण जैनप्रव्रज्यादानं त्वनुचितम् । तथापि प्रव्रज्यादानसमनंतरं शनैः शनैः समयाज्ञया कारापयिष्यतेऽनेन सम्यक्साधुर्लिंगग्रहणादिकमिति विचिंत्य तं जैनदीक्षया दीक्षयामासुः श्रीसूरयः। दीक्षासमनंतरं च ग्राहितो ग्रहणासेवनालक्षणां द्विविधां शिक्षां स्वयमेव श्रीआर्यरक्षितसूरिभिः । अथ चाऽन्यदा पूर्वशिक्षिताः श्रमणोपासकपोताः प्रोचुः 'यद्व नयं छत्रिकाधरमेकं मुक्त्वा सर्वानपि साधुपुंगवान्नमामः' इति तैरुक्ते स्वपराभूतिं निरीक्ष्य स जरत्श्रमणकुंजरः स्वांगजन्मानं श्रीआर्यरक्षितनामानं गुरुं प्रति विज्ञप्तवान् 'पुत्र! श्राद्धशावैः सर्वेऽपि साधवो वंद्यन्ते, अहं तु कुतो हेतोरवंदनीयः ?' इति तेन विज्ञप्ते श्रीगुरवस्तं प्रति प्रोचुः 'तात! छत्रिकाधरणे कथं तव वंद्यता जाघटीति यतो गृहीततपस्यानामेतस्या धरणमनुचितं तत् कृतमनया उत्तमांगे तस्मिन्सिचयांचलोदयः' इति श्रीगुरुभिरुक्ते तेनोक्तं तर्हि भवत्वेवं एवमुपानत्करकपात्रिकोपवीतानि त्याजितः स श्रीगुरुभिः। परिधानं तु विप्रजनोचितमद्यापि न मुंचति । अन्यदा च पूर्वशिक्षितास्ते श्राद्धशिशवः परिधानपरिहारकृते तं प्रति पूर्ववत् प्रोचुस्तदा च स संजातकोपस्तान् प्रत्यूचे 'मा वंदध्वं यूयं कदाचन युष्मद्वंदनेन या देवत्वावाप्तिः साऽपि मा भूयात् परं परिधानं त्वेतन्न त्यक्ष्ये' इति तेनोक्ते सति तत्त्याजनकृते श्रीसूरयश्चिंतयामासुरुपायांतरम् । अन्यदा च कस्मिन्नपि श्रमणसत्तमे कृतानशने कालधर्ममुपेयुषि पूर्वसंज्ञिताः साधवस्तच्छरीरोद्वहनायाहंपूर्वं क्षमाश्रमणवितरणपुरस्सरं श्रीगुरुं विज्ञपयामासुस्तदा च ते श्रीसूरयोऽलीककोधं विधाय तान् प्रति कथयामासुः 'किं समग्रमपि पुण्यं युष्माभिरेवाऽर्जयिष्यते न त्वसमत्संबंधिभि'रिति श्रीगुरुभिरुक्ते सति जनकर्षिः प्राह 'पुत्र, यदि प्रभूतं पुण्यमत्र वोभवीति तदा ममा-

दिशास्मिन् कर्त्तव्यविधाने ' इति तेनोक्ते श्रीगुरुतोऽप्यूचुरस्मिन्नुह्यमाने उपसर्गाः समुत्तिष्ठति तत्सहन चेन्न क्रियते तदास्माक शुभ न भवति, अस्मिन्नुह्यमाने च निर्जरा महत्तरा, एव स्थिते सति यथारुचि विधेहि ' इति श्रीगुरुभिरुक्ते स प्राह ' मया गृहित्वे पुरोहितपदप्रतिष्ठितेन सर्वाण्यपि नृपतिकृत्यानि निष्प्रत्यूहतया निर्वाहितानि तदेतदुद्वहने का मम प्रत्यूहभीति '– रित्युदित्वोत्क्षिप्त तेन तत्कुणपम्। एव सोत्साहचिन्यस्ततत्कुणपस्य समस्य तस्य व्रजत' पूर्वशिक्षिता शिशवः कटिनिवसनमप जह्रुः। अपहृतेऽपि तस्मिन् स्वतनयामगलभिया स न मुमोच शवमवश्चिच दूनोऽपि। तदा च तत्क्षणमेव पूर्वं सज्जीकृत श्चोलपट्टस्तत्कटयां दवरकेण बद्धः साधुभि'। अथ च कृत्य विधाय प्रत्यायाते सति तस्मिन् गुरुभिः परिधानकृते शाटकनिमन्त्रणे तस्य कृते सति स प्रोचे यदालोकनीय तत् त्वालोकित सर्वैरपि। अथ चोलपट्ट एवास्तु किमधिकेन परिग्रहसग्रहेण त्यक्तसगस्य मे ?। एवमुपायैस्त्याजितः स सकलमपि गृहस्थनेपथ्यम्, पर श्रीगुरुभिरनेकधा बोध्यमानोऽपि स गोचरचर्याया न याति। तदा च श्रीगुरुभिस्तस्य तद्गमनकृते साधव एव रहः शिक्षिता.। ' यदद्य युष्मदुचिहृत युष्माभिरेव भोज्य न तु मत्पितुः किमपि देय 'मिति तान् शिक्षयित्वा सौवगृहारमापृच्छ्य विजह्रु श्रीगुरव. समामन्न- ग्रामे। गच्छद्भिश्च तैः पितृमन प्रत्यायनार्थं साधव एव उक्ता यत् ' मज्जनकस्यैवैयावृत्यादिविधौ युष्माभिर्यतनीयम्।' अथ च भोजनवेलाया साधुभिः श्रीगुरुतातर्षिर्न निमन्त्रितस्तेन तस्य तद्दिनेऽपोषणमेव समभवत्। अथ च द्वितीयदिने समागतै' श्रीगुरुभिः स्वतातस्य समाधाने पृष्टे सति स प्राह ' पुत्र ! चेद् भवता बहिर्बहुदिनानि विहारो विहितोऽभविष्यत्तदा ममानशनसिद्धिः सजाताऽभविष्यद्। यत एतैर्भवद्विनेयैरानीत भक्ताद्यैतैरेव भुक्त मन्नामापि न गृहीत 'मिति तेनोदिते

श्रीगुरवः कृतकक्रोधं विधाय साधून् प्रत्यूचिरे ' भो भवद्भिः सर्वैरपि सुक्तमस्मत्पितुस्तु नामापि नात्तं तत्र किं निमित्त '-मिति श्रीगुरुभिरुक्तास्ते श्रमणसत्तमा विज्ञपयामासुः ' श्रीपूज्यपादाः ! प्रसादमाधाय क्षंतव्योऽयमपराधो भवद्भिः शून्य-चित्तानामस्माकम् । ' इति तैरुक्ते सति श्रीगुरवः स्ववप्तारं कथयामासुः ' तात ! पराभूतिहेतुपरकीयाशा न विधेया । आनयिष्याम्यहं स्वयमेव त्वत्कृते भक्तादी ' त्युदीर्य पात्रमादाय गोचरचर्यायां गच्छत्सु श्रीगुरुषु स ज्यायानूचिवान् ' पुत्र ! त्वं गणाधिपतिः कथं चरिष्यसि गोचरचर्यायामहमेव गमिष्यामि तत्कृते किं मयोपविष्टेने ' त्युदीर्य गुरुभिर्न्नार्य-माणोऽपि स ययौ भक्ताद्यन्वेष्टुम् । गच्छँश्च प्राप्तः स कस्यचिन्महेभ्यस्य सदने तत्र चापद्वारा प्रविष्टस्तस्मिन्निभ्येनोक्तम् ' ऋषे ! मूलद्वारेण किं नागतो यदपद्वारा प्रविष्ट ' इति तेनोक्ते स प्राह ' भो ! कमलायाः सौधमध्ये विशंत्याः किं द्वारमपद्वारं वा ' इति तेनोक्ते सति स इभ्यः समुचिततत्कालोत्तरवितरणेन तुष्टमनास्तस्मै मुनये द्वात्रिंशन्मोदकान् प्रति-लाभयामास । तांश्च विहृत्य स उपाश्रये समागत्य गुरून् प्रति दर्शयामास। गुरुभिश्च तानालोक्य चिंतितम् अनेन शकुनेना-स्मत्संताने द्वात्रिंशत् शिष्या भविष्यंतीति । अथ च ते मोदकाः श्रीगुरुमुखात् प्रभूततरं सुकृतमवधार्य साधूनां तेन वितीर्णास्तदनु पुनरपि स सर्पिः खंडं पायसं समानीय स बुभुजे । एवं च स लब्धिसंपन्नः समभूद् बालग्लानादिसाधूना-मुपकारकारकः । तेषां च गुरूणां गणे दुर्बलिकापुष्पघृतपुष्पवस्त्रपुष्पेत्याख्या विख्यातास्त्रयः साधुसत्तमा वेविद्यंते । तेषु घृत-पुष्पस्येदृशो लब्धिविशेषो यत् केनापि दुर्निंधद्विजन्मना निजजायाया गुर्विण्याः कृते ऋतु( ६ )मितैर्मासैर्यदाज्यं मीलितं भवति तदपि चेद् घृतपुष्पः प्रार्थयति तदा सा तत्तस्मै निरवशेषं वितरति । वस्त्रपुष्पस्य पुनरीदृशीलब्धिर्यत् कापि निर्व्वीरा-

गनिता कर्त्तनकर्मणा स्वपरिधानकृते कृतवती कष्टेन शाटकमेकं तमपि वस्त्रपुष्येण प्रार्थित सा तस्मै प्रयच्छति अन्येषां तु तत् प्रदाने किं कथनम् ? दुर्बलिकापुष्पस्तु यथेच्छं हविर्भुञ्जानोऽपि पूर्वपठितपूर्वनवकनित्यस्मरणवशतः कृशतरतां तनौ भजते । तस्य च सौगतमतमाश्रिता दशपुरवासिनः स्वजना श्रीगुरुं प्रति विज्ञपयामासुर्यत् ' अस्माकं मते भिक्षवो ध्यानं विदधति, युष्मद्गमने तु तन्नास्तीति ' तैरुक्ते सति श्रीगुरवः प्रोचुरयं युष्मदीयः स्वकीयो दुर्बलिकापुष्पस्तनौ दुर्बलत्वं ध्यान विधानत एव धत्ते ' इति श्रीगुरुभिरुक्ते सति तत्सचिवाः प्रोचुर्यत् ' अयं गार्हस्थ्ये स्निग्धतराहाराभ्यवहारतः प्रबल तनुरासीद् युष्माकं तु भिक्षावृत्तीनां कुतस्तद्योग ' इति तैरुक्ते सति श्रीगुरवः कथयांबभूवुरस्माकं लब्धिनिधेर्घृतपुष्पात्सर माहारयोगस्तु भूयानपि वेविद्यते । अथ चेदस्मदुक्ते युष्माकं न प्रत्ययस्तदा युष्माभिरयं स्वनिलये पोषणीयः सरसाहारैः ' इति गुरूक्ते सति तैर्गुर्वादेशेन स्वागारे नीत्वा स स्निग्धाहारैः पोषितोऽप्यनवरतं पूर्वपठितपूर्वगतश्रुतचिंतनवशात् कृशतामेव भजते । अथ गुर्वादेशेन पूर्वगतध्याने त्यक्ते प्रांताहारभोज्यपि स समभूत् पुष्टतनुः । एवं च तस्य ध्यानविधानं निरीक्ष्य तद्गमनेन प्रतिबुद्धास्तदीयस्वजनाः श्रमणोपासकतां भेजुः । तस्मिंश्च गच्छे दुर्बलिकापुष्पफल्गुरक्षितविंध्यगोष्ठामाहिलनामानः श्रुति(४)मिताः प्रज्ञातिशयविश्रुतकीर्त्तयो यतयो विजयन्ते । तेषां मध्ये विंध्येन विज्ञप्ता श्रीगुरवः ' भगवतो महत्या वाचना-मडल्यां ममाध्ययनं विदधतः स्खलना बोभवीति तेन मम पृथग्मडल्यां वाचनाप्रदानविषये प्रसीदध्वम् ' । इति तेन विज्ञप्ते सति श्रीगुरवस्तं प्रति कथयांबभूवु ' भद्र ! यदि तव पृथग्मडल्यां वाचना दीयते तदान्येषां साधूनां तदंतरायः स्यात्तेन तव दुर्बलिकापुष्पो वाचनाचार्यो भव'त्विति गुरुभिरुक्ते गुर्वादेशाद् शिष्यस्य वाचनां ददतो दुर्बलिकापुष्पस्य पूर्वाधीतस्य

नवमपूर्वस्य गुणने भंगपातेन किंचित् विस्मरणात् खिन्नमनाः स दुर्बलिकापुष्पः श्रीगुरुं प्रति विज्ञपयामास ' भगवन् ! मम वाचना दातव्यतया पूर्वाधीतस्य नवमपूर्वस्य विस्मृतिर्जायमानास्ति चेदतः परं विंध्यस्य वाचनां दापयिष्यथ, मया तदा मम नवमपूर्वं विस्मरिष्यतीत्येवं सति श्रीगुर्वादेशः प्रमाण 'मिति तेन विज्ञप्ते सति श्रीगुरुश्चिंतयामास चेदेतस्य मेधानिधेरेवं विस्मृतिर्जायमानास्ति तन्नूनमतः परं कालदोषतो मेधाहानिर्भविष्यति तेनैकस्मिन् सूत्रे चतुर्द्धाऽर्थव्याख्यानं विधातुं न कोऽपि शक्तो भविष्यतीति विचार्य पृथक् पृथक् सूत्रेषु चतुर्द्धाऽनुयोगं सूत्रयामास । तत्र चरणकरणानुयोगः सोपांगेष्वंगेषु मूलग्रंथेषु च्छेदग्रंथेषु च स्थापितः । धर्मकथानुयोगस्तु श्रीउत्तराध्ययनप्रमुखेषु ग्रंथेषु । गणितानुयोगस्तु सूर्यप्रज्ञप्तिप्रभृतिषु । द्रव्यानुयोगस्तु दृष्टिवादे । एवं प्रथक् पृथक् सूत्रस्थापितानुयोगाः श्रीआर्यरक्षितसूरयो विजहुर्मथुरानगर्यां, तस्यां च प्राप्ता यक्षगुहायां व्यंतरायने स्थितास्ते सपरिकराः । इतश्च विदेहेषु वंदनार्थः गतः प्रथमकल्पपतिः श्रीसीमंधरजिनवरसमीपे पप्रच्छ निगोदस्वरूपम् । तस्मिंश्च यथास्थिते भगवता प्ररूपिते स पुनः पृष्टवान् ' भगवन्नीदृशं निगोदस्वरूपं संप्रति कोऽपि भरतवर्षे कथयती 'त्येवं तेन पृष्टे सति तीर्थपतिर्जगाद ' मथुरापुर्यां श्रीआर्यरक्षितसूरयो मदुक्तस्वरूपं प्ररूपयष्यंती'ति भगद्वचसा प्रतीतोऽपि कौतुकावलोककृतेऽत्यंतजराजर्जरिततनुद्विजरूपधारी ययौ स श्रीआर्यरक्षितसूरीणां सन्निधाने, तत्र च तेन निगोदस्वरूपे पृष्टे सति यथास्थितोक्त्या तुष्टमनास्तेषां पुनरपि ज्ञानातिशयं ज्ञातुं निजायुः पृष्टवान्। तदा च ते श्रुतोपयोगदानतस्तदायुः सागरसमानद्वैतमितमवगत्य प्रोक्तवंतः श्रीसूरयः ' त्वमर्णवद्वितयमितायुसौधर्मपतिर्विर्त्तसे न तु मनुजः ' इति श्रीगुरुभिरुक्ते सति स्वरूपं प्रगटीकृत्य स्वःपतिः प्रोक्तवान् ' भगवन् ! श्रीसीमंधरस्वामिवचनान्निगोदस्वरूपप्रश्नकृते समेतोऽहमभूवं

यादृश तत्स्वरूप श्रीसीमधरजिनेनोक्त तादृश श्रीपूज्यपादैरप्युक्तम् । अथ यास्याम्यह स्वस्थाने ' इति तेनोक्ते सति श्रीगुरव' प्रोचुस्त प्रति ' प्रतीक्षस्व क्षण यावद् यतय' समायाति तवर्द्धि दृष्ट्वा च यथा ते चरिते निश्चलचेतसो भवति ' इति तैरुक्ते सति शचीपति प्रोचे ' मत्समृद्धिदर्शनेन निदान कुर्वंति यतयस्तेन मदवस्थानमयौक्तिक 'मिति तेनोक्ते सति ते प्रोचु- ' स्तर्हि किंचित् त्वदागमनचिह्न विधेहि ' इति तैरुक्ते सति द्वारमन्यतो विधाय ययौ त्रिदिव त्रिदशपति । अथ च समागतैः साधुभिर्द्वारप्रश्ने निर्मिते श्रीगुरुभिरूचे ' द्वारमन्यपार्श्वे वेविद्यते तेन तत्रागच्छध्वम् ' इति तैरुक्ते सति यतिभि. प्रोक्त ' मित्थमेतत् कथ जात 'मिति तत्पृष्टाः श्रीगुरवः प्रोचुः ' शक्रेणैतदेव विहित 'मिति श्रीगुरुभिरुदीरिते ते प्रोचुस्तर्हि किं न स स्थापितोऽस्मदागमन यावत् ' इति निगदिते सति श्रीपूज्यैरुक्त सर्वं पूर्वाशापतिस्वरूपम् । तस्मिन्नुक्ते च सति यतय श्चितयामासुः कथ भवत्यस्मादृशा हीनपुण्याना दर्शन शचीपतिरूपसमृद्धे' । अथ चाऽन्यदा दशपुरपुर प्रति विजह्रु श्रीआर्यरक्षितसूरयस्तदा च मथुरायां समायात' कोऽपि वादी चार्वाकः सर्वनास्तित्वस्थापनवावदूकः । तस्मिन्नायाते च सति श्रीसघेन साधुद्वय प्रेषित श्रीगुरुसमीपे गुरुभिश्च गोष्ठामाहिलस्तत्र प्रहितस्तन्निग्रहहेतवे । तेन च सति गृहीतः श्रीमदार्हत मतियुक्तिभि' तदा च स सघेन वादलब्धिसपन्नत्वात्तत्रैव चतुर्मासीं स्थापितः । इतश्च निजायुःपर्य्यंतमवधार्य श्रीगुरुभिः पृष्टा' साधव. को युष्माकमाचार्यः क्रियते ? । तदा च श्रीगुरुसत्कसकलमुनिभिरुक्त फल्गुरक्षितो गोष्ठामाहिलो वा भवत्वस्माकमाचार्यः श्रीगुरूणा च दुर्बलिकापुष्पः समत. । तदा च श्रीगुरुभि. समील्य सकलसाधुवर्गनिष्पावतैलसर्पिःकुमत्रितय निदर्शन दर्शितम् । यथा तेष्वधोमुखेषु विधीयमानेषु निष्पावाः सर्वेऽपि निर्यांति, तैल तु किंचित्तिष्ठति, घृत तु प्रभूत

तिष्ठति । एवं दुर्बलिकापुष्पं प्रतीत्य श्रुतविषये निष्पावसन्निभोऽहं जज्ञे, फल्गुरक्षितं तु प्रतीत्य तैलकुंभनिभः, गोष्ठामाहिलं त्वाश्रित्य घृतघटसमस्तेन मत्पदे दुर्बलिकापुष्पो युष्माकमाचार्यो भवत्वित्युदीर्य स स्थापितः स्वपदे । स्थापयित्वा चलंतं प्रोक्तं श्रीगुरुभिर्यतीनां यन्मयीवानुवर्त्तनीयमेतस्मिन्नवाचार्ये । इति दत्तयतिशिक्षाः श्रीमदार्यरक्षितसूरयः प्रांतसमयेऽनशनं विधाय ययुः सुपर्वालयं गीतार्थैर्निर्यामिताः । अथ च मथुरास्थितेन गोष्ठामाहिलेन जनकिंवदंत्याकार्णितं यद् गुरुभिः कुंभत्रयदृष्टांतमुदीर्य दुर्बलिकापुष्पस्य सूरिपदं दत्तम् । अतो हेतोर्गोष्ठामाहिलो गुरौ श्रीदुर्बलिकापुष्पे च भूतनव्याचार्ये प्रद्वेषं वहँश्चतुर्मासकानंतरं मथुरापुरीतो दशपुरपुरे प्राप्तस्तस्थौ पृथगुपाश्रये । अन्यदा च विंध्यनामा मुनिपुंगवः कर्मप्रवादाभिधानेऽष्टमपूर्वे कर्मस्वरूपमेवं प्ररूपयति । तथाहि किंचित् कर्म बद्धमात्रं तच्च शुष्ककुड्यापतितचूर्णमुष्टिवत्तदैव जीवाद् वियुज्यते । किंचिच्च स्पृष्टमार्द्रलेपकुड्योपरि पतितचूर्णतुल्यं तच्च कालांतरेण विघटते । किंचिच्च बद्धस्पृष्टनिकाचितवह्नयः पिंडवज्जीवेन सहैकीभावमापन्नं तच्च चिरेण वेदनाद् वियुज्यते जीवतः, एतच्च समाकर्ण्य गोष्ठामाहिलेन प्रोक्तं यथा कंचुकिनं नरं प्रत्यबद्धः कंचुकः समन्वेति एवं स्पृष्टमबद्धं कर्म जीवं समन्वेति जीवेन सहाऽविभागबद्धं तु कर्म न वियुज्यतेऽविभागबद्धत्वात् स्वप्रदेशवत् ततश्चापवर्गाभावः प्रसज्यते । इति तेनोक्ते विंध्यः प्राह–मया यथागुरुवदनारविंदादाकार्णितं तथा व्याख्यातमिति विंध्येनोक्ते स प्राह–गुरुः किं वेत्ति ? इति तेनोक्ते सति विंध्यः प्रपच्छ श्रीदुर्बलिकापुष्पमित्रगुरोः पार्श्वे गुरुभिरुक्तं यत् त्वया प्रोक्तं तत् सत्यं गुरुभिरित्थमेव व्याख्यातत्वात् । यत्तु गोष्ठामाहिलेनोक्तमविभागबद्धात् कर्मणो जीवस्य मुक्तिर्न भवति तदयुक्तं यतोऽयःपिंडः सर्वात्मनापि वह्निना भावितः प्रतिकर्मवशतस्ततो वियुज्यते एवं जीवोऽपि

कर्मस्कधेभ्यः। इति गुरुनिगदित युक्तिप्रकार निशम्य विंध्यो गोष्ठामाहिलपुरतो निवेदयामास। तस्मिन्निवेदिते स प्रति युत्युत्पत्तेरभावात् तूष्णिं स्थितः। अन्यदा च नवमपूर्वे साधूनां प्रत्याख्यान वर्ण्यते यथा 'पाणाइवाय पच्चक्खामि जावज्जीवाए' इत्यादि तदा च गोष्ठामाहिलेनोक्त नैतदेव युक्तम्। यतः प्रत्याख्यानमनियतावधितयैव कृत सांप्रत, नियतावधौ तु तस्मिन् विधीयमानेऽवधौ पूर्णे तु वयमेतत् प्रत्याख्यात वस्तु सेविष्याम इत्याशसादोषसभवात्। इति तेनोक्ते विंध्येनोदित नैतदेव गुरुभिरित्थमकथनात् इति विंध्येनोक्तः स श्रीदुर्बलिकापुष्पगुरुभिः सह वादकृते ढुढौके। तदा च गोष्ठामाहिलः स्वपक्ष स्थापयन् गुरुभिरूचे 'भो! आर्य! नहि साधूनां सविधिप्रत्याख्याने विधीयमानेऽवधौ पूर्णे वयमेतत् प्रत्याख्यात वस्तु सेविष्याम इत्याशसा लेशतोऽपि वेविद्यते। किंतु मृतानाममृताशनादिभवे मा भूत् प्राणातिपातविरत्यादिप्रत्याख्यानभग इति सपरिमाणतया तद्करण'मिति गुरुणा निगदितेऽपि गोष्ठामाहिलस्तन्न श्रद्दधे। अश्रद्दधाने च तस्मिन् श्रीसघेन शासनसुरी शरीरोत्सर्गेण समाकृष्टा तत्रस्थाने समेता सती कथितवती श्रीसघ प्रति किं निमित्त निर्मिता मत्स्मृतिस्तत्र-भवता श्रीसघेनेति तयोक्तः श्रीसघः समादिशत्तां यद् गच्छ त्व तीर्थपतिसमीपे पृच्छ चैतद् यद्दुर्बलिकापुष्पमित्राचार्यप्रभृतिक-श्रीसघो वक्ति तत् सत्यमुत गोष्ठामाहिलोक्त सत्यमिति श्रीसघोक्ता श्रीशासनदेवता प्रोक्तवती—यदि श्रीसघेन मदागम यावत्त-नूत्सर्गः क्रियते तदा तत्साहाय्यान्मम तत्र गमनसामर्थ्य सभवेदिति तयोक्तः श्रीसघस्तनूत्सर्गे तस्थौ। तस्मिश्च तत्रस्थिते सति सा गता श्रीतीर्थपतिसमीपे। तत्र च प्रष्टव्य पृष्ट्वा प्रत्यायाता श्रीसघसमीपे प्रोक्तवती च यद् भगवताऽऽदिष्ट श्रीसघः

सत्यवक्ता गोष्ठामाहिलस्तु तदितरत्प्ररूपको निह्नव इति तयोक्ते गोष्ठामाहिलोऽवादीदेषा मृषाभाषिणी न तत्र गतासीदिति तदुक्तिसमनंतरंतीर्थपतिवचनात्तं निह्नवं निश्चित्य श्रीसंघस्तं स्वबाह्यं चकार निर्विकारमनाः श्रीआर्यरक्षितगुरूणां मातुलमपि इति किंचिन्निगदिता सप्तमाबद्धिकनिह्नवस्वरूपवक्तव्यता। तदुक्तौ च भाविताः समासतो देशविसंवादिनः सप्तापि निह्नवाः।

अथ प्रक्रमाद् बहुविसंवादिबोटिकमतस्वरूपं प्ररूप्यते–तत्र श्रीवीरनिर्वाणादनु नवाधिकेषु षट्सु संवच्छरेषु समतीतेषु रथवीरपुरनगरे शिवभूतेस्ते समुत्पन्नास्तेन तत्स्वरूपं किंचिदुच्यते। तथाहि रथवीरपुरं नाम नगरम्। तत्र च दीपकाभिधानमुद्यानम्। तस्मिंश्च श्रीआर्य्यकृष्णाचार्य्याः समवसृताः। अथ च तत्र नगरे सहस्रयोधितया सहस्रमल्लेति प्राप्तविरुदस्तत्पुरपरिवृढबहुमाननीयः शिवभूतिनामा प्रभूतविभावर्यतिक्रमे प्रायः समेति सौधावासे। अन्यदा च तद्धेतुकमतीवखिन्ना सती तत्प्रणयिनी श्वश्रूं प्राह 'मातः! किं करोमि यद् भवदीयतनूजन्मा समायाति बहुनिशातिक्रमे' इति तयोक्ते श्वश्रूस्तामूचे 'अद्य निश्चिता स्वपिहि, अहं तथा करिष्ये यथा भव्यं भविष्यती'ति तामुदीर्य तद्दिने सा द्वारं पिधाय जागरुका तथा स्थितवती। अथ च कृतकृत्यः स शिवभूतिर्निशीथे प्राप्तः स्वसौधद्वारे। तत् पिहितमालोक्य 'द्वारं द्वार'मिति प्रोक्तवान्। तदा च कुपितया तदंबया प्रोक्तम् 'एतस्यां वेलायां यत्र द्वारमनावृतं स्यात्तत्र त्वं गच्छे'ति तयोक्तः स तस्यां वेलायामपिहितद्वारे गुरूपाश्रये जगाम। तत्र च श्रीमदार्यकृष्णाचार्य्यगुरोर्गिरमाकर्ण्य दुःखगर्भवैराग्यात् स प्रव्रजितः। अथ च श्रीगुरवस्तत्प्रव्रज्यानंतरं कियंतमपि समयं बहिर्विहृत्य तद्युताः पुनस्तत्रायाताः। तदा च तस्य नृपतिना

रत्नकबल वितीर्णम् । अन्यदा च तस्मिन् बहिर्गते किमेतेन मूर्च्छानिदानेन बहुमूल्येन वस्तुनेति विचिंत्य तत् पाटयित्वा दत्त यतीनाम् । एतच्च स विदित्वा चेतसि कषायितः । अन्यदा च श्रीगुरुभिर्जिनकल्पवर्णने विहिते सति शिवभूतिना विज्ञप्त ' भगवन् ! किमद्य वस्त्रपात्रप्रभृतिको विविधोपधिर्ध्रियते जिनकल्प एव किं न क्रियते त्यक्तनिश्शेषोपधिपरिग्रहः ? । ' इति तेनोदिते श्रीगुरुभिरुक्त ' सप्रति समयसहननादिहान्या स कर्तुमशक्यत ' इति श्रीगुरुभिरुक्ते तेनोक्त ' सत्त्ववतां किं करिष्यति कालः ? अह करिष्ये जिनकल्प ' मित्युदीर्य विहाय वस्त्रप्रभृतिक सकलोपधिं निरगान्नग्नतया बहिरेकाकी । तदनु तद्भगिन्यपि तत्प्रेम्णा तथैव निरगात् । अथ च सा तथाविधरूपा सती प्रविष्टा पण्यांगनासदने भिक्षाहेतवे । तया च तां तथाविधरूपां निरीक्ष्य शाटिका परिधापिता सा । अत एव तत्सतानजाताभिर्यतिनीभिरद्यापि वसनपरिधान विधीयते । अथ च शिवभूतिना कौडिन्यकोट्टवीराभिधानौ द्वौ विनेयौ प्रव्राजितौ । ताभ्यां च बहवो विनेया॰ प्रव्राजिताः । एव शिष्य प्रशिष्यपरपरया वृत्तिमगमद् बोटिकमतम् । इत्युक्ता देशप्रभृतविसवादिनिह्नववक्तव्यता । एषां च देशबहुविसवादिनिह्नवानां यथाच्छन्दसां च यद् वर्जन क्रियते स तृतीयः श्रद्धानभेदो विज्ञेयः ॥ ३ ॥

अथ कुदृष्टिवर्जनस्वरूपतुरीयश्रद्धानभेदः किंचिदुच्यते । तत्र सम्यग्ज्ञानाभावेन कुत्सितदृष्टिर्दर्शन येषा ते कुदृष्टयः अनत-धर्मात्मके वस्तुनि प्रमाणसिद्धे सत्यपि स्वाभिप्रेतैकैकधर्मसमर्थनेन तदितरधर्मनिराकरणबद्धकक्षाः स्वाभिप्रेतैकांशस्थापन-दक्षास्ते च यावतो नयास्तावन्मिता विज्ञेयाः । यदुक्त–' जावइया वयणपहा, तावइया चेव हुति नयवाया । जावइ–

या नयवाया, तावइया चेव परसमया ॥१॥' इति, एवं च वचनप्रकाराणां गणेयतावियुततया नयवादानामप्यानंत्यात् कुदृष्टीनामप्यपरिमितत्वे सत्यपि प्रसिद्धतया त्रिषष्ठ्यधिकत्रिशतीमितास्ते विज्ञेयास्तेषु ये क्रियां जीवाजीवादिसत्तास्वरूपां वदंति ते क्रियावादिनस्ते चाशीतिशतमिता विज्ञेयाः । तथाऽक्रियां जीवाद्यसत्तां वदंतीत्येवंशीला ये तेऽक्रियवादिनस्ते च चतुरशीतिसंख्या आख्याताः । तथा ये ज्ञानस्याभिनिवेशनिदानतामाशंक्य कुमतिवृतात्मानोऽज्ञानमेवापवर्गाङ्गमाख्यंति तेऽज्ञानिकास्ते च सप्तषष्टिमिता निगदिताः । तथा विनयेन चरंतीति वैनयिकास्ते च सुरनृपतियतिज्ञातिस्थविरधर्ममातृपितृरूपेषु वसु(८)संख्येषु स्थानेषु तेन मनसा वाचा कायेन देशकालोत्पन्नेन विनयं विधेयतया वदंतो द्वात्रिंशत्प्रमिता अवसेयाः । एतेषां च सर्वेषां मिलने त्रिषष्टिसमधिकत्रिशतमिता भवेयुः परवादिनां विकल्पाः । उक्तं च 'असीइसय किरियाणं, अकिरियवाईणं होइ चुलसीई । अन्नाणीण सत्तट्ठी, वेणइयाणं च बत्तीसं ॥ १ ॥' एतत्रिषष्ठ्यधिकत्रिशतमितकुमतिपरिकल्पितं तत्तथाविधविविधकथाप्रबंधमुग्धजनमनोबंधुरविधुरितनिश्शेषविशेषप्रज्ञाप्रकर्षप्रकृष्टशिष्टजननिकरनैकप्रकारकुशास्त्रकदंबकसमाकर्णनतो मुह्यते मंदमतिरतः कारणात्तद्वचनाकर्णनं तत्संगतिकरणप्रभृतिकं वर्जयेत् सम्यग्दर्शनी निजानर्घ्यतरसम्यग्दर्शनमहारत्नरक्षणैकमनाः । यतः संगतिवशतो जगति जंतूनां दोषा गुणाश्च संभवेयुः । यदुक्तं, 'अंबस्स य निंबस्स य, दुण्हंपि समागयाइं मूलाइं । संसग्गीइ विणट्ठो, अंबो निंबत्तणं पत्तो ॥ १ ॥' तथा 'उत्तमजणसंसग्गी, सीलदरिद्दंपि कुणइ सीलड्ढं । जह मेरुगिरिविलग्गं, तणंपि कणगत्तणमुवेइ ॥ २ ॥' इति, तस्मात्

सम्यग्दर्शनादिसद्गुणगणेच्छुभिर्भव्यप्राणिभिः सर्वदा सर्वप्रकारेण वर्जनीय एव कुदृष्टिसंसर्गः सुदूरीकृतापवर्गः । इत्युक्त-
स्तुरीय. श्रद्धानभेदः तदुक्तौ च प्रपंचित किंचित् श्रद्धानचतुष्कस्वरूपम् ॥

॥ इति श्रीमत्तपागच्छालंकारहारभट्टारक–घटाकोटीरश्रीसोमजयसूरीशशिष्यशिरोमणि–श्रीइन्द्रनंदिसूरिराजविनेयाणु-
सिद्धांतसारसंकलिते श्रीदर्शनरत्नरत्नाकरग्रंथे श्रीमदनुगमापरपर्याये श्रीऋषभदेवदेशनाभिधानायां
तृतीयलहर्यां ज्ञानश्रद्धानचतुष्कस्वरूपवर्णन नामा प्रथमस्तरंग समाप्तः ॥



# तृतीयलहर्यां द्वितीयस्तरङ्गः ॥

अथैतस्यामेव श्रीऋषभदेवदेशनाभिधानायां तृतीयलहर्यां द्वितीयतरंगः प्रारभ्यते ।

तत्र प्राक्तनतरंगे ज्ञानस्वरूपस्य दर्शनसंबंधिसप्तषष्टिस्थानमध्यगतश्रद्धानचतुष्कस्वरूपस्य च किंचित् प्रपंचितत्वादग्रतस्तत्स्थानस्वरूपं किंचित्प्रोच्यते । तथाहि श्रीसम्यग्दर्शने परमागमशुश्रूषा १ धर्मसाधनानुराग २ श्रीजिनगुरुवैयावृत्त्यनियम ३ लक्षणं लिंगत्रिकं विज्ञेयम् । तेषु परमप्रकृष्टागमस्य श्रीमदार्हतसिद्धांतस्य शुश्रूषा श्रवणेच्छा प्रथमं लिंगं भवति । अत्र निदर्शनं–यथा कोऽपि युवा सुखवान् विदग्धो रागी प्रियतमप्रणयिनीयुतः सुरविरचितं गीतं समाकर्णयितुमिच्छति, ततोऽप्यधिकतरा या समयशुश्रूषा सा प्रथमं श्रीसम्यग्दर्शनलिंगं विज्ञेयं ॥१॥ द्वितीयं तु श्रीमदार्हतः सुकृतकृतिवैषयिकोऽनुरागः । स च कीदृग्विधः? यथा कोऽपि द्विजन्मा फलजलविकलान्महत्तमकांतारादुत्तीर्णः क्षुत्क्षामतनुः सुदलितसुमिलितसुतलितप्रभृतिसकलगुणोपेतान् घृतपूरान् भोक्तुमभिवांछति तद्वदयं श्रीमदर्हदुपदिष्टसदनुष्ठानानुष्ठितिविषये तीव्रतरानुरागस्तद् द्वितीयं लिंगमवसेयम् २ । तृतीयं तु श्रीमद्दर्शने लिंगश्रीजिनपतिसपर्याचैत्यादिकारापणरूपश्रीजिनवैयावृत्त्ये विश्रामणान्नपात्रसंपादनप्रभृतिकश्रीगुरुवैयावृत्त्यविषयनियमरूपं ज्ञेयम् । तत्र श्रीजिनपतिसपर्याङ्गाग्रभावरूपपूजात्रिकभेदतस्त्रिप्रकारा ज्ञेया । तत्राङ्गपूजा पुष्पादिभिर्बोभवीति । अत्र पुष्पग्रहणमुपलक्षणं तेन निर्माल्यापनयनप्रमार्जनतनुप्रक्षालनाद्यनंतरत्रिपंचसप्तकुसुमांजलिमोचनपुरस्सरगंधोदकादिस्नपनं तदनंतरशुद्धोदकादिधाराप्रदानसुकुमालगंधकाषायिकदूष्यांगरुक्षणघुसृणश्रीखंडादिविलेपनक-



सम्यग्-
दर्शने
लिङ्गत्रयम् ।

रणांगीविरचनयावजिनकरबीजपूरनालिकेरादिमोचनप्रभृतिकमग्रपूजायामेवांतर्भवति तथा धूपोत्क्षेपसुगंधवासप्रक्षेपाद्यपि च ॥ १ ॥ अग्रपूजा तु नैवेद्यढौकनादिभिः सभवेत्, आदिग्रहणात् पुष्पप्रकरपुष्पगृहरचनजललवणारात्रिकोत्तारणप्रदीपकरणगीत-नृत्यातोद्यनिनादप्रभृतयोऽपि पूजाभेदा अग्रपूजायामेव संग्रहीता अवसेया. ॥ २ ॥ भावपूजा तु भगवत्सद्भूतगुणोत्कीर्त्तनरूप नमस्कारस्तुतिस्तोत्रादिभणनतो विज्ञेया अथवा श्रीजिनवचनानुसारेण सम्यग्यतिजनसमुचितक्रियाकलापपरिशीलनतो भाव-पूजा संजायते । यदुक्त 'भावच्चणमुग्गविहारया य दव्वच्चण तु जिणपूजा' इति वचनात् ॥ ३ ॥ इत्युक्तास्त्रयो भेदा भगवत्पूजायाः । अथवा गंधमाल्याधिवासधूपप्रदीपैः श्रीमदर्हत्समर्हणा पंचप्रकारा प्रोक्ता श्रीमदार्हतागमे अधिवासस्तु गंधमाल्यादिभिः संस्कारविशेषो ज्ञेयः । केचित्तु 'तहिय पंचुवयारा, कुसुमक्खयगंधधूवदीवेहिं ।' इति वचनात् कुसुमा क्षतगंधधूपप्रदीपैः पूजा पंचभेदा वदंति । अथवा पुष्पाक्षतगंधधूपप्रदीपनैवेद्यफलजलैः श्रीमदर्हत्समर्हणाऽष्टभेदावसेया यदुक्त 'कुसुम १ क्खय २ गंध ३ पईव ४ धूव ५ नेवज्ज ६ फल ७ जलेहिं ८ पुणो ॥ अट्ठविह कम्ममहणी, अट्ठुवयारा हवइ पूआ ॥ १ ॥ इति अथवा 'न्हवणविलेवणअगम्मि, १ वच्छजुअल २ च वासपूजा ३ य । पुप्फारुहण ४ मल्ला-रुहण ५ तह वन्नयारुहण ६ । ॥ १ ॥ चुन्नारुहण ७ जिणपुंग-वाण आहरणरोहण ८ चेव । पुप्फगिह ९ पुप्फपगरो १० आरत्तियमंगलपईवो दीवो ११ । धुवुक्खेवो, १२ नेवज्ज १३ सुहफलाण ढोअणय १४ । गीअ १५ नट्ट १६ वज्ज, १७ पूआभेया इमे सत्तर ॥ २ ॥' इत्येतद्गाथोक्तपूजाप्रकारैः सप्तदशभेदा भगवद र्चावसेया । अथवा स्नान विलेपन विभूषणपुष्पवासेत्यादिप्रोदितैकविंशतिभेदैरेकविंशतिप्रकारा विज्ञेया । एवमनेकप्रकार

पूजाकरणतो भगवद्वैयावृत्तमवसेयम् । इत्युक्तं किंचिज्जिनगुरुवैयावृत्त्यं नियमरूपं तृतीयं सम्यग्दर्शनलिंगम् ॥ ३ ॥

अथ दशविधविनयस्वरूपं किंचित् प्रपंच्यते । तथाहि–अर्हत् १ सिद्ध २ चैत्य ३ श्रुत ४ धर्म ५ साधुवर्गा ६ चार्यो ७ पाध्याय ८ प्रवचन ९ दर्शनान्याश्रित्य (१०)विनयो दशप्रकारो ज्ञेयः। तेषु चतुस्त्रिंशदतिशयाष्टमहाप्रातिहार्यपंचत्रिंशद्वचनगुणगरिष्ठाः सुरविरचितकनककुशेशयनवकविपयचलननलिनविन्यासेन विहरतः श्रीमदर्हतो विज्ञेयाः ॥ १ ॥ सिद्धास्तु निष्ठिताष्टकर्माणः प्राप्तानंतचतुष्टयाः समवसेयाः ॥२॥ चैत्यशब्देन पुनरर्हत्प्रतिमितयः कीर्त्तिताः॥३॥ श्रुतं तु सामायिकप्रभृतिर्बिंदुसारपूर्वान्तमध्यवसेयम् ॥४॥ धर्मस्तु चारित्रधर्मलक्षणो विज्ञेयः ॥५॥ साधुवर्गः स तदाधारभूतः प्रतीत एव॥६॥ आचार्यास्तु षट्त्रिंशिका समाकीर्णा अनुयोगदायिनो ज्ञेयाः ॥ ७॥ उपाध्यायास्तु सूत्राध्यापकाः॥ ८॥ प्रवचनं च निश्शेषसंघरूपं प्रकीर्तितम् ॥९॥ दर्शनशब्देन तु सम्यक्त्वमवसेयम् ॥१०॥ एतेष्वर्हंतो विहरतः सप्ततिशतमिताः प्रकीर्त्तिता, जघन्यतस्तु दश विंशतिर्वा, जन्मप्रतीत्य तु विंशतिरुत्कर्पतो जघन्यतस्तु दश । यदुक्तं श्रीप्रवचनसारोद्धारे ‘ सत्तरिसयमुक्कोसं, जहन्न वीसा य दस य विहरंति। जम्मं पइ उक्कोसं, वीसं दस हुंति उ जहन्ना ॥ १ ॥’ इति एतेषां च श्रीमत्तीर्थपतीनां चतुस्त्रिंशदतिशयाः प्रातिहार्याष्टकं चेमाभिः श्रीप्रवचनसारोद्धारगाथाभिर्लिख्यंते तथाहि ‘रयरोयसेयरहिओ, देहो १ धवलाइं मंसरुहिराइं २ ॥ आहारानीहारा, अदिस्सा ३ सुरहिणो सासा ४ ॥१॥ जम्माउ इमे चउरो, एक्कारसकम्मखयभवा इणिंह । खेत्ते जोयणमेत्ते, तिजयजणो माइ बहुओ वि ५ ॥ २ ॥ निअभासाए नरतिरि–सुराण धम्मावबोहया वाणी ६ । पुव्वभवा रोगा उवसमंति ७ न य हुंति वेराइं ८ ॥ ३ ॥ दुब्भिक्ख ९ डमर

१० दुम्मारि, ११ ईई १२ अइवुट्ठि १३ अणभिवुट्ठीओ १४। हुंति न जियबहुतरणी, पसरइ भामंडलुज्जोओ १५ ॥ ४ ॥ सुररइआ णिगुरीसा, मणिमयसीहासण सपयवीढ १६ । छत्तत्तय १७ इदद्धय १८ सियचामर १९ धम्मचक्काइ २० ॥ ५ ॥ सह जगगुरुणा गयण-ट्ठियाइ पचवि इमाइ विअरति । पाउब्भवइ असोगो चिट्ठइ जत्थप्पहू तत्थ २१ ॥ ६ ॥ चउमुहमुत्तिचउक्क २२ मणिकचणताररइयसालतिग २३ । नवकणयपकयाइ २४ अहोमुहा कटया हुति ७ ॥ २५ ॥ निच्चमवट्ठियमित्ता, पहुणो चिट्ठति केसरोमनहा २६। इदिअअत्था पचवि २७ मणोरमा हुति छप्पि रिऊ ॥ २८ ॥ ८ ॥ गधोदयस्स वुट्ठी २९, वुट्ठी कुसुमाण पचवन्नाण ३० । दिंति पयाहिण सउणा ३१, पहुणो पवणो वि अणुकूलो ३२ ॥ ९ ॥ पणमति दुमा ३३ वज्जति, दुदुहीओ गहीरघोसाओ ३४ । चउतीसाइसयाण, सव्वजिणिंदाण होइ इमा ॥ १० ॥' इत्युक्ताश्चतुस्त्रिंशदतिशयाः । अथ प्रातिहार्याष्टकगाथा लिख्यते, तथाहि—'१ ककेल्लिकुसुमवुट्ठी, २ देवज्झुणि ३ चामरा ४ ऽऽसणाइ च ५ । भामडल ६ भेरि ७ छत्त ८, जयति जिणपाडिहेराइ ॥ १ ॥' अथैतेषा निश्शेषश्रीगुणरत्नरत्नाकराणां श्रीमत्तीर्थंकराणा पचत्रिंशद्वचनगुणा नामोच्चारमात्रेण लिगद्यन्ते तथाहि सस्कारवत्त्वम् १ औदात्त्यम् २ उपचारपरीतत्त्व ३ जलधरगभीरघोषत्ता ४ प्रतिशब्दविधायिता ५ दक्षिणता ६ उपनीतरागता ७ महार्घता ८ अव्याहतता ९ शिष्टता १० सदेहानुत्पत्ति ११ निराकृतेतरोत्तरत्व १२ हृदयगमित्व १३ परस्परसापेक्षत्व १४ प्रस्तावोचितत्व १५ तत्त्व निष्ठत्वम् १६ अप्रकीर्णप्रसृतत्वम् १७ अनात्मप्रशसान्यनिंदित्वम् १८ आदेयत्वम् १९ अतिस्निग्धमधुरत्वम् २० प्रशस्यत्वम्

२१ अमर्मवेधित्वम् २२ उदारत्वम् २३ धर्मार्थप्रतिबद्धत्वं २४ कारकादिविपर्यासाभावो २५ विभ्रमभृतिविरहितत्वं २६ कुतुककारित्वम् २७ अशीघ्रता २८ अनतिविलंबिता २९ अनेकजातिविचित्रत्वम् ३० आरोपितविशेषत्वं ३१ सत्त्वप्रधानत्वं ३२ वर्णपदवाक्यविविक्तत्वम् ३३ अव्युच्छित्तिः ३४ अखेदित्वं ३५ चेति पंचत्रिंशद् वचनगुणास्तेषां तीर्थपतीनामत्रसेयाः । तथैतेषां भव्यजनमनश्चिंतितवितरणस्वस्तरूणां श्रीमत्रिभुवनगुरूणामज्ञानक्रोधाद्या अष्टादशादीनवा नाविर्भवंति चेतोवचनतनुत्रितये यदुक्तं श्रीप्रवचनसारोद्धारे 'अन्नाण १ कोह २ मय माण, ४ लोभ ५ माया ६ रई अ ७ अरई अ ८। निद्दा ९ सोय १०, अलीअवयण ११ चोरिआ १२ मच्छर १३ भया १४ य ॥ १ ॥ पाणिवह १५ पेम १६ कीला, १७ पसंग हासा य १८ जस्स इअ दोसा। अट्ठारस्स वि विणट्ठा, नमामि देवाहिदेवं तं ॥ २ ॥' इत्युक्तं किंचिदर्हत्स्वरूपम्।

अथ सिद्धस्वरूपं प्ररूप्यते । तथाहि-तीर्थंकरसिद्धा १ ऽतीर्थंकरसिद्ध २ तीर्थसिद्धा ३ तीर्थसिद्ध ४ स्वलिंगसिद्ध ५ परलिंगसिद्ध ६ गृहिलिंगसिद्ध ७ स्त्रीलिंगसिद्ध ८ नरलिंगसिद्ध ९ नपुंसकलिंगसिद्ध १० प्रत्येकबुद्धसिद्धै ११ कसिद्धा १२ ऽनेकसिद्ध १३ स्वयंबुद्ध १४ बुद्धबोधित १५ भेदात् पंचदशविधाः सिद्धाः । तेषु ये तीर्थपतिपदवीमनुभूय सिद्धिवधूवल्लभत्वमनुप्राप्तास्ते तीर्थकरसिद्धाः १ तदन्ये पुनरतीर्थकरसिद्धाः २ भगवत्तीर्थे विद्यमाने सति ये सिद्धास्ते तीर्थसिद्धाः ३ तीर्थे व्यवच्छिन्नेऽपि ये जातिस्मरणादिना सिद्धास्तेऽतीर्थसिद्धा ज्ञेयाः, तीर्थानुत्पत्तौ वा ये मरुदेवीस्वामिन्यादिवत् सिद्धिसौधमधिरूढास्ते वाऽतीर्थसिद्धतया विज्ञेयाः ४ स्वलिंगसिद्ध ५ परलिंगसिद्ध ६ गृहिलिंगसिद्ध ७ स्त्रीलिंगसिद्ध ८ पुरुषलिंगसिद्ध ९ नपुंसकलिंगसिद्धास्तु १० प्रसिद्धा एव । प्रत्येकबुद्धसिद्धास्तु नमिनृपत्यादिवत् किंचनैकं निमित्तमाश्रित्य ये प्रतिबुद्धास्ते

समवसेया' ११ एकसिद्धास्तु ये एकस्मिन् समये एकतयैव सिद्धा' १२ अनेकसिद्धास्तु तद्विपर्यादध्यवसेया. १३ स्वय मात्मनैव वैराग्यहेतुबाह्यनिमित्तमनपेक्ष्य जातिस्मरणादिना ये प्रतिबुद्धा सतः सिद्धास्ते स्वयबुद्धसिद्धा अध्यवसेयाः १४ बुद्धैर्गुरुभिर्बोधिता सतो ये सिद्धास्ते बुद्धबोधितसिद्धा अधिगतव्या. १५ एतेषां च सिद्धानां क्षेत्रलिंगवेदावगाहनास्तथा नादीनि द्वाराणि व्याख्यायते। तत्र क्षेत्रद्वारे पचचत्वारिंशद्योजनलक्षमान मनुष्यक्षेत्रमेव सिद्धतापर्यायोत्पत्तिस्थान निगदित श्रीमदार्हतागमे। तत्राप्येकस्मिन् समये ऊर्ध्वलोके मेरुचूलिकादौ चत्वारः सिध्यति, जलधौ च द्वौ, जले च त्रय', तिर्यग्लोके तु नरक्षेत्ररूपे शतमष्टोत्तरम्, अधोलोके त्वधोलौकिकग्रामरूपे 'चतुरुड्ढलोए य दुवे समुद्दे, तओ जले वीसमहे तहेवे'ति वचनात् श्रीउत्तराध्ययनाभिप्रायेण विंशतिः सिध्यति, 'चत्तारि उड्ढलोए, दुवे समुद्दे तओ जले चेव। बावीसमहोलोए, तिरिए अट्ठुत्तरसय चे'ति वचनात् प्रवचनसारोद्धारानुसारेण द्वाविंशतिः, लिंगद्वारे त्वेकस्मिन् समये गृहिलिंगे श्रुति(४)मिताः सिध्यति, अन्यलिंगे तु दशप्रमिताः, स्वलिंगे पुनरष्टोत्तरशतमिताः। वेदद्वारे तु विंशतिः स्त्रीवेदे, नपुसकवेदे तु दश, नरवेदे त्वष्टोत्तरशतम्। अवगाहनाद्वारे तु अवगाहना त्रेधा—उत्कृष्टा १ मध्यमा २ जघन्या ३ च। तासु च पचशतधनुर्मिता उत्कृष्टावगाहना। अस्यां चोत्कृष्टावगाहनायामेकसमये द्वावेव सिद्धिसौधमधि गच्छत'। जघन्या तु द्विहस्तमिता प्रणीता श्रीमदर्हन्मते। एतस्यां च जघन्यावगाहनायामेसकमये चत्वारः सिद्ध्यति, उक्तस्वरूपोत्कृष्टजघन्यांतरालवर्तिनी मध्यमा। अस्यां चोत्कर्षत एकसमये अष्टोत्तरशत सिद्ध्यति। इय चरिमभवावगाहना परिज्ञेया सिद्धिगताना पुनरियमेव त्रिभागहीना त्रिधाप्यऽवसेया। यदुक्त षट्त्रिंशत्तमाध्ययने 'उस्सेहो जस्स जो होइ,

भवे ।' संस्थानद्वारे तु सिद्धानां प्राग्भव-
भवम्मि चरमम्मि सो तिभागहीणो तत्तो अ सिद्धाणोगाहणाभवे ।' संस्थानद्वारे तु सिद्धानां प्राग्भव-
चरमसमये जीवप्रदेशघनरूपं यदूर्ध्वस्थितनिषण्णोत्तानपार्श्वस्थितप्रभृतिकं भवति संस्थानं तत्संस्थानतयैव ते तिष्ठंति सर्व-
कालम् । यदुक्तं श्रीप्रवचनसारोद्धारे "जं संठाणं तु इहं भवं चयंतस्स चरमसमयम्मि । आसी पएसघणं, तं
संठाणं तहिं तस्स ॥ १ ॥ उत्ताणओ अ पासिल्लओ निसन्नओ चेव जो । जह करेइ कालं, सो तह उववज्जए
सिद्धो ॥ २ ॥' अवस्थितिद्वारे तु ईषत्प्राग्भाराभिधाना या उत्तानातपत्रसंस्थानसंस्थिताया अर्ज्जुनकनकमय्याः सिद्धि-
शिलाया उपरि योजनस्य तुरीयक्रोशस्य षष्ठे भागे सिद्धानामवस्थितिः संभवेत् । एते च सिद्धा एकस्मिन् समये द्वात्रिं-
शन्मिताः सिद्धतया समुत्पन्नास्तदनन्तरसमयेऽपि तावन्मिता एव सिद्धतया समुत्पद्यंते एवमष्टौ समयान् यावदनंतरिततया
द्वात्रिंशत्प्रमितानां सिद्धतयोत्पत्तिस्तदनंतरमपि चेद् द्वात्रिंशन्मिताः सिद्ध्यंति तदा समयाद्यंतरिता एव । एवमष्टचत्वारिंशत्
प्रमितानां तु सप्तसमयान् यावदनंतरिततया सिद्धिगमनम् । षष्टिसंख्यानां तु षट्समयान् यावत् । द्वासप्ततिमितानां तु पंच-
समयान् यावत् । चतुरशीतिसंख्येयानां तु चतुःसमयान् यावत् । षण्णवति गणेयानां तु त्रीन् समयान् यावत् । द्विसमधिक-
शतमितानां तु द्वौ समयौ मर्यादीकृत्य । अष्टोत्तरशतसंख्यास्तु एकस्मिन् समये मुक्तिगता अथ चेत् पुनरपि तावन्मिता
एव सिद्ध्यंति तदा समयाद्यंतरिता एव न पुनरनंतरिता इति निगदितं किंचितत्सिद्धस्वरूपम् ।

अथ चैत्यस्वरूपं किंचित् प्रपंच्यते, तत्र चैत्यशब्देन शाश्वताशाश्वतरूपाः श्रीमदर्हत्प्रतिमितयो विज्ञेयाः । तत्र नंदीश्वरद्वी-
पादिस्थितप्रासादेषु चातुर्निकायिकनाकिसदनस्थितसिद्धायतनेषु च श्रीऋषभवारिषेणचंद्राननवर्द्धमाननामानः श्रुति( ४ )मिताः

श्रीमदर्हत्प्रतिमितयः समवसेयाः । अशाश्वतप्रतिमास्तु श्रीअष्टापदश्रीशत्रुञ्जयप्रभृतितीर्थेषु श्रीभरतसगरादिसार्वभौमनिर्मापिताः परिज्ञेयाः । श्रुतं पुनरङ्गप्रविष्टानङ्गप्रविष्टभेदेन द्विप्रकारं परिकीर्तितम् । तत्राङ्गप्रविष्टमाचाराङ्गादि द्वादशविधं विज्ञेयम् । अनङ्गप्रविष्टं पुनरावश्यकाद्यनेकविधमवगन्तव्यम् । धर्मस्तु चारित्रधर्मरूप एकादिदशान्तभेदः समवसेयः । तत्र धर्मस्यैकविधत्वमनुकम्पया परिज्ञेयं १ द्विविधत्वं तु तस्य सम्यग्ज्ञानक्रियाभ्यां २ त्रैविध्यं तु तस्य ज्ञानदर्शनचारित्रैः ३ चातुर्विध्यं तु दानशीलतपोभावभेदैः ४ पञ्चविधत्वं तु पञ्चभिर्महाव्रतैः ५ षड्विधत्वं तु षड्विधजीवनिकायरक्षाकरणतः ६ सप्तप्रकारत्वं तु सप्तनयानुसारिचरणकरणाराधनतः ७ अष्टविधत्वं तु वसु(८)मितप्रवचनजननीसमाराधनतः ८ नवविधत्वं तु नवतत्त्वनिर्णयपुरस्सरचरिताचरणतः ९ दशविधत्वं तु क्षान्तिमृदुताऋजुतामुक्तितपःसंयमसत्यशौचाकिंचन्यब्रह्मभेदतः समवगन्तव्यम् १० । उक्तं च 'श्रीधर्मो दययैकधा निजगदे, ज्ञानक्रियाभ्यां द्विधा, ज्ञानाद्यैस्त्रिविधश्चतुर्विधतया, ख्यातो व्रतैः पञ्चधा । षोढा कायसुरक्षणेन नयतः, सप्ताष्टधा मातृभि-स्तत्त्वैः स्यान्नवधा तथा दशविधः, क्षान्त्यादिभिः सद्गुणैः ॥ १ ॥' इति । एतत् श्रीमच्चारित्रधर्मस्याधारभूता जिनकल्पिकस्थविरकल्पिकपरिहारविशुद्धिकप्रतिमाप्रपन्नक्षीराश्रवमध्वाश्रवघृताश्रवसंभिन्नश्रोत'कोष्ठबुद्धिजङ्घाचारणविद्याचारणवैक्रियलब्धिसम्पन्नपदानुसारिप्रज्ञाव्युत्पन्नादिभेदैरनेकविधा' साधवो बोधव्याः । आचार्यास्तु पञ्चेन्द्रियसंवरणनवविधब्रह्मगुप्तिधरणचतुर्विधकषायविप्रमुक्तता–पञ्चमहाव्रतयुक्तता–पञ्चधाचारनिरतिचारपरिपालननिरतता–पञ्चसमितिसमितता–त्रिगुप्तिगुप्ततारूपषट्त्रिंशद्गुणगरिष्ठाः परिज्ञेयाः । एवमन्या अपि षट्त्रिंशिकाः श्रीगुरुगुणषट्त्रिंशिकाप्रकरणाद् विभावनीयाः । उपाध्यायास्त्वधीतप्रवर्त्तमानसकलसूत्रार्थाः सूरिपदस्थापनयोग्या

स्तत्सम्मुचितगुणगरिष्ठात्मानः परिज्ञेयाः । प्रवचनदर्शने तु प्रागुक्तस्वरूपे एव विज्ञेये । एतेषु च दशसु स्थानेषु भक्ति १ बहुमान २ वर्णजनना ३ ऽवर्णवादनाशना ४ ऽऽशातनापरिहाररूपः ५ पंचविधो विनयः कर्त्तव्यः । तत्र भक्तिरर्हदादीनां प्रणतिकरणादिवहना बहिःप्रतिपत्तिरूपा परिज्ञेया १ बहुमानस्तु तेष्वेव मानसिकनिर्जरप्रतिरूपः परिज्ञेयः २ तपामेवार्हत्प्रभृतीनामतिशयगुणकीर्त्तनादिभिर्वर्णजननमवसेयं ३ तेषामेव पूर्वोक्तानाममुड्डाहगोपनप्रभृतिकावर्णवादनाशनमध्यवसेयम् ४ आशातनापरिहारस्तूचितासनसेवनादिना विज्ञेयः । तत्राशातना जघन्य १ मध्यमो २ त्कृष्ट ३ भेदेन श्रीमदर्हतां त्रिप्रकाराः परिज्ञेयाः । तासु जघन्यापि श्रीमदर्हदाशातनाऽनंतसंसारपरिवर्द्धननिदानं संपनीपद्यते किं पुनर्मध्यमोत्कृष्टाशातनानां कटुविपाकतया कथनीयम् । तत्र तीर्थकृतामेवमाशातना यथा सर्वोपायकुशलैरपि तीर्थपतिभिर्गृहवासत्यागप्रभृतिकाऽतिक्लेशा देशना निर्मिता यदि च गृहवासो न श्रेयाँस्ततः किं निमित्तं ते गृहवासे वसंति स्म किमिति भोगांश्च भुक्तवंत इति । सिद्धाशातना तु सिद्धा न संतीत्यादिकथनेन तत्स्वरूपस्य वैपरीत्यप्रकाशनादिना वा । चैत्याशातना तु जघन्या दश भेदा उत्कर्षतस्तु चतुरशीतिप्रकारा । तत्र तंबोलास्वादन १ पान २ भोजनविधान ३ सुरतासेवनो ४ पानत्परिभोग ५ निष्ठीवनोत्सर्जन ६ स्वाप ७ प्रश्रवणो ८ चारकरण ९–द्यूतदेवन १० रूपा जघन्याशातना दशविधा विज्ञेया श्रीजिनसदनमध्ये श्रीमदर्हत्प्रतिमितीनां पुरतः । उक्तं च श्रीप्रवचनसारोद्धारे ‘ तंबोल १ पाण २ भोयण ३ पाणह ४ थीभोग ५ सुअण ६ निट्ठवणे ७ । मुत्तु ८ चारं ९ जूअं, १० वज्जे जिणमंदिरस्संतो ॥ १ ॥ ’ इत्युक्ता जघन्याशातनाः । अथोत्कर्षतश्चतुरशीतिराशातनाः पूर्वसूरिप्रणीतवृत्तैरेव लिख्यंते तथाहि ‘ खेलं १ केलि २ कलिं ३ कला ४ कुललयं ५

तबोल ६ मुग्गालय ७, गाली ८ कगुलिया ९ सरीरधुवण १० केसे ११ नहे १२ लोहिय १३। भत्तोस १४ तय १५ पित्त १६ वत १७ दसणे १८, विस्सामण १९ दामण, २० दत २१ त्थी २२ नह २३ गंड २४ नासिअ २५ सिरो २६, सोत २७ च्छवीण मल २८ ॥ १ ॥ मतु २९ म्मीलण ३० लेक्खय ३१ विभजण, ३२ भडार ३३ दुट्ठासण, ३४ छाणी ३५ कप्पड ३६ दालि ३७ पप्पड ३८ वडी ३९ विस्सारण नासण ४०। अक्कद ४१ विकह ४२ सरच्छघडण ४३, तेरिच्छसठावण ४४, अग्गीसेवण ४५ रंधण ४६ परिक्खण ४७ निस्सीहिआभजण ४८ ॥ २ ॥ छत्तो ४९ वाणह ५० सत्थ ५१ चामर ५२ मणोणेगत्त ५३ मब्भगणं ५४ सचित्ताणमचाय ५५ चायणजिए ५६, दिट्ठीइ नो अजली ५७ ॥ साडेगुत्तरसगभग ५८ मउड ५९, मउलिं ६० सिरोसेहर ६१, हुड्डा ६२ जिंडुहगिड्डियाइरमण ६३, जोहार ६४ भडक्किय ६५ ॥ ३ ॥ रेकार ६६ धरण ६७ रणं ६८ विवरण, वालाण ६९ पल्हत्थिअ ७०, पाओ ७१ पायपसारण ७२ पुडपडी ७३, पक ७४ रओ ७५ मेहुण ७६। जूआ ७७ जेमण ७८ जुज्झ ७९ विज्ज ८० वणिज ८१, सेज्ज ८२ जल ८३ मज्जण ८४ एमाईयमवज्जकज्जमुज्जुओ वज्जे जिणिंदालए ॥ ४ ॥' अथैतासा विषमपदव्याख्या कला धनुर्वेदादिकाः ४, कुललय गडूष ५, कगुलिपत्ति लघुबृहन्नीतिविधान ९, भत्तोस सुखभक्षिका १४, त्वच व्रणादिसबधिनी १५, पित्त च धातुविशेष भेषजादिना जिनसदने न पातयेत् १६, दामनमजादीनां वर्जयेत् २०, दन्ताऽक्षिनखनासिकासिरःश्रोत्रछवीनां मल जिनालये न त्यजेत् शरीरशेषास्तु तदवयवाः २८, मन्त्र भूतादिनिग्रहलक्षण राजादिकार्यालोचन वा २९, मीलन क्वापि

स्वकीयपाणिग्रहणादिकरमणीये निर्णयार्थं वृद्धपुरुषाणां तत्रोपदेशम् ३०, लेख्यकं द्रव्यादिव्यवहारविषयं ३१, विभजनं राजादिकार्यविषयं विभागं वा दायादीनां ३२, भांडागारं च निजद्रव्यादेः ३३, दुष्टासनं च पादोपरिपादस्थापनादिकं ३४, छाणी गोमयपिंडः ३५, कर्पटं वस्त्रं ३६, दालिस्तु मुद्गमाषादिद्विदलरूपा ३७, पर्पट ३८ वटिका ३९ स्तु प्रसिद्धाः एतेषामुद्वायनकृते विसारणं विस्तारणं, नाशनं तु नृपत्वादिभयेन जिनायतनस्य गर्भगृहादिष्वंतर्द्धानम् ४०, आक्रंदं च पुत्रकलत्रादिवियोगेन रोदनं ४१, शराणां बाणानामिक्षूणां च घटनं ४२, सरुच्छपाठे तु शराणामस्त्राणां च धनुरादीनां घटनं ४३, परीक्षणं तु धनकनकादेः ४७, छत्रोपानत्प्रभृतीनां तु जिनगृहाद्बहिरमोचनं ५२, चायमजिए अजीवानाम् आहाराद्याभरणानां त्यागं परिहारं च वर्जयेत् बहिस्तत्मोचने हि भिक्षाचराणामेवायं धर्म इत्यवर्णवादो दुष्टलोकैर्विधीयते ५६, मुकुटस्याभरणविशेषस्य मौलेस्तु शिरोवेष्टनविशेषरूपस्य शेखरस्य तु कुसुमादिमयस्य शिरसि धरणं परिहरेत् ६१, हुड्डां च न पातयेत् ६२, जिड्डहशब्देन कंदुकः प्रोच्यते तेन खेलनं ६३, ज्योत्कारं तु पितृप्रभृतीनां नमस्कारकरणं ६४, भांडानां विटानां क्रियां कक्षावादनप्रभृतिकां ६५, वालानां विचरणं विजटीकरणं ६९, पर्यस्तिकायाः करणं ७०, पादुकायाः काष्टादिमय्याश्चरणे परिधानं ७१, पादयोः प्रसारणं स्वेच्छया निश्शंकतया ७२, स्वदेहावयवानां क्षालनादिना पंकस्य कर्दमस्य करणं ७४, स्वचरणादिलग्नस्य रजसोऽंतर्जिनमंदिरं पातनं ७५, यूकानामुत्तमांगादिसंभवानां जिनभवनांतस्त्यजनं ७७, युद्धस्य बाहुयुद्धादेर्विधानं गुज्झमिति पाठे तु गुह्यस्याऽसंवृतता करणं ७९, वैद्यकं वैद्यक्रियारूपं ८०, वाणिज्यं क्रयविक्रयप्रभृतिकं ८१, शय्याशयनं ८२, जलस्य पानं तद्भाजनमोचनं वा वर्षाका-

लादौ प्रणालादेस्तदुग्रहण वा ८३, मज्जन स्नान च जिनभवनांतस्त्यजेत् ८४ ॥ एव जघन्यतो दश चोत्कर्षतस्तु चतुरशीतिराशातनाः श्रीजिनभवनांतर्वर्जनीया प्रयत्नत. श्रीमदार्हतमतकोविदै. । मध्यमतस्त्वाशातनाश्चत्वारिंशन्मिता-या शास्त्रांतरे प्रोच्यते तास्तु प्रायो जघन्योत्कृष्टाशातनास्वेवांतर्भवंतीति पृथग् न निगदिताः । बृहद्भाष्ये तु पच-प्रमिता एव ता प्रोक्तास्तथाहि–' जिणभवणम्मि अवण्णा, १ पूआइ अणायरो २ तहा भोगो ३ । दुप्पणिहाण ४ अणुचिअवित्ती ५ आसायणा पच ॥ १ ॥ तत्थ अवन्नाऽऽसायण, पल्लठिअदेयपिट्ठिदाण च । पडपुडिअ पयपसारण दुट्ठासणसेवणं जिणओ ॥ २ ॥ जारिसतारिसवेसो, जहा तहा जम्मि तम्मि कालम्मि । पूआइ कुणइ सुन्नो, अणायरासायणा एसा ॥ ३ ॥ भोगो तबोलाई, कीरतो जिणगिहे कुणइ वस्स । नाणाइआण आयरस, सायण तो तमह वज्जे ॥ ४ ॥ रागेण व दोसेण व, मोहेण व दूसिआ मणोवित्ती । दुप्पणिहाण भन्नइ, जिणुवसए त न कायव्व ॥ ५ ॥ धरणरणरुअणविगहा, तिरिबधणरधणाइ गिहकिरिआ । गाली विज्जयणिज्जाइ, चेइएययणुचिअवित्ती ॥ ६ ॥ इत्येताश्चैत्याशातनाः प्रयत्नतो वर्जनीया. । सुकृतार्जनकाम्रुकैर्ये सर्वदेवा विरता अत्यतविषयासक्ता अपि सुपर्वाण. । सर्वथैव परिवर्जयति चैत्यविषया आसातना. यदुक्त ' देवघरम्मि देवा, विसयविसविमोहिआ वि न य कयावि । अच्छरसाहि पि सम, हासकिड्डाइ पकुणति ॥ १ ॥ ' इत्युक्ता-श्चैत्याशातनाः । श्रुताशातनास्तु व्याविद्धता–व्यत्याम्रेडितता–हीनाधिकवर्णोच्चरणपदहीनता–विनयहीनता–घोषहीनता–योग हीनतादिभिः समवेत् । श्रुताधिक्षेपतो वा स चैव ' काया वयाऽयतेच्चिय, ते चेव पमाय अप्पमाया य । मुक्खहि

यारिआणं, जोह्लाजोणीहिं किं कज्जं ॥ १ ॥' इति धर्मस्याशातना तु धर्मो नास्तीत्यादिकथनेन तत्स्वरूपविपर्ययप्ररूपणेन तत्फलं किमपीह न लक्ष्यत इत्यादिभणनेन वा विज्ञेया। साधूनामाशातना चैवं यथाऽमी न परस्परमपि सहंतेऽत एवैते देशांतरविहारिणश्चेन्नैवं तदैते एकत्र संहत्याऽवतिष्ठेयुस्तथा मंदगामिनोऽमी तत एवैते बकवृत्तय इत्यादि यत्तज्जल्पनादवसेया। आचार्योपाध्यायाशातनास्तु तदधिक्षेपादिना विज्ञेया यदुक्तं। 'जच्चाईहिं अवत्तं, भासइ वट्टइ न यावि उववाए। अहिओ छिद्दप्पेही, पगासवाई अणुकूलो ॥ १ ॥' इति अथवा पुरोवक्ष्यमाणस्वरूपास्त्रयस्त्रिंशन्मिता वा तास्तद्विषया विज्ञेया निश्शेषसंघरूपस्य श्रीप्रवचनस्य पुनराशातना इं हुं मया दृष्टा अरण्येऽपि संघाश्चित्रकत्रक्ककौलेयकशृगालादीनां तत् कोऽयं संघः ? इत्येवमधिक्षेपादिनाऽवसेया। श्रीसम्यग्दर्शनाशातना तु शंकाद्यतिचाराचरणतस्तत्स्वरूपविपर्ययप्ररूपणादिना वाऽध्यवसेया। इत्येवमर्हत्प्रभृतिषु दशसु स्थानेषु यथोक्तस्वरूपाशातनावर्जनत आशातनापरिहाररूपः पंचमो विनयो विधेयः। इत्युक्तं दशविधविनयस्वरूपं किञ्चित्।

अथ शुद्धित्रयस्वरूपं किञ्चित् प्ररूप्यते। तथाहि मनो १ वचन २ तनु ३ त्रितयशुद्धता संपनीपद्यते सम्यक् सम्यग्दर्शनोद्दीपनकरी। तत्र श्रीमज्जिनपतिपदपंकजपर्युपास्त्या सद्गुरुसेवनेन तदुपदिष्टसुकृतसमाराधनेन वात्मानं कृतकृत्यं मन्यमानः श्रीमदर्हत्प्रवचनव्यतिरेकेण विश्वमपि विश्वमसारतरं स्वमनसि यन्मन्यते सम्यग्दर्शनी सा मनःशुद्धिः प्रोच्यते। सा च 'जीवाण गईकम्माण-परिणई पुग्गलाण परिणामं। मोत्तूण जिणं अह जिण-मयं च को साहिउं तरइ ॥ १ ॥' इत्यादिभावनया स्थिरीकार्या १ वचःशुद्धिस्तु यत्तीर्थपतिपदपद्मसपर्यया तदुपदिष्टविशिष्टगुणगरिष्ठश्री-

गुरुसुचरितसमाराधनतश्च यत् कार्यं न सजायते पूर्वकृतवशतस्तत्र नेतर हरिहरपुरदरप्रभृतिदेवविशेषमभिलपामि नाऽन्य चरकपरिव्राजकादिकलौकिकगुरु तदुदितसुकृतानुष्ठान वा समाराधयामीत्यादिश्रीसम्यग्दर्शनोद्दीपकवचनजल्पनतः समवसेया २, कायशुद्धिस्तु यः कृपाणादिभिच्छिद्यमानः क्रकचशूचिकादिभिर्भिद्यमानोऽपि बधनयत्रादिभिः पीड्यमानोऽपि वह्नितप्ततैल प्रभृतिभिर्दह्यमानोऽप्यस्मिन् वा महासकटे पात्यमानोऽपि यो जिनवर्जं देव न नमति तस्य तनुशुद्धिर्विज्ञेया ३। इत्युक्त शुद्धित्रितयस्वरूपम्।

अथ यै श्रीसम्यग्दर्शन दूष्यते तानि शका १ कांक्षा २ विचिकित्सा ३ परपाखडिप्रशसा ४ परपाखडिसस्तव ५ लक्षणानि पचदूषणानि श्रीसम्यग्दर्शने परिहरणीयानि। तत्र विदलितरागद्वेपमोहे यथास्थितवस्तुवादिनि शमरसनिमग्नदृष्टियुग्मे ललनासगविकलोत्सगे शस्त्रसबधबन्ध्यपाणिपयोजद्वंतेऽपि श्रीमद्देवाधिदेवे समारातिसुहृति पचमहाव्रतधरे श्रीगुरौ च तत्त्वे च तत्प्रणीतेऽस्ति न वास्तीत्यारेकाकरण शका। सा च द्विधा देशतः सर्वतश्च। तत्र देशतस्तुल्येऽपि जीवत्वे कथमेके भव्या अपरे त्वभव्या इत्यादिका। सर्वतस्तु सर्ववस्तुप्ररूपकः प्राकृतभापानिबद्धः सिद्धांतोऽय किं केवलिप्रणीत उत कुशलमतिना केनापि परिकल्पित इत्यादिका। न पुनरेतच्चिंतयति यद् भावा द्विविधा हेतुग्राह्या अहेतुग्राह्याश्च। तत्र हेतुग्राह्या जीवास्तित्वप्रभृतयः। अहेतुग्राह्यास्त्वस्मदाद्यपेक्षया भव्यत्वाभव्यत्वप्रभृतय', विशेपज्ञानविपयतया तद्धेतुयुक्तीनाम्। तथा सिद्धांतस्य प्राकृतभापात्वघोऽपि बालललनाद्यनुग्रहहेतुकः। यदुक्त 'बालस्त्रीमदमूर्खाणा, नृणा चारित्रकाक्षिणाम्। अनुग्रहार्थं सर्वज्ञैः, सिद्धातः प्राकृतः कृतः ॥ १ ॥' अतो हेतोर्नाय परिपल्पितो दृष्टेष्टाविरुद्धत्वात् ॥ १ ॥ आकाक्षा

तु दयादिगुणलेशदर्शनतोऽन्यान्यमतग्रहणेच्छारूपा परिज्ञेया । सापि द्वेधा देशसर्वभेदात् । तत्र देशत आकांक्षा एकस्य कस्यचित् कुतीर्थिकमतयाकांक्षालक्षणतो विज्ञेया यथाऽस्मिन्नपि स्वल्पहिंसैव धर्मः प्रोच्यते, फलमपि च मोक्षरूपमेव । सर्वतस्तु यः सर्वाणि शाक्याजीवककापिलौलूक्यबोटिकभाट्टप्राभाकरादिकुदर्शनान्यभिलषति कृषीवल इव सर्वधान्यवपनानि कदाचित् किंचित् फलतीति धिया तस्यावसेया २ । विचिकित्सा त्वात्मनः फलं प्रत्यविश्वासरूपा । सापि देशसर्वभेदतो द्विप्रकारा । सा च समभूत्तादृशानुष्ठानाऽनुष्ठायिनां पुरातनानां मोक्षः, अस्मादृशां त्वस्नानकंचलुंचनादिकं कष्टमेव मंदसत्त्वात् क मोक्षसंभव इति देशतः स्तोकाविश्वासरूपा विज्ञेया । सर्वतस्तु सर्वाविश्वासरूपा । अथवा विदृक् ज्ञाने, विदंतीति क्विपि तल्लोपे विदः साधवस्तेषां गुप्सा विजुगुप्सा । सा च देशतोऽहो मलदुर्गंधा अमी मुनयश्चेदुष्णोदकेन स्नायुस्तदैतेषां को दोषपोष इत्यादिका । सर्वतस्तु मंडल्यां नंदिपात्रे मिथः संसृष्टभोजिनोऽमी गुप्तिगृहवासिन इव सर्वदैव महामलीनांगवाससः प्रागदत्तदानत्वेनाजन्मभिक्षाभोजनव्रतय इत्यादिका ३ । परपाखंडिनां चरकपरिव्राजकादीनां प्रशंसाज्ञानकष्टानुष्ठानप्रभृतिगुणोत्कीर्त्तनरूपा परिज्ञेया ४ । तेषामेव संस्तवः परस्परालापादिरूपपरिचयकरणतोऽव्यवसेयः ५ । एतानि शंकादिकानि पंचापि दूषणानि श्रीमद्दर्शनशुद्ध्यर्थं वर्जनीयानि विवेकिभिः इत्युक्तानि श्रीमत्सम्यग्दर्शने पंचापि दूषणानि ।

प्रभावनाष्टकं तु प्रभावकाष्टकविनिर्मितं श्रीमदार्हतमते, ते च प्रावचनिक १, धर्मकथिक २, वादि ३, नैमित्तिक ४, तपस्वि ५, विद्यावत् ६, सिद्ध ७, कवि ८, लक्षणा अष्टौ अवसेयाः । तत्र समयानुमानप्रवर्त्तमानसूत्रार्थधारकश्चतुर्विधश्रीसंघरूपतीर्थस्य श्रीमदार्हतोपदेशेन निर्वाणाध्वनि प्रवर्त्तकः प्रावचनिकः परिकीर्त्यते १, धर्मकथिकस्तु निरपदेशश्रीजैन-

वचनोपदेशप्रतिबोधितप्रभूतभव्यजनसमाजः सुकृतकथनलब्धिमानध्यवसेयः २, वादी तु प्रमाणग्रंथनिष्णातमतिर्नृपतिसदस्यपि समासादितपरवादिवृदजयलक्ष्मीकः कीर्त्यते ३, दिव्यौत्पातिकांतरिक्षाभौमांगस्वरव्यंजनलक्षणपरिज्ञानरूपमष्टांगनिमित्त प्रवचनोन्नतिनिमित्त यः प्रयुक्ते स नैमित्तिकः कथ्यते ४, तपस्वी तु विकृष्टैरष्टमादिभिः सांवत्सरिकपर्यंततपोभिरुद्भासयति प्रवचन ५, जापहोमप्रभृतिसिद्धिप्राप्तप्रभूतविद्यामंत्रैः प्रवचनप्रभावना विधायी विद्यावानिगद्यते ६, सघादिकार्यप्रसाधकचूर्णांजनयोगसिद्धितः सिद्धोऽभिधीयते, तत्र चूर्णानि सुवर्णसिद्ध्यादिजनकानि स्युः, अंजनानि पुनरदृश्यीकरणनिधिप्रदर्शनप्रयोजनानि, योगास्तु सौभाग्यकरगगनगमनादिप्रसाधकपादलेपप्रभृतयः परिज्ञेया ७, सद्भूतार्थसार्थग्रन्थी जिनप्रवचनवेत्ता तु कविः परिकीर्त्यते ८, अथवाऽतिशेषितर्द्धि १ धर्मकथिक २ वाद्याचार्य ३, नैमित्तिक ४, क्षपक ५, विद्यावं ६, नृपति ७, गणसम्मत ८, लक्षणा अष्टौ प्रभावका विज्ञेयास्तेष्वऽतिशेषिता. परेभ्यः परमोत्कर्षं प्रापिता ऋद्धयो जघाचारणावधिमनःपर्यवप्रभृतयो येन स अतिशेषितर्द्धिः। धर्मकथिकवादिक्षपकनैमित्तिकविद्यावतस्तु पूर्ववद् व्याख्येयाः। आचार्यस्तु पण्णवत्यऽधिकद्वादशशतमितगुणगरिष्ठः। नृपतिस्तु श्रीमदार्हतमतैकांतभक्तिमान् गणसम्मतस्तु नरेंद्राद्यभीष्टो विज्ञेयः। एव किञ्चित् प्रकारांतरेणाऽष्टौ प्रभावकाः प्रतिपादिताः। एव च प्रभावनाविधानाऽशक्ततायां श्रीशत्रुजयादिमहातीर्थयात्रास्नात्रमहापूजादिमहामहनिर्मितश्रीगुरुवंदनाद्यर्थसन्मुखगमनादिना जनमनोरंजनेन प्रभावना विधेया श्रमणोपासकपुंगवैः। यतिभिस्तु श्रीमदर्हदुपदिष्टविशिष्टस्वक्रियानुष्ठानत इत्युक्त किञ्चित् प्रभावकाष्टकस्वरूपम्।

अथ भूषणपचकस्वरूप प्रोच्यते, तथाहि–कौशल १ तीर्थसेवा २ भक्ति ३ स्थिरता ४ प्रभावना ५ लक्षणानि श्रीमत्स

म्यग्दर्शनस्य पंचभूषणानि विज्ञेयानि। तेषु श्रीजिनपूजाषड्विधावश्यकप्रभृतिश्रीमदर्हदुपदिष्टविशिष्टक्रियाकरणविषये निपुणता-कौशल्यमुच्यते, तेन हि श्रीमत्सम्यग्दर्शनं भूष्यते। तीर्यते संसाराकूपारोऽनेनेति तीर्थं, तद् द्रव्यभावभेदाभ्यां द्विविधम्। तत्र द्रव्यतीर्थं जिनजन्मादिस्थानम्। यदुक्तं 'जम्मं दिक्खा नाणं, तित्थयराणं महाणुभावाणं। जत्थ य किर निव्वाणं, आगाढं दंसणं होइ ॥ १ ॥' भावतीर्थं तु चतूरूपः श्रीश्रमणसंघः प्रथमगणधरो वा। तयोरुभयोरपि तीर्थयोः सेवा पर्युपास्तिरूपा विधेया। तत्र द्रव्यतीर्थस्य श्रीशत्रुंजयश्रीरैवताष्टापदप्रभृतिकस्य यात्राकरणतः सपर्या विधेया। यतस्तद्-यात्रासूत्रणं हि महते सुकृताय बोभवीति। यत उक्तं 'ते धन्याः कृतिनस्त एव च वशी-भूतत्रिलोकश्रियस्तेषामेव तदैव हंत फलितं, पुण्यैः पुरोपार्जितैः। तेषां जन्म च जीवितं च सफलं, तैरर्जिताः कीर्त्तयः, श्रीनिर्वाण-सुखप्रदो जिनपते-र्यात्राविधिर्यैः कृतः ॥ १ ॥' इति। भावतीर्थस्य तु सेवा संविग्नयतिजनप्रभृतिसंगतिकृतितः कर्त्तव्या। तथैकोनत्रिंशत्तमश्रीसम्यक्त्वपराक्रमनामधेयश्रीमदुत्तराध्ययनोदितसंवेगनिर्वेदधर्मश्रद्धागुरुसाधर्मिकशुश्रूपालोचना-निंदागर्हासामायिकादिद्वासप्ततिस्थानसेवनतो विधेया २। भक्तिश्चादरकरणरूपा यथोचितं जिनपतियतिपुंगवानां विधिवद्-विधातव्या ३। स्थिरता तु सुकृतविषयचित्तस्थैर्योत्पादनरूपा करणीया ४। प्रभावना तु प्रवचनोन्नतिरूपा पूजास्नात्रादि-महामहनिर्माणतः कर्त्तव्या ५। इत्युक्तं भूषणपंचकम्।

अथ लक्षणपंचकस्वरूपं किञ्चिदुच्यते। तथाहि-यैश्चित्तांतर्गतं श्रीमत्सम्यग्दर्शनरत्नं लक्ष्यते तान्युपशम १, संवेग २, निर्वेदा ३, ऽनुकंपा ४, स्तिकत्वरूपाणि ५, पंच परिज्ञेयानि। तेषु महत्यपराधे ताडनादिभिरंत्यदशाप्रापणरूपेऽपि क्रोधानु-

त्पत्तिरुपशम' प्रोच्यते । तेन हि चित्तावर्गतमपि श्रीमत्सम्यग्दर्शनरत्नं लक्ष्यते । ननु श्रेणिककृष्णादीनां विषयतृष्णा क्रोधयोधपराभूतचित्तानां कथं कथमिवोपशमः समान्यते। सम्यक्त्वं च तेषु नियमत' क्षायिकमेव वेविद्यते । तत् कथमुपशमरूपं लिंगं विना लिंगिरूपं श्रीमत्सम्यग्दर्शनरत्नं जाघटीति ? उच्यते लिंगे सति लिंगी स्यादेव न तु लिंगिनि लिंगमिति नियमोऽधूमस्यापि धूमध्वजस्य दर्शनादिति १, संवेगस्तु निसर्गसुखससर्गं श्रीमदपवर्गं प्रत्यभिलापरूपो भवविरागरूपश्च २, निर्वेदस्तु त्वरितससारिकारागारत्यागेच्छारूपः ३, अनुकंपा तु पक्षपातरहितत्वेन दु'खिनि निजांगजप्रभृतौ हिंस्रेभव्याघ्रादौ प्राणिवर्गे दयारूपा । सा च द्रव्यभावभेदाभ्यां द्विविधा । तत्राधा शक्तौ सत्यां दुःखिनो दुःखप्रतीकाररूपा । द्वितीया तु तदशक्तौ सार्द्रचित्ततास्वरूपा ४, आस्तिक्यं तु श्रीजिनोक्ततत्त्वैकांतप्रत्ययस्वरूपं परिज्ञेयं ५, इत्युक्तं किञ्चित् श्रीसम्यग्दर्शने लक्षण पचकम्।

अथ षड्विधयतनास्वरूपं प्ररूप्यते–तथाहि सौगतशैवप्रभृतीनां परतीर्थिकाना च तथागतगिरीशादीनां तथान्यतीर्थिकपरिगृहीताऽर्हत्प्रतिमितीनां यत् षड्विधव्यवहारवर्जनं सा षड्विधा यतना प्रोच्यते । स चायं वंदन १ नमस्करण २ दाना ३ ऽनुप्रदाना ४ लाप ५ संलाप ६ रूपः । तत्र वंदनं करयोजनोत्तमांगप्रणामकुसुमादिसमभ्यर्चनरूपं परिहार्यं परतीर्थिकतद्देवततद्गृहीतार्हत्प्रतिकृतीनां १ । नमस्कारश्च तद्विषयः परिवर्जनो यो वाचिक', न केवलं वाचिकः किंतु चित्तप्रसत्तिरूपोऽपि २ । दानं च तद्गुणगौरवप्रकटीकारकमिष्टाशनपानखाद्यादीनां तथा शय्यासंस्तारकप्रभृतीना तेषां न वितरणीयम् ३ । तदेव पुनर्वितीर्यमाणमनुप्रदानं प्रकीर्त्यते तदपि तेषां वर्जनीयम् ४ । आलापस्तु सस्नेहसभाषणरूपः कुशलं वा युष्माकं स्वागतं

वेत्यादिप्रश्नरूपः ५ । संलापस्तु पुनः पुनः सुखदुःखगुणदोषप्रश्नरूपः, एतौ द्वावपि परतीर्थिकैः सह परिहरणीयौ । तत्र सुखप्रश्नो यूयं सुखिनः स्थ इत्यादिरूपः । दुःखप्रश्नस्तु भवतां कापि मानसिक्यादिका व्यथा वेविद्यते इति प्रभृतिकः । गुणप्रश्नस्तु रोगाद्यापद्विपयो विद्याभ्यासादिविपयो वा विज्ञेयः । दोषप्रश्नस्तु ग्रहपीडाभूतप्रेतशाकिन्यादिबाधावैपयिकोऽवसेयः । एते च वंदन १ नमस्करण २ दाना ३ ऽनुप्रदाना ४ लाप ४ संलापाः पूर्वमालापसंलापादिना परिचिते मिथ्यादृशि वर्जनीयाः । इत्युक्तं षड्विधयतनास्वरूपम् ।

अथ षड्विधाकारस्वरूपं किञ्चित् प्ररूप्यते । तत्र स्वीकृतत्वे रक्षणकृते उत्सर्गमार्गसबलतयाऽपवादरूपा आकारास्तीर्थकरैः प्रकीर्तिताः । यतः ‘ वयभंगे गुरुदोसो, वयस्स य पालणा गुणकरी य । ता जं गुरुअंपि वयं, भग्गं च न होइ फलहेऊ ॥ १ ॥ ’ अतो हेतोः श्रीसम्यग्दर्शने षडाकाराः प्ररूपितास्तीर्थपतिभिः । यतः क्षायिकज्ञानदर्शनयथाख्यातचरितवतामेव निरतिचारो मार्गः । ते च नृपत्यभियोग १, गणाभियोग २, बलाभियोग ३, दैवताभियोग ४, गुरुनिग्रह५, वृत्तिकांताराख्याः ६, षट् संख्या अवसेयाः । तत्र नृपतिः पत्तननगरग्रामकर्बटादिस्वामी, गणस्तु जातिज्ञातिसंबंधिबंधुप्रभृतिजनसमुदायः, बलं च बलवद्भिरमात्यश्रेष्ठ्यादिभिर्विहितं विज्ञेयं, देवास्तु मिथ्यादर्शनिनः क्षुद्रसुरविशेषा एतेषामभियोगो बलात्कारः । एते यदि बलात्कारेण कारयंति किमपि परदर्शनवंदनादिकं तदपि चेदेते आकारा मुत्कलाः कृताः स्युस्तदा न दूष्यते श्रीमद्सम्यग्दर्शनरत्नम् । गुरवस्तु पितृमातृभ्रातृकलाचार्यादयः । यदुक्तं ‘ पिता माता कलाचार्य, एतेषां ज्ञातयस्तथा । वृद्धा धर्मोपदेष्टारो, गुरुवर्गः सतां मतः ॥ १ ॥ ’ एते हि पित्रादयः कुदर्शनभक्तिभाजो यद्बलाद्

लक्षणपञ्चकम्, यतनाषट्कम्, आकारषट्कञ्च ।

वदापयति कुप्रावचनिकप्रभृतिक स गुरुनिग्रह' कीर्त्यते। फलजलादिविकले कांतारे दुर्भिक्षादौ वा बुभुक्षादिना सीदन वृत्तिकांतारशब्देनोच्यते। एते च राजाभियोगादयः षडाकारा मदसत्त्वापेक्षया विज्ञेयाः। यतो महासत्त्वाश्छेदनभेदनादिभिः कदर्थ्यमाना अपि न चलत्येव शुद्धधर्ममार्गतः। इतरेषा तु हीनसत्त्वानामुत्सर्गमार्गाच्चलनेऽपि षड्भिरेतैराकारैः प्रतिज्ञाभगो न भवेदिति हेतोः श्रीसम्यग्दर्शने षडाकारा प्ररूपिताः श्रीमत्तीर्थपतिभि' । इत्युक्त किञ्चिदाकारषट्कस्वरूपम्।

अथ भावनाषट्कस्वरूप किमप्युच्यते। तथाहि भावयेत् सम्यक्त्व चारित्रधर्मस्य मूलभूत १ द्वारभूत २ प्रतिष्ठानभूत ३ निधानभूत ४ माधारभूत ५ माजनभूत च ६। एतेषा चैव भावना भावयेत्। श्रीसम्यक्त्व धर्मद्रुमस्य मूलभूतम्। यत' श्रीमद्दर्शनमूले दृढे सति वितरति निर्वृतिस्वरूपमप्रतिरूप फल श्रीमच्चरितदेवतपादपः १। तथा भावयेत् श्रीमद्दर्शन द्वारभूत यतो दर्शनद्वार विना नैव प्रवेशो भवेत्कातुचिदपि श्रीमदर्हदुपदिष्टविशिष्टसुकृतपत्तने २। तथा भावयेच्च श्रीसम्यक्त्व प्रतिष्ठानभूत यतो दर्शनपीठे निश्चलतमे सति नदति यतियत्युपासकसुकृतरूपप्रासादः ३। तथा भावयेच्च श्रीमद्दर्शन मूलोत्तरगुणरूपरत्नानामक्षयनिधानभूत तत्र मुनीना मूलगुणा. सरजनिभोजनविरमणानि पचमहाव्रतानि, उत्तरगुणास्तु पिंडविशुद्धिप्रभृतयः, यदुक्त ' पिंडस्स जा विसोहि, समिईओ भावणा तवो दुविहो। पडिमा अभिग्गहा वि अ, उत्तरगुणिए वियाणाहि ॥ १ ॥ ' श्रमणोपासकाना तु मूलगुणाः पचाऽणुव्रतानि उत्तरगुणास्तु गुणव्रतशिक्षाव्रतप्रभृतयः। एतेषा च मूलोत्तरगुणानां श्रीसम्यक्त्व निधानभूत भावनीय यतः श्रीमद्दर्शन विना तेषा कुतास्थितिः ४। तथा श्रीसम्यक्त्व सर्वं सदैव चरितजीवलोकस्याधारभूत भावनीय ५। तथा माजनभूत च यतो द्वादशांगीविद्यारूपश्रुतसर्वसावद्यपरित्याग

रूपसुचरितसमुद्भूतप्रभूततमांतिमरसः श्रीमद्दर्शनभाजन एव तिष्ठति नान्यत्र यथा व्याघ्रीपयः कनककचोलक एव ६ । इति भावितं किञ्चिद् भावनाषट्कस्वरूपम् ।

अथ स्थानषट्कस्वरूपं किमपि प्रपंच्यते । तथाहि–जीवोऽस्तीति प्रथमं स्थानम् १, स च नित्य इति द्वितीयं स्थानम् २, कर्त्ता चेति तृतीयम् ३, भोक्ता चेति तुरीयम् ४, अस्ति च तस्य मोक्ष इति पंचमम् ५, तदुपायश्चापि सम्यग्दर्शनादिर्विद्यतेइ ति षष्ठम् ६ । एतेषु जीवो विद्यते प्रत्यक्षादिप्रमाणसिद्धत्वात्तथाहि अहं सुखी अहं दुःखीत्यादिस्वसंवेदनप्रत्यक्षेणैव स्वयं प्रतीयते, यदुक्तम्, 'इदं सुखमिति ज्ञानं, दृश्यते न घटादिवत् ॥ अहं सुखीति तु ज्ञप्तिरात्मनोऽपि प्रकाशिका ॥ १॥' केवलिना तु करकलितामलकवद् यथावस्थितस्वरूपेण प्रत्यक्ष एव सः, अनुमानगम्यश्चायं तथाहि अस्त्यात्मा चैतन्यसुखदुःखेच्छादिकार्याणां तं विनानुपपत्तेरिति । तथागमे च लौकिके स च अयमात्मा ज्ञानमय इत्यादिके लोकोत्तरे तु पड्जीवनिकायप्ररूपणप्रक्रमे सर्वत्राप्युक्त एव प्रवर्त्तते । एवं प्रत्यक्षादिप्रमितिप्रतीतचेतनास्तित्वं निर्विवादतया प्रतिपत्तव्यम् १ । स चात्मा नित्य इति द्वितीयस्थानं यतस्तनुमान् द्रव्यार्थिकनयापेक्षया नित्य एव पूर्वकृतानुस्मरणात् श्रूयंते हि समये बहवोऽपि पूर्वपरिचितवस्तुनिरीक्षणेन संजातजातिस्मृतयः, पर्यायास्तु तस्य भवाद्भवांतरप्राप्त्यादिका अनित्याः २ । स चात्मा शुभाशुभानां ज्ञानावरणीयादिकर्मणां मिथ्यात्वाविरतिकषाययोगरूपबंधनिबंधनसामग्र्या कर्त्ता कुलाल इव स्थाल्यादीनां मृद्दंडचक्रचीवरादिनिमित्तसमुदयेनेति तृतीयं स्थानम् । तत्र पुरतो वक्ष्यमाणस्वरूपं मिथ्यात्वं चतुर्विधं पंचविधं वा विज्ञेयम् । अविरतिस्त्वऽंतःकरणकरणपंचकानियंत्रणम् ऋतु(६)विधजीववधरूपा द्वादशविधा । कषायास्त्वनंतानुबंध्यप्रत्याख्यानप्रत्याख्याना-

वरणसंज्वलनक्रोधमानमायालोभरूपाः षोडश, तेषु यावज्जीवाऽवस्थायिनो निरयगतिनिबंधनभूताः सम्यग्दर्शनघातिनः सानुमद्राजीप्रस्तरस्तंभगुपिलवंशीमूलकृमिरागसमाना अनंतानुबंधिनश्चत्वारः क्रोधादयो विज्ञेयाः। संवत्सरावधिविहित तावस्थितयस्तिर्यग्गतिगमनहेतुभूता देशविरतिघातिनो मेदिनीभेदास्थिमेंढकशृंगकर्दमसमा अप्रत्याख्यानाश्चत्वारोऽपि कोप प्रभृतयः समवसेयाः। श्रुति(४)मितमासावधिनिर्मितस्थितयो नरगतिनिदानभूताः सर्वसंयमघातिनो रेणुराजीदारुस्तंभगो मूत्रिकाखंजनसन्निभाः प्रत्याख्यानावरणाश्चत्वारोऽपि रोषप्रमुखाः प्रकीर्तिताः श्रीमत्यार्हतसमये। पक्षावधिकृतावस्थानाः सुपर्वगतिनिमित्तभूता यथाख्यातचरितघातिनः पानीयराजीतिनिशलताऽवालखिकाहरिद्रारागसरूपाः संज्वलनाश्चत्वारः क्रोधादयोऽवसेयाः। एवमेते षोडश कषाया हास्यरत्यरतिशोकभयजुगुप्सावेदत्रिकरूपनोकषायनवकेन समं पंचविंशति संख्या भवेयुः। योगास्तु सत्य १, सत्येतर २, सत्यामृषा ३, ऽसत्यामृषा ४, मनोयोगस्तावन्मितभेदवचनयोगो, वैक्रिया ९, हारकौ १० दारिक ११, वैक्रियमिश्रा १२, हारकमिश्रौ १३, दारिकमिश्र १४, केवलकार्मणयोग १५ रूपाः पंचदश विशदविद्भिरुपदिष्टाः। एतेषु सत्यादीनां स्वरूपमिमाभिः श्रीमदागमेयगाथाभिरवसेयं तथाहि 'जणवय १, सम्मय २, ठवणा ३, नामे ४, रूवे ५, पडुच्चसच्चे अ ६। ववहार ७, भाव ८, जोगे ९, दसमे उवम्मण १०, सच्चेय ॥ १ ॥' इति दशधा सत्यम्। एतेषां च किञ्चिद् विवरणम्, कुङ्कणादिषु पयः पिच्च नीरमुदकमित्यादि जनपदसत्य १, कुमुदादीनां सत्यपि पंकजत्वे लोकस्याऽरविंदमेव पंकजमित्यादि सम्मतसत्य २, लेपोपलमयादिप्रतिमितिष्वऽर्हदादीनां स्थापना स्थापनासत्यं कीर्त्यते ३, कुलमवर्द्धयन्नपि कुलवर्द्धन इत्यादि नामसत्य ४, लिंगमात्रधार्यपि पद् व्रतीत्युच्यते

तद्रूपसत्यं ५, कनीनिकामाश्रित्याऽनामिकाया दीर्घत्वमनामिकामाश्रित्य कनिष्ठायां ह्रस्वत्वमित्यादि प्रतीत्यसत्यं ६, तृणादिषु दह्यमानेषु सानुमान् दह्यते इत्यादि यद् भाषणं तद् व्यवहारसत्यं ७, सत्यपि वर्णपंचकसंभवे शुक्लवर्णस्योत्कटतया शुक्ला बलाकेति भावसत्यं ८, दंडयोगाद्दंडीत्यादि योगसत्यं ९, पारावारवदयं कासार इत्याद्यौपम्यसत्यम् १०, इत्युक्तं दशधा सत्यम्, असत्यमपि दशभेदं पूर्वसूरिविरचितगाथयैव लिख्यते । तथाहि ' कोहे, १ माणे, २ माया, ३ लोभे, ४ पिज्जे, ५ तहेव दोसे, ६ अ । हासे, ७ भए, ८ अक्खाइअ, ९ उवघाए, १० निस्सिआ दसहा ॥ १ ॥ ' इयं च गाथा सुगमप्रायेति न व्याक्रियते इत्युक्तमसत्यं दशधा । सत्यमृषापि दशधा तथाहि ' उप्पन्न १, विगय २, मीसग ३, जीव ४, अजीवे य ५, जीवअजीवे ६ । तह मीसगा अणंता ७, परित्त ८, अद्धा ९ य अद्धद्धा १० ॥ १ ॥ ' तत्र सम्यगविज्ञाय गणनामद्य नगरे दशैव दारकाः संजाता इत्यादिभाषणमुत्पन्नविषया सत्यामृषाभाषा १, एवं दशैव मृता इत्यादिका विगतविषया २, दशजाता दश च मृता इत्यादिका मिश्ररूपा ३, कस्मिंश्चित् कीटिकादिजंतुजाते स्वल्पपरासु-भूतकीटकादिमिश्रिते जीववद्रूपा एवैते कीटिकादिजंतव इत्यादिका जीवविषया ४, अल्पतरजीववत् पिपीलिकादिमिश्रित-तत्समुदाये मृता एवैते पिपीलीकादिजीवा इत्यादिकाऽजीवविषया ५, तस्मिन्नेव जीवसमुदये सम्यगविज्ञायापि एतावंत एव जीवन्त एतावंत एव च तदितरे इतिप्रभृतिका जीवाऽजीवविषया ६, तथा प्रत्येकपत्रादिमिश्रितमूलकादौ सर्वोऽप्य-यमनंतकाय एवेति प्रत्येकमिश्रितेष्वनंतकायविषया ७, तस्मिन्नेव च सर्वोऽप्यसौ प्रत्येकवनुरेवेत्यनंतमिश्रितेऽपि प्रत्येक-विषया ८, तथा परिणतप्राये वासरे रजनी वर्त्तते इत्यादिकाऽद्धागोचरा ९, तथा सार्द्धप्रहरादिकेऽपि दिने जाते यामद्वैतं तु

समभूत्यादिकाऽद्धाद्धावैषयिका १०, इति किञ्चिन्निगदिता दश प्रभेदा सत्यामृषा । एषा तु देशतः सत्यतया देशतश्चासत्यतया सत्यामृषेति परिकीर्त्यते । या तु नैवाराधनी तल्लक्षणविकलतया नापि विराधनी विपरीतवस्तुस्वरूपानभिधानात् परपीडाहेतुताऽभावतश्च नाप्याराधनविराधनी एकादश सवादविसवादाभावात् 'हे साधो । प्रतिक्रमण विधेहि स्थण्डिलानि प्रत्युपेक्षस्वे'ति व्यवहारविषयामन्त्रिण्यादिद्वादशभेदभिन्नाऽसत्यामृषा तथाहि 'आमतणि १ आणवणी २ जायणि ३ तह पुच्छणी ४ । अपन्नवणी ५ पच्चक्खाणी ६ नाम, भासा इच्छाणुलोमा य ७ ॥ १ ॥ अणभिग्गहिआ भासा ८, भासा य अभिग्गहम्मि ९ बोधव्वा । ससयकरणी १० भासा, वागड ११ मव्वागडा चेव १२ ॥ २ ॥' एतद्व्याख्या हे देवदत्तेत्यामन्त्रणी १, इदमानयेत्यानायनिकी इद कुरु इद च मा कुर्वित्याद्याज्ञापनिकी वा २, इद मम देहीत्याद्या याचनिकी ३, कथमेतदितिप्रभृतिका प्रच्छनिकी ४ 'पाणिवहा उ निअत्ता हवति दीहाउआ अरोगा य' इत्याद्या प्रज्ञापनिकी ५, केनचित् कस्मिन्नपि वस्तुनि प्रार्थिते सति नेद ददामीति निषेधरूपा प्रत्याख्यानी ६, केनचित् कस्मिन्नपि कार्ये कर्तुमिष्टे पृष्टे सति कर्त्तव्यमेतदित्यादिरूपा इच्छानुलोमा ७, अनभिगृह्यार्थं याच्यते मिच्छडविथशब्दोच्चारणवत् साऽनभिगृहीता ८, अभिगृह्यार्थं च याच्यते घटपटप्रभृतिशब्दवत् साभिगृहीता ९, सैन्धवो वर्त्तते इत्यादिवदनेकार्थवाचका सशयकरणी १०, व्याकृता तु प्रकटाक्षरा ११, अव्याकृता तु बालादीनामिवाप्रकटाक्षरा १२ इति व्याख्याताऽऽतपन (१२)-मितभेदाऽसत्यामृषा । एते च सर्वेऽपि सत्यादिभेदा मनोयोगमाश्रित्य चिंतनविषया विज्ञेयाः भाषणमाश्रित्य तु वचनविषयाः एव सत्यादयश्चत्वारो मनोयोगविषया वाग्योगविषयाश्च । एवमेतेऽष्टौ भवति वैक्रियाहारकौदारिककाययोगाना मध्ये

रिककाययोगो नरतिरश्चामेव । आहारककाययोगस्तु नराणामेव, नरेष्वपि सर्वसंयमभृतामेव, तेष्वपि चतुर्दशपूर्वधराणामेव । स चैकस्मिन् भवे वारद्वैतमेव । भवपरिभ्रांतौ च पुनर्वारद्वितयमेवमेकजीवमाश्रित्यासंसारमपि वारचतुष्टयमेवाहारककाययोगः । यदुक्तं 'चत्तारिअ वाराओ, चउदसपुव्वी करेइ आहारं । संसारम्मि वसंतो, एगभवे दुन्निवाराओ ॥ १ ॥' इति सर्वचतुर्दशपूर्विणः समाश्रित्याहारकशरीरस्य जघन्यतः समयमेवांतरमुत्कर्षतस्तु षण्मासाः । एतानि पुनराहारकशरीराण्युत्कर्षतः सहस्रपृथक्त्वप्रमितानि प्राप्यंते यदुक्तं 'समओ जहन्नमंतरं, उक्कोसेणं तु जाव छम्मासा । आहारसरीराणां, उक्कोसेणं नवसहस्सा ॥ १ ॥" इति एतद्विधानं च तीर्थकरऋद्धिदर्शनार्थमर्थावगाहनार्थं संशयव्यवच्छेदार्थं च भवति । उक्तं च 'तित्थयरऋद्धिसंदंसणत्थमत्थोवगहणहेउं वा । संसयवुच्छेअत्थं गमणं जिणपायमूलम्मि ॥ १ ॥' इति वैक्रियकाययोगस्तु सुरनैरयिकाणां केषांचिद् वैक्रियलब्धिमतां गर्भजनरतिरश्चां केषांचिद् वायुकायिकानां च यदुक्तं श्रीहरिभद्रसूरिभिरनुयोगद्वारटीकायां 'वाउकाइया चउव्विहा पन्नता सहुमा पज्जत्ता अपज्जता । बादरा पज्जता अपज्जत्ता । तत्थ तिन्निरासीपत्तेयं असंखिज्जलोगप्पमाणप्पएसरासिप्पमाणमित्ता । जे पुण बायरा पज्जता ते पयरासंखिज्जभागमित्ता । तत्थ ताव तिण्हं रासीणं वेउव्वियलद्धी चेव नत्थि । बायरपज्जत्ताणंपि असंखिज्जभागमित्ताणं अत्थि । जेसिंपि लद्धि अत्थि तउवि पलिउवमासंखिज्जभागसमयमित्ता संपयं पुच्छासमए वेउव्विअवत्तिणो' इति वैक्रियमिश्रकाययोगस्त्वौदारिकदेहिनां वैक्रियकायं विधाय तत्संहृतिसमये औदारिककाययोगेन समं मिश्रतया समवसेयः । एवमाहारकमिश्रकाययोगोऽपि

व्याख्येयः। औदारिकमिश्रकाययोगस्तु नरतिरश्चामुत्पत्तिकाले औदारिके देहेऽपूर्णे सति तैजसकार्मणयोरपि व्यापारवत्तया विज्ञेयः। केवलिसमुद्घातावस्थायां च द्वितीयषष्ठसप्तमसमये औदारिकस्य तद्बहिश्च कार्मणकाययोगस्यापि व्याप्रियमाणत्वात्, कार्मणकाययोगस्तु विग्रहगतौ केवलिसमुद्घाते च तृतीयतुरीयपञ्चमसमयेषु समवसेयोऽनाहारकत्वात्। उक्तं च 'सत्तमछट्ठबिइज्जेसु, होइ ओरालमिस्सो सो, कम्मणसरीरजोई, चउत्थए पञ्चमे तइज्जे अ। ज होइ अणाहारो, सो तम्मि तिगे वि समयाण॥ १॥' इति एतेषां चौदारिकवैक्रियाहारकतैजसकार्मणरूपाणां पञ्चानामपि तनूनां कारण १ प्रदेशसंख्या २ स्वामि ३ विषय ४ प्रयोजन ५ प्रमाणा ६ ऽवगाहना ७ स्थित्य ८ ऽल्पबहुत्वकृतो नवधा भेदोऽभिधीयते। तथाहि-कारणकृतो भेदो (व्यक्तः १, प्रदेशसङ्ख्याकृतो भेदो) यथा औदारिकादसंख्येयगुणप्रदेशं वैक्रियं ततोऽप्यसंख्येयगुणप्रदेशमाहारकं ततोऽप्यनन्तगुणप्रदेशं तैजसं ततोऽप्यनन्तगुणप्रदेशं कार्मणं २, स्वामिकृतो भेदो यथा औदारिकं तिर्यङ्मनुष्याणाम्, वैक्रियं सुमनोनैरयिकाणां तिर्यग्नराणां च केषांचिद् वैक्रियलब्धिमताम्, आहारकं तु चतुर्दशपूर्वभृताम्, तैजसकार्मणे तु सर्वसंसारिणाम् ३, विषयकृतो भेदो यथा औदारिकस्य तिर्यगुत्कृष्टो विषयो विद्याधरानाश्रित्याऽऽनन्दीश्वरात्, जङ्घाचारणांस्तु प्रतीत्यारुचकपर्वतात्, ऊर्ध्वं तूभयान् प्रत्यापाण्डुककाननात्, वैक्रियस्य पुनरसंख्येया द्वीपसमुद्राः, आहारकस्य तु महाविदेहाः, तैजसकार्मणयोस्तु सकललोकः ४, प्रयोजननिर्मितो भेदो यथा औदारिकस्य धर्माधर्मसुखदुःखकेवलसंविदवाप्त्यादिप्रयोजनम्, वैक्रियस्य तु स्थूलता सूक्ष्मतैकतानेकता गगनक्षित्यन्तर्गमनादि, आहारकस्य तु सूक्ष्मार्थविषयसंशयव्यवच्छेदादि, तैजसस्य पुनराहारपाकः शापानुग्रहशक्तिश्च, कार्मणस्य तु भवांतरगतिः ५। प्रमाणकृतो भेदो यथा औदारिकमुत्कर्षतः

सातिरेकयोजनसहस्रमानम्, वैक्रियं तु सातिरेकलक्षयोजनमानम्, आहारकं तु हस्तमानम्, तैजसकार्मणे तु लोकाकाशप्रमाणे ६, अवगाहनाकृतो भेदो यथा सातिरेकजोजनसहस्रमानमौदारिकं यावत्स्वसंख्येयेषु प्रदेशेष्ववगाढं तेभ्यो बहुतरेष्वसंख्येयेषु प्रदेशेष्ववगाढं योजनलक्षप्रमाणं वैक्रियम्, आहारकं त्वाभ्यामल्पप्रदेशावगाढं हस्तमात्रप्रमाणत्वात्, तैजसकार्मणे तु केवलिसमुद्घातमाश्रित्य सकललोकाकाशप्रदेशावगाढे ७, स्थितिकृतभेदो यथा औदारिकस्य जघन्या स्थितिरंतर्मुहूर्त्तम्, उत्कृष्टा तु पल्योपमत्रितयम्, वैक्रियस्य तु भवधारणीयस्य जघन्या दशसंवत्सहस्राणि, उत्कृष्टा तु त्रयस्त्रिंशदतरोपमानि, उत्तरवैक्रियस्य तु जघन्यांऽतर्मुहूर्त्तम्, उत्कृष्टा पुनरेवं जीवाभिगमेऽभिहिता 'अंतोमुहुत्तं नरएसु, होइ चत्तारि तिरिअ-मणुएसु। देवेसु अद्धमासो, उक्कोसं विउव्वणा कालो ॥ १ ॥' भगवत्यां तु वायोः पंचेंद्रियतिर्यग्नराणां पुनरुत्कर्षतोऽप्यंतर्मुहूर्त्तम्, आहारकस्य तूभयथाप्यंतर्मुहूर्त्तम्, तैजसकार्मणे तु प्रवाहतः सर्वेषामनादी भव्यानां सपर्यवसाने अभव्यानां त्वपर्यवसाने ८, अल्पबहुत्वविहितो भेदो यथा सर्वस्तोकमाहारकं कादाचित्कत्वात् यदा च संभवति तदाप्येकं द्वे वा उत्कर्षतस्तु सहस्रपृथक्त्वम्, एतेभ्यो वैक्रियशरीराण्यसंख्येयगुणानि, तेभ्योऽप्यौदारिकशरीराण्यसंख्येयगुणानि, सर्वेषां तिर्यग्नराणां तत्संभवात्, ये च साधारणशरीराः प्राणिनस्तेषामनंतामप्येकैकतनुसद्भावात्तैर्यग्योनिकजंतूनामानंत्ये सत्यप्यौदारिकशरीराण्यासंख्येयगुणान्येव भवंति वैक्रियकायेभ्यः, तैजसकार्मणानि चौदारिकेभ्योऽप्यनंतगुणानि सर्वसंसारिकजीवानां प्रत्येकं तत्सद्भावात् ९, इति निगदितः पंचनामपि तनूनां नवधा भेदः। इत्युक्ताश्च चत्वारोऽपि मिथ्यात्वाविरति-कषाययोगरूपा बंधहेतवः। तदुक्तौ च प्रपंचितं किंचित् कर्त्तेति तृतीयस्थानं ३।

यथात्मा मोक्षेऽस्ति तुरीयं स्थानं किञ्चिद् व्याख्यायते। तथाहि भोक्ता च तत्पूर्वोपार्जितशुभेतरकर्मणां यतो नाभुक्तं कर्म कदापि क्षीयते। यदुक्तं 'नाभुक्तं क्षीयते कर्म, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाऽशुभम्॥ १॥' स च स्वयं कृतान्येव कर्माणि भुङ्क्ते न परकृतानि तद्भुक्तौ हि अतिप्रसङ्गः स्यात् देवदत्तभुक्तौ यज्ञदत्तस्यापि तृप्तिः। न चास्यैतस्य मोक्षो वेद्यते मुक्तावपि तत्प्रसक्तेः। इत्युक्तं तुरीयं स्थानम् ४। अथास्ति च निर्वाणमिति पञ्चमं स्थानमुच्यते। तथाहि अस्ति च नीरस्यैकान्तिकात्यन्तिकानन्दमयसकलकर्मक्षयविभूतो महोदयो यत्र प्राप्तानामनन्तज्ञानानन्तदर्शनानन्तवीर्यानन्तसुखलक्षणमनन्तचतुष्टयं समभ्येत्, यत्र च न रोगशोकाशङ्काजुगुप्सापरस्परावाधादयो दोषाः कदापि प्रादुर्भवन्ति, अयं च महोदयो यतो निरस्तरागद्वेषमोहैस्तीर्थपतिभिर्भाषितस्ततो ध्रुवमस्ति स तदुपायसमन्वे ५। इत्युक्तं पञ्चमं स्थानम्। अथ महोदयोपायलक्षणं षष्ठं स्थानमुच्यते। तथाहि अस्ति च तस्योपायभूता सम्यग्ज्ञानदर्शनचारित्रतपोरूपा चतुष्टयी अस्मिन्नेव ग्रन्थे वक्ष्यमाणस्वरूपा तत्प्रवृत्तिविषये विवेकवता कर्तुं उचितः स्वशक्त्यनुसारेण प्रयत्नः। इत्युक्तं षष्ठं स्थानम् ६। तदुक्तो च श्रद्धानानि श्रद्धानचतुष्कस्य प्राक्तनतरंगे प्रतिपादितत्वादस्मिंस्तरंगे लिंगनिकादित्रिषष्टिस्थानानि। एतेषां च समासेनन्तिर्निर्णीते यथास्थानमागमिते। एवं च सप्तषष्टिस्थानयथायोगस्वीकारपरिहारपुरस्सरं श्रीमत्सम्यग्दर्शनं समाराधयद्भिर्मिथ्यात्वतिरस्तिनीय दूरतः प्रयत्नेन। तच्च चतुर्विधं पञ्चविधं वावसेयम्।

तत्र प्रथमं चातुर्विध्यमेव भाष्यते। तथाहि लौकिकं देवगतम् १, लौकिकं गुरुगतम् २, लोकोत्तरं देवगतम् ३, लोकोत्तरं गुरुगतम् ४, एतेषु प्रथमं लौकिकदेवगतमिथ्यात्वस्य सप्तषष्टिर्भेदा दर्श्यन्ते। तथाहि हरिहरविरञ्चनादीनां प्रासादेषु

गमनपूजननमस्करणादिस्वरूपः प्रथमो देवगतमिथ्यादर्शनभेदो वर्जनीयः सम्यग्दर्शनिभिः १। तथा तैर्मिथ्यादर्शनिभिर्निगदितमेतदपि वर्जयेत् सम्यग्दर्शनीयनियमपूर्वलौकिकदेवगतमिथ्यात्वम्। तद्भेदाश्च इमे तथाहि हठोपवेशनादिकार्यारंभे शुभहेतवे विनायकादीनां नामग्रहणम् २। शशिरोहिण्योश्च गीतगानादि ३। विवाहमहे च विनायकस्थापनम् ४। पुत्रजन्मादौ पष्ठदिने निशि पष्ठीदेवतापूजनं जातकस्य पष्ठदिने हि रजन्यां शिशोः शिरसि विधिरक्षराणि लिखतीति लोके प्रवादप्रेरितहृदयाः सुंदर्यो यामिन्यां जाग्रति गायंति चेति ५। पाणीग्रहणप्रभृतिमहामहेषु च मातॄणां स्थापनम् ६। शुक्लद्वितीयायां च चंद्रं प्रति दशिकादानम् ७। चंडिकादिदेवीनां चोपयाचितकरणम् ८। तोतुलादेवीग्रहादिपूजनं च ९। चैत्राश्विनमाससंबंधिशुक्लसप्तम्यष्टमीनवमीदिनेषु च गोत्रदेवताविशेषपूजनम् १०। माघशुक्लषष्ठ्यां च सूर्यरथयात्रा ११। शशिसूर्यग्रहणादौ च विशेषतः स्नानदानप्रदानप्रतिमितिपूजनादि १२। रजःपर्वदिने च होलिकायाः प्रदक्षिणादानादि १३। पितॄणां च पिंडप्रदानम् १४। शनिवारे च तत्पूजार्थविशेषतस्तिलतैलादिप्रदानम् १५। माद्रपदशुक्लदूर्वाष्टमीदिने च दूर्वापूजनपूर्वं विरुहादिकरणम् १६। सूर्यसंक्रांतिदिने च विशेषतः पूजानास्नदानादि १७। फाल्गुनकृष्णचतुर्दश्यां च शिवरात्रौ रात्रिजागरणादि १८। रेवंतपंथदेवतयोः पूजनं च १९। माद्रपदसितेतरपक्षे च वत्सद्वादशीविधानं २०। क्षेत्रकृषिप्रारंभे च सीताया हलदेवतायाः पूजनम् २१। शुक्लसप्तम्यां वैद्यनाथादेर्देवस्य सप्तम्याश्च पूजनम् उपनामादिकरणं वनिताभिः सप्तसु प्रातिवेश्मिकादिसदनेषु कोरकाभ्रकणान् मार्गयित्वा तैरेव भोजनकरणम् २२। फाल्गुनशुक्लपंचम्यां च नागपूजनम् २३। पुत्रादिजन्मनि मातृशरावाणां चूडानामिकानां च मरणम् २४। आदित्यसोमवारयोरेकाशनप्रभृतितपोविधानं च २५।

मिथ्यादृष्टिगोत्रदेवतासमभ्यर्चन च २६। आश्विनचैत्रमाससबधिशुक्लपक्षनवदिनेषु च नागदेवतादिपूजनमुपवासादितपोविधान च २७। बुधाष्टम्यामग्निकारिकाकरण च २८। स्वर्णरूप्यरगितवस्त्रपरिधानदिने च सौनिणीरूपिणीरगिण्यादिदेवताविशेषानाश्रित्य विशेषपूजाविधान लभन च २९। माघमासे च घृतकवलवितरणम् ३०। भाद्रपदमासस्य सितेतरा कज्जलतृतीया सिता तु हरितालिका तयोश्च कज्जलीदेवतापूजनादि ३१। मृतकार्ये च जलाजलिदान तिलदर्भदान च ३२। श्रावणमासे च शुक्लचदनषष्ठीविधानम् ३३। गोपुच्छादौ च धात्वादिना हस्तककरणम् ३४। भाद्रपदमासे पुनररूपषष्ठीकरणम् ३५। माघशुक्लतृतीयाया च गौरीभक्त यद् योषितो गौरीममाराधनकृते तस्मिन् दिने षोडशनशानां भोजन ददति तद् गौरीभक्तम् ३६। सपत्नीपूर्वजपितृणा च प्रतिमानिर्मिति. ३७। उत्तरायणदिने च विशेषत' स्नानादिविधानम् ३८। भूतानां च शरावदानम् ३९। आश्विने च श्वेतगोमयतृतीयाविधानम् ४०। तथा वासुदेवस्य स्वापोत्थानैकादश्योस्तथा फाल्गुनशुक्लपक्षे आमलक्येकादश्यां तथा पाडवैकादश्या सर्वमासेषु चैकादश्यामुपवासादितपोविधानम् ४१। परतीर्थे च यात्रोपयाचितादिकरणम् ४२। श्राद्धमासिकषाण्मासिकसांवत्सरिकादीना च करणम् ४३। प्रपादान च ४४। पितुर्विवाहसामग्र्यसपत्तौ सुकृतलिप्सया स्वधनव्ययेन परकीयकन्याया' पाणिग्रहणकारणम् ४५। षष्ठ्यादितिथिष्वपञ्चादितिथिष्वऽकर्त्तन दध्यविलोडन च ४६। मृतकार्थे च जलघटदानम् ४७। मिथ्यादर्शनिसदनेषु च लभनकविश्राणनम् ४८। कुमारिकाभोजनदान च ४९। सुकृतकृते चैत्रमासे च चचरीवितरणम् ५०। वैशाखमासे च श्वेततृतीयादिवसेऽर्कचन लभनकादिदान च यद्यप्यऽस्मिन् दिने श्रीमद्युगादिदेवस्य सांवत्सरिकतपःपारणकमभूत्तथापि पितृतर्पणदिनमेतदिति लौकिकैः परिगृहीततरा-

देतस्मिन् दिवसे विशेषः कोऽपि न विधेयः पर्वदिनमेतदिति निश्चित्य ५१ । मृतकार्थे च पण्डविवाहविधानम् ५२ । ज्येष्ठिन्यभिधानायां च ज्येष्ठशुक्लत्रयोदश्यां सक्तुकादिदानम् ५३ । अमावास्यायां च जामातृप्रभृतीनां भोजनदानम् ५४ । धर्मार्थं च कूपादिखननम् ५५ । क्षेत्रादौ च गोचरवितरणम् ५६ । विवाहमहे च अन्ययात्रागमने मण्डिडनकम् ५७ । पितृणां निमित्तं च भोजनाद्धंतकारदानम् ५८ । काकमार्जारादीनां च पिंडिकाप्रदानम् ५९ । ‘अश्वत्थमेकं पिचुमंदमेकं, न्यग्रोधमेकं दश चिंचिणीश्च । कपित्थबिल्वामलकीत्रयं च, पंचाम्रवापी नरकं न पश्येत् ॥ १ ॥’ इत्यादिकुमतिकल्पितवाक्याकर्णनेन च पिप्पलनिंबादीनां वृक्षाणां रोपणम् ६० । भाद्रपदकृष्णचतुर्दश्यां च पवित्रकरणमनंतव्रतारूयम् ६१ । तालाचरब्राह्मणादीनां च कथाश्रवणम् ६२ । शृंगाग्रे वसते ब्रह्मा, शृंगमध्ये तु शंकरः । शृंगमूले भवेद् विष्णुः, सर्वदेवमयी हि गौः ॥ १ ॥’ इत्यादिकुदर्शनिवचनसमाकर्णनेन च गोभनपूजनम् ६३ । इंद्रजालदर्शनं च ६४ । धर्मार्थं च कृशानुप्रज्वालनम् ६५ । नटप्रेक्षणकस्य च वीक्षणम् ६६ । पदातियुद्धस्य च दर्शनम् । ६७ ॥ इत्युक्तं सप्तषष्टिभेदं लौकिकदेवगतमिथ्यात्वम् ।

अत्र लौकिकगुरुगतमिथ्यादर्शनभेदा दर्श्यंते तथाहि लौकिकगुरूणां ब्राह्मणतापसादीनां नमस्करणम् । तत्र ब्राह्मणाग्रे पीडण इति भणनं तापसाग्रे तु ओं नमः शिवायेत्युक्तिः ६८ । तथा मूलाश्लेषाजातेऽपत्ये गौतमदने विप्राह्वानं तदुक्तक्रियाकरणं च ६९ । तेषां ब्राह्मणादीनां च सविधे कथासमाकर्णनम् ७० । ब्राह्मणादिभ्यश्च सुकृतार्थितया भोजनवितरणम् ७१ । इत्युक्तं लौकिकगुरुगतमिथ्यात्वम् ।

अथ लोकोत्तरमिथ्यादर्शन निगद्यते। तत्र लोकोत्तरा आर्हतास्तेषु भव मिथ्यात्वमपि लोकोत्तरम्। तच्च द्विविध देवगत गुरुगत च। तत्र देवगत तद् यद् वीतरागेऽप्युपयाचितादिना रागाद्यारोपणम्। उक्त च 'लोगुत्तरदेवम्मि वि, लोइअदेवाण जाणि लिंगाणि। इच्छापरिग्गहाईणि, तेसिमारोवण मिच्छ॥१॥' लोकोत्तरगुरुगत तु तदवसेय यल्लोकोत्तरलिंगेष्वपि पार्श्वस्थादिषु गुरुत्वबुद्ध्या वदनादिविधानम्। अथवा लोकोत्तरदेवगतगुरुगतमिथ्यात्वे इमाभिश्चैत्यवदनकुलकगतगाथाभिर्विज्ञेये तथाहि 'एव लोइअमिच्छ, देवगय गुरुगय च परिहरिज्ज। लोउत्तरे विवज्जए, परतित्थिअसगहिअचिये॥१॥ जत्थ जिणमदिरम्मि नि, निसिप्पवेसोऽबलाण समणाण। वासो अ नदिबलिदाणन्हाणतदपइट्ठा य॥२॥' अबलाना श्राविकाणा प्रवेशः श्रमणाना च वासोऽस्थान 'तबोलाईआसायणाओ, जलकीलदेवयदोल। लोइअदेवगिहेसु व, वट्टइ असमजस एव॥३॥' लौकिक देवगृहेष्विव 'तत्थवि सम्मदिट्ठीण, सायर सम्मराकणपराण। उस्सुत्तवज्जगाण, कप्पइ सवसाण नो गमण॥४॥ जे लोगुत्तरलिंगा, लिंगिअदेहावि पुप्फतबोल। आहाकम्म सव्व, जल फल चेव सचित्त॥५॥ भुजति थीरासग, ववहार गघसगहे भूस। एगागित्तब्भमण, सच्छद चिट्ठिअ वयण॥६॥ चेइअमढाइ वास, वसहीसु वि निच्चमेव सठाण। गेअ निअचरणाणचावणमवि कणयकुसुमेहिं॥७॥ तिविह तिविहेणेअ, मिच्छत जेहिं वज्जिअ दूर। निच्छयओ ते सड्ढा, अन्ने उण नामओ चेव॥८॥' इति एतच्च चतुर्भेदमपि मिथ्यात्व यस्त्रिविध त्रिविधेन विवर्जयति स निष्कलकमलकरोति श्रीसम्यग्दर्शनरत्नम्। तत्र त्रिविध करणकारणानुमति-

मेदात्, त्रिविधेन मनोवाक्कायरूपेण कारणेन । इह चैवं भावना तथाहि 'एअं अणंतहुत्तं, मिच्छं मणसा न चिंतइ करेमि । संयमेव सो करेउ, अन्नेण कए व सुठुकयं ॥ १ ॥ एवं वाया न भणइ, करेमि अन्नं च न भणइ करेहि । अन्नकयं न य संसइ, न कुणइ सयमेव काएणं ॥ २ ॥ करसन्नभमुहखेवाइगइहिं न य कारवेइ अण्णेणं । अण्णकयं न पसंसइ, अण्णेण कइए य सुठुकयं ॥ ३ ॥' इति भावितं लेशतश्चतुर्विधत्वं मिथ्यात्वस्य ।

अथ तस्यैव पंचविधत्वं किंचिद् भाव्यते, तथाहि–आभिग्रहिक १ मनाभिग्रहिक २ माभिनिवेशिकं ३ सांशयिक ४ मनाभोगं ५ च । तेष्वाभिग्रहिकं कुदृष्टिदीक्षितानामस्मन्मतमेव प्रमाणं नान्यदित्यभिग्रहवतामवसेयं दीर्घतरसंसारिणाम् १ । अनाभिग्रहिकं तु कुदर्शन्यदीक्षितानां नरतिरश्चामसंप्राप्तसम्यग्दर्शनानां सर्वेऽपि देवगुरवो नमस्याः सर्वोऽपि धर्मः कर्त्तव्य इत्यनभिग्रहवतां निज्ञेयम् २ । आभिनिवेशिकं तु संप्राप्तश्रीमदार्हतमतानां केनापि यथास्थिते वस्तुतत्त्वे प्ररूपिते मति मत्सरादिना तमन्यथा व्याचक्षाणस्यावसेयम्; अथवाऽनाभोगेनोत्सूत्रे प्ररूपिते सति पश्चाज्ज्ञानेऽपि वस्तुतत्त्वे स्वभणितमेवाभिनिवेशेन समर्थयतो विज्ञेयम्; अथवा जानन् भावार्थमुत्सूत्रं प्ररूपयति निवारितोऽपि न तिष्ठति तस्याप्याभिनिवेशिकमवसेयं मिथ्यादर्शनम् ३ । सांशयिकं तु सूत्रेऽर्थे तदुभये वा शंकितः प्ररूपयति न चान्यं पृच्छति यत ईगवृपरिच्छदः कथमन्यजनं पृच्छामि यतः पृच्छ्यमाने ज्ञास्यत्ययं गर्देश नैतद् वस्तुतत्त्वं वेत्तीति; अथवा ये मद्भक्तास्ते ज्ञास्यंति यदैतस्मादसौ प्रकर्षेण विद्वाँस्तेनानेनैतत्पार्श्वे पृच्छ्यतेऽतोऽस्मादसौ वरतर इति मद्भक्ता मां परित्यज्यैतत्पूजनं विधास्यंतीत्यन्यं जनं न पृच्छति तस्य सांशयिकं मिथ्यात्वमवसेयम् ४ । अनाभोगं त्वेकेंद्रियादीनां तन्मनां यतोऽनाभोगेनाज्ञानरूपेणैकेंद्रियादय-

स्तत्वातत्त्वविचाराचतुरतया मिथ्यादर्शनिन एव सर्वकालम्; अथवा शुद्धमेव प्ररूपयिष्यामीति चिंतितेऽप्यनुपयोगादशुद्धे प्ररूपिते सत्यनाभोगमिथ्यादर्शनं समवेदु मिथ्यात्वनिमित्ततया ५।

एवमाभिग्रहिकादिभेदेन मिथ्यादर्शनस्य पचविधत्व पूर्वोक्तरीत्या च पचविधत्व यदुक्तं तत् स्थूलभावेन परमार्थतस्तु विपर्यास एव मिथ्यादर्शन, यदुक्त 'एव पुण पचविह मिच्छत्त थूलभावेण परमत्थओ विवज्जासो। सो पुण एव न मए मम पुव्वपुरिसेहिं वा कारिय एय जिणाययाग किं मम इत्थ पूआसक्काराइआयरेण; अहवा मया एय जिणबिंब कारिय मम पुव्वपुरिसेहिं वा इत्थ पूआइय निव्वत्तेमि किं मम परकीएसु अचायरेण एव च तस्स न सव्वण्णपचयापवित्ती, अण्णहा सव्वेसु बिंबेसु अरिह चेव वसिज्जइ सो अरहा जइ परकाओ ता पत्थरलेप्पपित्तलाइय अप्पणिज्जय न पुण पत्थराइए वदिज्जमाणेसु कम्मक्खओ किंतु तित्थयरगुण-पक्खवाएण अण्णहा सक्कराइबिंबेसु पाहाणाइसब्भावाओ तेसु वदिज्जमाणेसु कम्मक्खओ हुज्जा मच्छरेण वा परकारियचेइआलए विग्घमायरतस्स महामिच्छत्त न तस्स गठिभेओ वि सभाविज्जइ जे य पासत्थाइ-कुदेसणाए विमोहिआ सुविहिआण बाहाकरा भवति ते वि तहेव जे वा जाइणाइपक्खवाएण साहूण दाणाइसु पवट्ठति न गुणागुणचिंताए ते वि विवज्जासभायण जम्हा गुणा पूअणिज्जा ते चेव दाणाइसु पवट्टतेण निमित्त कज्जतु कि जाइनाइपभिईहिं जओ सजाईए निद्धम्मावि अत्थि नाईसु अ ता तेसिं दाण महाफल कह हुज्जा अह तेसिं गुणा अत्थि तहावि ते चिअ पवित्तिनिमित्त दाणाइसु कीरतु न किंचि

जाइसयणाइणा एयम्मि अ विवज्जासरूवे मिच्छत्ते सइ सुबहुंपि पढंतो अणाणी चेव नही विवरीयमइणो नाणं कज्जसाहगं ताओ अणाणं तं पएसु अहो ते सुइरदुक्करावि तवचरणकिरिआ न मुक्खसाहगा जम्हा सो जीवरक्खामुसावायाइवज्जणं करिंतोवि अ विरओ कहिज्जइ पंचमगुणठाणे देसविरई छट्ठगुणठाणे अ सव्वविरई न पढमगुणठाणे तस्स य अणंताणुबंधिपमुहा सोलसवि कसाया बज्झंति उईज्जंति अ तन्निमित्ताओ असुहाओ दीहठिईओ तिव्वाणुभागा पयडीओ बज्झंति,तासिं च उदएण नरयतिरिअकुमाणुसत्तकुदेवगइरूवो संसारो तन्निबंधणाणि अ दुक्खाणि पिट्ठओ अणुसज्जति एअं नाऊण भो ! भो ! महाणुभावा समत्तनाणचरणेसु जइअव्वं तेसु बहुमाणो अ कायव्वो ' इति भावितं किंचिन्मिथ्यात्वपंचविधत्वम् ।

एवं मिथ्या-दर्शनविवर्जनेन श्रीमत्सम्यग्दर्शनमाराधयद्भिर्निःशंकितत्वप्रभृतयो वसु(८)संख्येयाः समागोचरणीया आचाराः, कालाध्ययनप्रभृतयश्च तावन्मिता एव श्रुतसंवेदने। तेषु प्रथमं श्रुतज्ञानस्याष्टावाचारा विभाव्यंते, तथाहि–कालवेलाद्यकालास्वाध्यायानध्यायदिनं विवर्जनेन स्वाध्यायविधानं कालाध्ययनाचारः १, जात्यादिमदनिंदनादिपरिहरणेन गुरूणां वंदनाद्युपचारकरणं विनयाचारः २, श्रुते गुरौ वाहारप्रबंधविशेषविधानं बहुमानाचारः ३, यथायोगं श्रुताध्ययनसमये निर्वृतिकाचाम्लादितपोविधानमुपधानाचारः ४, मया स्वयमेव चैतदधीतं श्रुतममुकस्य वा युगप्रधानस्य गुरोः सन्निधाने इत्याद्यभणनेन निजगुरोरनिह्नवनमनिह्नवाचारः ५, व्यज्यतेऽर्थोऽनेनेति व्यंजनं तच्च श्रीमदागमेयसूत्रं तच्च मात्राक्षरबिंदुभिरन्यूनाधिकमुच्चरतः प्राकृतं वा संस्कृतमकुर्वतो धम्मो मंगलमुक्किट्ठं, अहिंसा संजमो तवो इत्यादिस्थाने पुन्नं कल्ला-

तृतीय-
लहर्यां
द्वितीय-
स्तरङ्गः।

मिथ्यात्वं
ज्ञाना-
चारश्च।

णमुक्कोस, दयासजमनिज्जरेति पर्यायांतरैर्वा न त दधतो व्यजनाचार' ६, अर्थस्तु श्रीमदागमव्याख्यानरूपस्तस्य यथावस्थितस्य प्ररूपणमर्थाचार' ७, तथा धम्मो मगलमुक्किट्ठ, अहिंसा गिरिमित्थए । देवा वि तस्स नमस्सति, जस्स धम्मे सया मती ॥ १ ॥ इत्यादिवत् सूत्रार्थोभयस्याऽन्यथाऽविधान तदुभयाचारः ८, अतएव च वसु(८)मिता आचारा वैपरीत्येन ज्ञानातिचाराः स्युः । एतेष्वय महीयानतिचारो यत् सूत्रार्थयोरुभयोरपि नाशन यतस्तन्नाशे चारित्रनाशः स्यात्तन्नाशे च निर्वाणाभावस्तदभावे च दीक्षादिवैयर्थ्यं स्यादिति । अकालास्वाध्यायिकादिस्वरूप तु श्रीमदावश्यकनिर्युक्तेर वसेय बहुविस्तरत्वेन ग्रथगौरवभयादत्र तस्याप्रपचनादित्युक्ता अष्टौ सविपक्षा ज्ञानाचारा. ।

अथ दर्शनाचारस्वरूप किंचित् प्ररूप्यते । तथा निशकितत्वनिराकाक्षत्वप्रभृतयोऽष्टौ भवेयुराचाराः श्रीमत्सम्यग्दर्शने । तेषु देशसर्वभेदायाः शकायाः परिहरण निश्शकितत्वाचारः, तत्र देशशका त्विय यत्तुल्येऽपि जीवत्वे एके भव्या अपरे पुनरभव्या इत्येतत् कथ जाघटीत्यादिका सर्वतस्तु प्राकृतभाषानिबद्धोऽय सिद्धांतः किं सर्वज्ञप्रणीत उत केनापि निपुणमतिना नरांतरेण परिकल्पित इत्यादिका परिज्ञेया १, देशसर्वभेदाया आकांक्षाया विवर्जन निराकांक्षत्वाचार', तत्र देशतस्त्वाकांक्षे कस्य कस्यचित् कुतीर्थिकमतस्य दयादिगुणलेशदर्शनादाकांक्षणेन विज्ञेया सर्वतस्तु सर्वेषां सुगतसांख्यादिदर्शनानामाकांक्षणतः २, तथा श्रीमदर्हदुपदिष्टानुष्ठानफल प्रति निस्सशयत्व स्वरूपस्तृतीयो निर्विचिकित्सत्वस्वरूप आचारः, अथवा विदक् ज्ञाने विद् विदतीति क्विपि तल्लोपे विद. साधवास्तेषां मलाविलदेहादिजुगुप्साविवर्जनतो निर्विजुगुप्सात्वस्वरूपो वाऽत्रसेयः ३, तथा मूढदृष्टित्व द्विधा देशतः सर्वतश्च तत्र देशत' परतीर्थिकानां बालतपो विद्यामत्राद्यतिशयान् नृपत्वादिनिर्मितां तत्

पूजां वा निरीक्ष्य तदागमात् वा निशम्य स्तोकामतिव्यामोहान् मूढा स्वभावाच्चलिता दृष्टिः सम्यग्दर्शनलक्षणा यस्य स देशमूढदृष्टिस्तद्भावो देशमूढदृष्टित्वं सर्वतस्तु सर्वथा मूढा स्वभावाच्चलिता दृष्टिः सम्यग्दर्शनलक्षणा यस्य सर्वमूढदृष्टिस्तद्भावः सर्वमूढदृष्टित्वम्, उभयथापि मूढदृष्टित्वस्य विवर्जनममूढदृष्टित्वाचारः ४, तथोपबृंहा प्रशंसा सा च द्विविधविधा प्रशस्ताऽप्रशस्ता च तत्र ज्ञानदर्शनतपःसंयमवृत्युद्युतानां समानधर्मिकाणां साध्वादीनां तत्तद्गुणप्रशंसनेन तदुत्साहवृद्धेर्निबंधनं प्रशस्ता यदुक्तं 'खमणे वेयावच्चे, विणए सज्झायमाइसु। उज्जुत्तं जातं पसंसए सेहा उववूहणा विणओ ॥ १ ॥' मिथ्यादृशां तु शाक्यचरकादीनामप्रशस्ता अनयोश्च प्रशस्ताऽप्रशस्तयोः प्रशंसयोः करणमकरणं चोपबृंहाचारः ५, तथा स्थिरीकरणं तु द्विविधं प्रशस्तमप्रशस्तं च तत्र प्रशस्तसंयमतपोवैयावृत्त्यादिषु सीदतां समानधर्मिकसाध्वादीनां यथार्होपष्टंभदानेन स्थिरताहेतुः, अप्रशस्तं त्वसंयमविषयं तदवसेयम्, अनयोश्च प्रशस्ताऽप्रशस्तयोः स्थिरीकरणयोः करणमकरणं च स्थिरीकरणाचारः ६, वात्सल्यं तु द्विप्रकारं प्रशस्तमप्रशस्तं च तत्र प्रशस्तमाचार्यग्लानप्राघुर्णकतपस्विकाऽसहबालवृद्धादीनां भक्तपानोपध्यादिसंपादनेन समाधिविधानरूपं यदुक्तं 'साहम्मिअवच्छल्लं, आहाराईसु होइ सव्वत्थ। आएसगुरुगिलाणे, तवस्सि बालाइसु विसेसो ॥ १ ॥' अप्रशस्तं तु पार्श्वस्थगृहस्थाद्युपष्टंभरूपं परिज्ञेयम्, अनयोश्च प्रशस्ताप्रशस्तयोर्वात्सल्ययोर्विधानमविधानं वात्सल्याचारः ७, प्रभाव्यते प्रकाश्यते प्रवचनमनयेति प्रभावना, तत्र यद्यपि प्रवचनं सनातनत्वेन तीर्थंकरप्रणीतत्वेन सुरासुरनमस्कृतत्वेन स्वयमेव दीप्यते तथापि दर्शनशुद्धिमभीप्सुर्यो येन गुणेन समधिकः स्यात् स तेन गुणेन श्रीमदर्हच्छासनं प्रभावयति भगवद्वज्रस्वाम्यादिवत्। यदुक्तं 'कामं सभावसिद्धं

तु, पवयण दिप्पए सय चेव । तहवि अ जो जेण हिओ, सो तेण पभावए त तु ॥१॥' ते च प्रावचनिकप्रभृतयोऽतिशेषितर्द्धिप्रभृतयो चाष्टौ प्रवचनप्रभावकाः पूर्वं व्याख्याता अस्मिन्नेव तरगे इति न व्याख्यायन्ते, इय चाष्टविधप्रभावकविहिता श्रीमदर्हत्प्रवचनविषया प्रभावना प्रशस्ता कुप्रावचनिकविषया त्वप्रशस्तेति द्विविधा विधेया, अनयोश्च प्रशस्ताप्रशस्तयोः प्रभावनयोर्विधानमविधान च प्रभावनाचारः ८, एत एव च विपर्ययेन दर्शनातिचाराः भवेयुर्वसु( ८ )सख्येयाः । इत्युक्ता अष्टौ सविपक्षा दर्शनाचाराः । एवमष्टविधाचाराचरणेन चारुतां प्रापिते श्रीमत्श्रुतसवेदने श्रीमत्सम्यग्दर्शने च प्रयत्नो विधेयः सर्वोद्यमेन महानदपदमिच्छुभिर्भव्यप्राणिभिः । यतो ज्ञानेनैव विज्ञायते कर्त्तव्यमकर्त्तव्य हितमहित हेयमुपादेय च यदुक्त ' नाणेण वि अ नज्जइ, करणिज्ज तह य वज्जणिज्ज च । नाणी जाणइ काउ, कज्जमकज्ज च वज्जेउ ॥ १ ॥ जसकित्तिकर नाण, गुणसयसपायग जए नाण । आणा वि जिणाणेसा, पढम नाण तओ चरण ॥ २ ॥' इति । तथाऽबहुश्रुताद् बहुश्रुतस्य निर्जराप्यधिकतरा प्रोक्ता यदुक्त ' छट्ठट्ठमदसमदुवालसेहि अबहुस्सुअस्स जा सोही । इत्तो अ अणेगगुणा, सोही जिमिअनाणिस्स ॥ १ ॥' तथाऽबहुश्रुतः सन् श्रीमदर्हदुपदिष्टानुष्ठाने प्रयत्न विदधानोऽपि कृत्वाप्यपराधशतानि न जानाति, यदुक्त श्रीमदुपदेशमालाया सर्वोपदेशविशालायां श्रीधर्मदासगणिपादैः ' अबहुस्सुओ तवस्सी, विहरिउकामो आजाणिऊण पह । अवराहपयसयाइ, काऊण वि जो न याणेइ ॥ ४१२ ॥ देसियराइयसोहिय, वयाइयारे य जो न याणेइ । अविसुद्धस्स न वड्ढइ, गुणसेढी तत्तिया ठाइ ॥ ४१३ ॥ ( युग्मम् ) अप्पागमो किलिस्सइ, जइवि करेइ अइदुक्कर तु तवं । सुदरबुद्धीइ-

कयं, बहुयं पि न सुंदरं होई ॥ ४१४ ॥ अपरिच्छियसुयनिहसस्स केवलमभिन्नसुत्तचारिस्स । सव्वुज्जमेण विकयं, अन्नाणतवे बहुं पडई ॥ ४१५ ॥ जह दाइयम्मि वि पंहे, तस्स वि सेसे पहस्सऽयाणंतो । पहिओ किलिस्सइ च्चिय, तह लिंगायारसुयमित्तो ॥ ४१६ ॥ कप्पाकप्पं एसण-मणेसणं चरणकरण सेहविहिं । पायच्छित्तविहिंऽपि य, दव्वाइ गुणेसु अ समग्गं ॥ ४१७ ॥ पव्वावणविहिमुट्ठा-वणं च अज्जाविहिं निरवसेसं । उस्सग्गववायविहिं, अयाणमाणो कहं जयउ ॥ ४१८ ॥' इत्यतो हेतोः स्वल्पायामपि प्रज्ञायां न प्रहेयः प्रयत्नः । सर्वोद्यमेन सर्वदापि श्रुतसंवेदनाध्ययनविषये, यदुक्तं–' जइ वि हु दिवसेण पयं, धरेइ पक्खेण वा सिलोगद्धं । उज्जोअं मा मुंचसु, जइ इच्छसि सिक्खिउं नाणं ॥ १ ॥ पिच्छह च्छेरं, तह सीअलमउअएण वि कमेण । उदएण गिरी भिन्नो थोवथोवं वंहंतेण ॥ २ ॥' तथा 'यथा बिंदुनिपातेन, क्रमशः पूर्यते सरः । स हेतुः सर्वविद्यानां, धर्मस्य च धनस्य च ॥ १ ॥' तथा श्रुताध्ययनमपि सम्यगूदर्शनसमन्वितस्यैव ज्ञानतया परिणमति न तु मिथ्यादर्शनिनः यदुक्तं 'सदसदविसेसणाओ, भवहेउओ जइच्छिओवलंभाओ । नाणफलाभावाए, मिच्छदिट्ठिस्स अन्नाणं ॥ १ ॥' अतो हेतोः श्रुताध्ययनं कुर्वता सुकृतवता श्रीमदर्हत्प्रणिताशेषतत्त्वसम्यक्श्रद्धानरूपे श्रीमत्सम्यगूदर्शने मनःस्थिरीकरणं करणीयम् । यतः सम्यक्त्वे समासादिते नियमतोऽपार्द्धपुद्गलपरावर्त्तप्रमितैव भवस्थितिः, यदुक्तं ' अंतोमुहुत्तमित्तंपि, फासिअं हुज्ज जेहिं सम्मत्तं । तेसिं अवड्ढपुग्गल-परिअट्टो चेव संसारो ॥ १ ॥' एतस्य च सम्यग्दर्शनस्य यो दायकः सात्संप्रति कर्तुमशक्य एवं सर्वगुणसमन्वितैरपि प्रत्यु-

पकारकोटीसहस्रैर्यतो येन सम्यक्त्व वितीर्णं तेन महानन्दपदस्थितमनंतमप्रतिममप्रमेयमद्वैत सुखमपि प्रदत्त ततः शाश्वत सुखवितरणरूपोपकारेण सदृशः प्रत्युपकारः कोऽप्यन्यो न वेविद्यते विश्वत्रयेऽपि । यतो यस्योपकृतिः क्रियते स सुखी पोभवीति, सुख च मोक्षसुखसदृक्ष नेतरत् प्रवर्त्तते जगतीत्रितयेऽपि यदुक्त ' न वि अत्थि माणुसाण, तं सुक्ख नेव सव्वदेवाण । ज सिद्धाण सुक्ख, अव्वाबाह उवगयाण ॥ १ ॥ सिद्धस्स सुहो रासी, सव्वद्धा पिंडिओ जइ हविज्जा । सोणतवग्गभइओ, सव्वागासे न माइज्जा ॥ २ ॥ इद च सम्यग्दर्शन यः सम्यक् समाराधयति पचातिचारविवर्जिते वदाक्षा सुमनसोऽपि सम्यग्मुदितमानसाः कुर्वंति । यदुक्तम् ' अचलिअसम्मत्ताण, सुरा वि आणति भत्तीए । जह अमरदत्तभज्जइ, अहव निवविक्कमाईण ॥ १ ॥ अमरदत्तभार्यानृपविक्रमकथानके तु श्रीपुष्पमालावृत्तेरवसेये अत्र तु ग्रथगौरवादिभयात्तदप्रपचनम् । अस्मिश्च सम्यग्दर्शने समासादिते सति मनुजः समुत्पद्यते निर्जरेष्वेव यदि निजायुपश्चरमसमयावधि न विगतसम्यग्दर्शनपरिणतिरथवा सम्यक्त्वप्राप्तेः पूर्वं न निबद्धनैरयिकतिर्यगायुः, एव तिर्यगपि । देवस्तु चेदपतितसम्यक्त्वपरिणामः पूर्वं चाऽनिबद्धतिर्यगायुस्तदा प्राप्ते सति सम्यक्त्वे समुत्पद्यते मनुष्येष्वेव एव नैरयिकोऽपि । यदुक्त ' सम्मत्तम्मि उ लद्धे, विमाणवज्ज न बधए आउ । जइ न विगयसम्मत्तो, अहव न बद्धाउओ पुव्विं ॥ १ ॥ तथा सम्मत्तम्मि उ लद्धे, चइआइ नरयतिरिअदाराइ । दिव्वाणि माणुसाणि य, मुक्खसुहाइ सहीणाइ ॥ १ ॥' एतच्च मिथ्यात्वमहाहालाहलावेशनिर्नाशनमहामन्त्रसमान सम्यग्दर्शन यस्य मानसे सुस्थित तन्मनसि सम्यग्ज्ञानसुचरिते अपि सुस्थिते यदुक्त ' कुसमयसुईणमहण १, तस्माच्चेतश्चिंतितवितरण-

सुरमणिसमाने सम्यक्श्रद्धाने सर्वदैव मनःस्थिरीकारः करणीयः ॥

इति श्रीमत्तपागच्छालंकारहारभट्टारकघटाकोटीरकोटि--श्रीसोमजयसूरिशिष्यशिरोमणी--श्रीइंद्रनंदिसूरिराजविनेयाणु-सिद्धांतसारसंकलिते श्रीदर्शनरत्नरत्नाकरग्रंथे श्रीमदनुगमापरपर्याये-श्रीऋषभदेशनाऽभिधानायां तृतीयलहर्यां श्रीदर्शनसंबंधिलिंगत्रिकादित्रिषष्टिस्थानव्याख्याननामा द्वितीयस्तरंगः संपूर्णः समाप्तमिति ॥ २ ॥



# तृतीयलहर्यां तृतीयस्तरङ्गः ॥

अथैतस्यामेव तृतीयलहर्यां तृतीयस्तरंगः प्रस्तूयते। तत्र प्रथमद्वितीयतरंगयोः संवेदनदर्शनाधिकारः संसारापारकांतारपरिभ्रमणपरिखिन्नमनोवृत्तीनां भव्यजंतूनां देशितो दिग्मात्रदर्शनतः। ते च सम्यग्ज्ञानसम्यग्दर्शने सुचरणसमाचरणं विना नैवापवर्गरूपपारमार्थिकफलसाधके भवतो जातुचिदतो हेतोरेतस्मिँस्तरंगे तत्त्वकापि कायिकवाचिकमानसिकाऽनेकदुःखावलीज्वालामालासमाकुलमहाभैरवभवदवहुतवहनिर्वापणं प्रथमपयोधरासारप्रकारश्चारित्राधिकारः प्ररूप्यते। यतः सम्यग्ज्ञानश्रद्धानवानपि पुमाँश्चारित्रपवित्रितगात्र एव समवाप्नोति मनोऽभीप्सितमनंतसुखनिधानं निर्वृत्तिस्थानं नान्यथा। यथा बुभुक्षाक्षामकुक्षिः संविदानोऽपि परमान्न–समास्वादनतः क्षुदपगमं तदभिलाषवानपि तदाऽऽस्वादनत एव समवाप्नोति तत्पीडाप्रशमसमुत्थपरमानंदं न तु तदशनविषयप्रमत्तमनोवृत्तिः। उक्तं च 'क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम्। यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥ १ ॥' तस्मात् सम्यग्ज्ञानश्रद्धानसमन्वितेन तनूमता सर्वशक्त्या प्रयत्नो विधेयश्चारित्राराधनविषये। तच्च समितिपंचकगुप्तित्रिकपरिपालनरूपं परिज्ञेयं तेन तत्स्वरूपं किंचित् प्रपंच्यते।

तथाहि ईर्याभाषैषणादाननिक्षेपापारिष्ठापनिकारूपाः पंचसमितयो विज्ञेयाः। तत्र ईरणमीर्या सैव समितिः ईर्यासमितिः सा चालंबन १ काल २ मार्ग ३ यतना ४ लक्षणैश्चतुर्भिः स्थानैः परिशुद्धं पर्यटता सम्यगाराधिता भवति। तेष्वालंबनानि ज्ञानदर्शनचारित्ररूपाणि परिज्ञेयानीर्याविषये ॥ १ ॥ कालस्त्वीर्यायां दिवसलक्षण एवोत्सर्गतः प्रकीर्त्तितः श्रीमदार्हतसमये,

यामिन्यां ह्यचक्षुर्विषयभावेन पुष्टालंबनं विना गमनस्य श्रीमदागमे निषिद्धत्वात् । यदुक्तं श्रीदशवैकालिके 'उदउल्लं बीअसंसत्तं, पाणा निव्वडिआ महिँ दिआ । ताइं विवज्जित्ता राओ तत्थ कहं चरे ॥ १ ॥' तस्माद्दिवस एव पर्यटनीयं २ । मार्गस्त्वीर्याया उत्पथविवर्जनेन सुपथस्वरूप एव विज्ञेयः, उत्पथे हि पर्यटतः संयतस्य संयमात्मविराधनादयो दोषा भवेयुः ३ । यतना तु चतूरूपा परिज्ञेया पर्यटने द्रव्यं १ क्षेत्र २ काल ३ भावरूपाः ४ । तत्र द्रव्यतश्चक्षुषा प्रेक्षेत जन्तूँस्त्रसस्थावरभेदभिन्नान् संयमरक्षाकृते आत्मत्राणकृते तु गर्त्ताकंटकादिकम् १ । क्षेत्रतस्तु युगमात्रमेव क्षेत्रं प्रेक्षेत यतोऽतिदूरचक्षुःपाते हि सूक्ष्मास्तिर्यगायाता जंतवो न वीक्षंते अत्यासन्ननयननिवेशने तु निरीक्ष्यापि प्राणिनं दुःखेन कर्तुं शक्यं चरणनिर्वर्त्तनम् उक्तं च श्रीमदोघनिर्युक्तौ 'पथं तु वज्जमाणो, जुगंतरं चक्खुणा य पडिलेहे । अइदूरचक्खुवाए सुहुमतिरिच्छागय न पेहे ॥ १ ॥ अच्चासन्ननिरोहे, दुक्खं दट्ठुंपि पायसंहरणं । छक्कायविउरमणं, सरीरं तह भत्तपाणे अ ॥ २ ॥' कालतस्तु यावंतं समयं व्रजति तावदालोकयेच्चलनायनम् ३ । भावतस्तु वर्जयित्वा शब्दरूपादिपञ्चेन्द्रियविषयां चित्तप्रवृत्तिं विहाय च पंचविधस्वाध्यायविधानं सावधानतया विनिहितेर्याविषयमनस्सुष्ठुव्यापारः पर्यटति यतिरयते । उक्तं च चतुर्विंशे श्रीमदुत्तराध्ययने 'दव्वाउ चक्खुणा पेहे, जुगमित्तं चरिवत्तओ । कालओ जाव रीइज्जा, उवउत्ते अ भावओ ॥ १ ॥ इंदिअत्थे विवज्जित्ता, सज्झायं चेव पंचहा । तस्सुत्तीतप्पुरक्कारे उववत्तेरियरिए ॥ २ ॥' अनुपयुक्तगमने हि संयमात्मविराधनादयोऽनेके दोषा यदुक्तं श्रीओघनिर्युक्तौ 'उड्डमुहो कहरत्तो, अवियक्खंतो विपक्खमाणो वा । वायरकाए वहए, तसेयरे संजमे दोसा ॥ १ ॥' अवियक्खंतोत्ति

पृष्ठतो निरूपयन्, विपक्खतोत्ति विविध सर्वासु दिक्षु पश्यन्, निरविक्खो वच्चतो, आवडिओ खाणुकटविसमेसु । पचणहइदियाण, अन्नयर सो विराहिज्जा ॥ २ ॥ भत्ते वा पाणे वा, आवडिवडियस्स भिन्नपाए वा । छक्का यत्तिओरमण, उड्डाहो अप्पणो हाणी ॥ ३ ॥' आपतितश्चासौ पतितश्च तस्य भग्ने सति पात्रके भक्ते पाने वा प्रोज्झिते षट्कायव्यपरोपणम्, उड्डाहश्च स्यादात्महानिश्चक्षुरादिबाधया कथ षट्कायविराधनेत्याह 'दहिघयतक्कपराम-विलब सत्थ तसेयराण भवे । खद्धम्मि अ जणवाओ, बहिफोडा ज च परिहाणी ॥ ४ ॥' कदाचिद्दध्यादीनि गृही तानि स्युस्तदा तानि त्रसानामितरेषां च पृथिव्यादीना शस्त्र भवति प्रचुरे च भक्ते लोकेनालोकिते सति जनापवादो बहिफोडत्ति बहुभक्षका एत इत्युड्डाह च भवेत् । आत्मनश्च या परितापादिका हानिः साऽपि सभवेत् । तथा पाय च मग्गमाणे, हविज्ज पथे विराहणा दुविहा । दुविहा य भवे तेणा, परिकम्मे सुत्तपरिहाणी ॥ ५ ॥' पात्र वाऽन्विपति सति ग्रामादौ भवेत् पथि द्विविधा विराधना सयमात्मविराधनारूपा द्विविधाश्च स्तेनाः लेप्येऽपि च पात्रे तत्-परिकर्मणि लग्नस्य सूत्रार्थयोः परिहानिर्भवतीति । तस्मात् पचविध-स्वाध्यायकरण-पचप्रकारकरणविषयचित्तप्रवृत्ति-चतुर्विध-विकथा-हास्यादिपरिहारपुरस्सर वरदत्तमुनिवत् सावधानमानसतया रीयेत यतिरीर्यायाम् । यथा तेन शचीपतिप्रशसितेन मार्गे तत्परीक्षार्थागतसुपर्वविकुर्वित-सूक्ष्मतमभक्किकादर्शनात् कृपापरीतचेतसा तत्सुरविकुर्वितकरिकरोल्लालनमपि निजतनु विषयनिर्ममनसा सोढ परमीर्याखडन न व्यधायि । एवमपरैरप्यनगारैर्न खडनीयेर्या वर्यतमश्रामणैस्तदनु पुनः स देवः क्षमयित्वा तमपराध सप्राप्तस्त्रिदशलोक इत्युक्त किंचिदीर्यासमितिस्वरूपम् ।

अथ भाषासमितिस्वरूपं किंचिदुच्यते, तथाहि–भाषणं भाषा सैव समितिर्भाषासमितिः । सा च क्रोध १ मान २ माया ३ लोभोपयुक्तता ४ हास्य ५ भय ६ मौखर्य ७ विकथा ८ रूपाणि वसु(८)संख्येयानि स्थानानि वर्जयित्वा निरवद्यां पूर्वं स्वमतिसूत्रादेशपर्यालोचितां स्तोकां समुत्पन्ने सति कार्ये प्रस्तावे वंदनावाचं सूत्रार्थविदा समाराधिता बोभवीति । यतः क्रोधोपयुक्ततया हि पिता तनयं प्रति कथयति यदयं न मत्तनूजन्मा । एवं क्रोधाध्मातचित्तवृत्तिना तनूमताऽसत्यकर्कशोक्तिकलहादीनि बहून्यपि सुकृतलोकविरुद्धानि विधीयंते, मंडुकिकाविराधकमासक्षपकवत् । यदुक्तं श्रीप्रश्नव्याकरणांगे ' कुद्धो चंडक्किअओ मणूसो अलिअं भणिज्ज पिसुणं भणिज्ज फरुसं भणिज्ज अलिअं पिसुणं फरुसं भणिज्ज कलहं करिज्ज वेरं करिज्ज विगहं करिज्ज कलहं वेरं विगहं करिज्ज सच्चं हणिज्ज सीलं हणिज्ज विणयं हणिज्ज सच्चं सीलं विणयं हणिज्ज वेसो भविज्ज वत्थुं भविज्ज गम्मो भविज्ज वेसो वत्थुं गम्मो भविज्ज एअं अन्नं च एवमाई भणिज्ज कोहग्गि–संपलित्तो तम्हा कोहो न सेवियव्वो । ' तस्माद् वाचं वदता सुकृतवता क्रोधः सर्वथैव विवर्जनीयः । एवं मानोऽपि, यतो मानमतंगजाधिरूढमानसः कथयति यन्न मया समं कोऽपि जात्या कुलेन वा बलेन वा रूपेण वा पांडित्येन वा तपसा वा लाभेन वा ऐश्वर्येण वा सवर्णः । स चैवं वदन्नात्मानं मेतार्यमरीच्यादिवत् प्रेत्य जात्यादिभिः करोति हीनतरम् । यदुक्तं श्रीउपदेशमालायां ' जाइकुलरूवबलसुअ–तवलाभिस्सरिय अट्ठमयमत्तो । एयाइं चिय बंधइ, असुहाइँ बहुं च संसारे ॥ ३३० ॥ जाईए उत्तमाए, कुले पहाणम्मि रूवमिस्सरियं । बलविज्जा य तवेण य, लाभमएणं च जो खिंसे ॥ ३३१ ॥ संसारमणवयग्गं, नीयठाणाइं पावमाणो य ।

भमइ अणत काल, तम्हा उ मए विवज्जिज्जा ॥ ३३२ ॥ (युग्मम्) सुट्ठुवि जई जयतो, जाइमयाईसु मज्जई जो उ। सो मेअज्जरिसि जहा, हरिएसबलुव्व परिहाई ॥ ३३३ ॥' श्रीपुष्पमालायामप्युक्त 'जाइकुलरूवबलसु-अतव-लाभिस्सिरिय अट्ठहा माणो। जाणिअपरमत्थेहिं, मुक्को ससारभूरूहिं ॥ १ ॥ अन्नयरमउम्मत्तो, पावइ लहुअत्तण सुगुरुओ वि। विबुहाण सोअणिज्जो, बालाण य होइ हसणिज्जो ॥ २ ॥ जइ नाणाइमओ वि हु, पडिसिद्धो अट्ठमाणमहणेहिं। तो सेसमयठाणा, परिहरिअव्वा पयत्तेण ॥ ३ ॥ दप्पविसपरममत, नाण जो तेण गव्वमुव्वहइ। सलिलाओ तस्स अग्गी, समुट्ठिओ मदपुन्नस्स ॥ ४ ॥' तथा विनाशस्य मूल दर्प एव प्रकीर्त्यते यदुक्त तत्रैव 'धम्मस्स दया मूल, खती मूल वयाण सयलाण। विणओ गुणाण मूल, दप्पो मूल विणासस्स ॥ २ ॥' तथा सप्रतिप्रभूतदोषपोषदुष्टे गुणलेशे सति को नामाऽवकाशः कटुतमविपाकस्याऽभिमानविधानस्य, उक्त च तत्रैव 'बहुदोससकुले गुण-लवम्मि को तुज्झ गव्विओ इहय। सोऊण विगयदोस, गुणनिवह पुव्वपुरिसाण ॥ १ ॥' तस्मादहकारः सर्वप्रकारैर्निराकरणीय एव धनयौवनादीनां विद्युत्झात्कार इव क्षणविनश्वरतया यदुक्त 'बुद्बुदफेनसमानो जीव-स्तदपि न विरमति लोकः क्लीवः। धनमदयौवनविद्यागर्वैः, कतिपयदिवसैर्यास्यति सर्वैः ॥ १ ॥' मान च सुवन्नात्मान निस्तारयति पतिरपारससाराकूपारतः, उक्त च 'निंदा मुच शमामृतेन हृदय, स्व सिंच मुच क्रुध, सतोष भज लोभमुत्सृज जने-ष्वात्मप्रशसां त्यज। माया वर्जय कर्म निर्मथ यशः, साधर्मिकेष्वऽर्जय, श्रेयो धारय हत वारय मद, स्व संसृतेस्तारय। १। तस्मा

न्मानाश्रितं वचनं न वक्तव्यमेव केवलरमारामापरिरंभसमुत्सुकितमनोवृत्तिभिः । २ । एवं विहितैहिकामुत्रिकसर्वजनाऽविश्वसनीयता तिर्यगाद्यावाप्तिरूपानेकप्रकारप्रत्यया मायाऽपि दूरत एव वर्जनीया । यतो मायया जनवंचनहेतवे कुत्राप्यऽपरिचितस्थाने गतस्तद्वेषं विधाय जनं प्रति वदति यदयं न मदीयस्तनयो न वाहमेतस्य जनयितेत्यादीनि बहून्यपि सत्येतराणि वचांसि प्रोच्यंते मायाविना तथा येन स्वमनिसि स्वत्रितैः प्रभूतैरसत्यवचनकपटघटनादिभिः परवंचनं विधीयते तेन नूनं स्वात्मैव दैवतशिवगतसुखेभ्यो वंचितः स्वयमात्मीयोत्तमांग एव हुतवहप्रज्वालननिर्दर्शनेनैहिकामुत्रिकहितहारणात् । यदुक्तं श्रीपुष्पमालायां 'जे मुद्धजणं परिवं-चयंति बहुअलिअकूडकवडेहिं । अमरनरसिवसुहाणं, अप्पा वि हु वंचिओ तेहिं ॥ १ ॥' तथा "जइ चाणीसुआइदुक्खं लद्धं इक्कसिकयाइ मायाए । तो ताण को विवागं, जाणइ जे माइणो निच्चं ॥ २ ॥' तथा यो मायां विरचय्य मुग्धजनं विप्रतारयति संग्रामत्रयांतर्वर्त्तिवनगहननिवासिकूटक्षपकवत्स्वोचयत्याजन्मा स्वकर्मनुन्नः । उक्तं च श्रीउपदेशमालायां । 'जो वि अ पाडेउणं, मायामोसेहिं खाइ मुद्धजणं । तिग्गममज्झवासी सो सोयइ कवडखवगुव्वं ॥ १ ॥' कपटक्षपकदृष्टांतश्चायं उज्जयिनीनगर्यामिघोरशिवनामा धूर्तब्राह्मणः । स च धूर्ततया जनपरिमोषणकृते उज्जयिनीं विहाय गतश्चर्मकारपल्लीं, मिलितश्च तत्र मलिम्लुचानाम् उक्ताश्च तेन ते यदहं परिव्राजकवेषं कुर्वन्नस्मि भवद्भिश्च श्लाघनीयोऽहं जनमध्ये यदयं महातपस्वीति यथाऽनायासेनैव जनान् मुष्णीमः । तैरपीष्टं वैद्येनोपदिष्टमिति नीत्या प्रतिश्रुतम् । तदत्र स ग्रामत्रयांतर्वर्त्तिविपिने विहितपरिव्राजकवेषः कपटक्षपकतया तस्थौ । तस्करैश्च जनमध्ये मासक्षपकोऽयमिति प्रशंसितः पूजयांचक्रुश्च, ते तं तदनु जनैरपि स निमंत्र्य सौनावा-

क्रोधमान-
मायातो
भाषा-
समिति-
व्याघातः ।

सेषु मोजितः पूजितश्च एष महातपस्वी महाज्ञानीति जनैः, स्तेनोक्त्या विज्ञाय निजविभवादिकथनपुरस्सर स सत्क्रियते स्म तत्पार्श्वे च जनैर्भाविलाभादिप्रश्नः क्रियते स्म । एव विश्वस्ते सति जने स तैः स्तेनैः सह सभूय मोषयामास सदनानि तेषां जनानाम् । अन्यदा च गुप्ततरस्थान स्थिते च विभवे तैस्तस्करैर्विज्ञाय विज्ञाय चौर्य्यमाणे सति जने तत्तस्करधरणाय सावधानीभूते सति तन्मध्यादेकश्चौरो धृत. केनचित् पृष्टश्च ताडनपुरस्सर ' किं भवानेक एव मुष्णाति नः सदनानि उतान्येऽपि केचन वेविद्यते भवत्सहायाः ? ।' एव च तलारक्षैस्तस्मिस्ताडनपुरस्सर पृच्छयमाने सति कथिताः सर्वेऽपि पाटच्चराः तलारक्षैश्च सर्वेऽपि ते विनाशिताः । परिव्राजकस्तु विप्रत्वेन न हतः किंतु तन्नयने उत्पाटिते । एवमसौ वेदनार्दितो महापातकीति जनैर्निंद्यमानो मयेदृश कस्मान्निर्मितमित्याजन्मशोचनपरो महादुःखभागिहैव समभवत् । एवमपरोऽपि यः कश्चिन्निकृत्या परवचनप्रकृतिः सोऽपि शोचयिष्यत्यत्रापि त्रपास्थानीभूतः, अमुत्र च मायाविना यानि दुःखानि तानि सर्वज्ञ विना केन सामस्त्येन वक्तु पार्यते । यतो गृहीतश्रामण्योऽपि मायानिर्मितितत्परतया किल्बिषिकां भावनां विधत्ते यदुक्त ' गूहइ आयसहाव, घायइ य गुणे परस्स सते वि । चोरोत्थसव्वसंका, गूढायारो वितहभासा ॥ १ ॥ ' ईदृशः कैल्बिषिकीं भावनां करोतीति शेषः, श्रीउत्तराध्ययनेऽप्युक्त ' नाणस्स केवलीणं, धम्मायरियस्स सघसाहूण । माई अवन्नवाई, किब्बिसिअ भावणं कुणइ ॥ १ ॥ तथा यत्र च सम्यक्श्रीमदर्हत्प्रणीतः सुकृतमार्गस्तत्र न निकृतिकृतिः । यदुक्त ' धम्मम्मि नत्थि माया, नय कवड आणुवत्तिभणिय वा । फुडपागडमकुडिल्ल, धम्मवयणमुज्जुय जाण ॥ ३९३ ॥ नवि धम्मस्स भडक्का, उक्कोडा वचणा व कवड वा । निच्छम्मो किर धम्मो, सदेवमणु-

आसुरे लोए ॥ ३९४ ॥' तस्मादत्रामुत्र च श्रेयोऽर्थिभिः प्राणिभिः सर्वथैव वर्जनीया माया कृतसकलश्रेयोऽन्तराया । एवं मायारहितमेव वचो वाच्यं श्रीमदर्हत्प्रवचनवेदिभिः ॥ ३ ॥ तथा सर्वानर्थमूलं कृतसुकृतिजनोत्तमांगशूलं विहितसर्वगुणक्षोभं लोभं दूरतः परिहरद्भिरेव वचनीयं वचनमायतो लोभाभिभूतचेतोवृत्तिभिरपि प्रोच्यंते प्रभूततमान्यलीकानि । यदुक्तं श्रीप्रश्नव्याकरणांगे ' लुद्धो लोलो भणिज्ज अलिअं खित्तस्स वत्थस्स व कएण, लुद्धो लोलो भणिज्ज अलिअं कित्तीए व लाभस्स व कएण, लुद्धो लोलो भणिज्ज अलिअं इड्डीए व सुक्खस्स व कएण, लुद्धो लोलो भणिज्ज अलिअं सिज्जाए व संथारगस्स व कवत्थस्स पत्तस्स व क०, कंवलस्स व पायपुंछणस्स व क०, सीसस्स सिस्सिणीए व कएण, लुद्धो लोलो भणिज्ज अलिअं अन्नेसु अ एवमाइसु बहुसु कारणसएसु, लुद्धो लोलो भणिज्ज अलिअं तम्हा लोभो न सेविअव्वो ।' इति अनेन च मोहमहामहिपतिसेनापतिना त्रिजगज्जिगीषुणा लोभेन कः को न निहतः । यदुक्तं ' को लोभेण न निहओ, कस्स न रमणीहिं भोलिअं हिअयं । को मच्चुणा न गहिओ, को गिद्धो नेव विसएहिं ॥ १ ॥' तथा कषायचतुष्केऽपि लोभसमानः कोऽप्यन्यः कषायो न वेविद्यते दुर्ज्ञेयतमः । उक्तं च ' पियविरहाउ न दुसहं, दारिद्दाओ परं दुहं नत्थि । लोभसमो न कसाओ, मरणसमा आवई नत्थि ॥ १ ॥' यथा यथा च लाभस्तथा लोभोऽप्यधिकतया वर्द्धते । उक्तं च ' जहा लाहो तहा लोहो, लाहा लोहो पवड्ढई । दोमासकयं कज्जं, कोडीए वि न निट्ठिअं ॥ १ ॥' ततो यथा महात्मना श्रीमत्कपिलकेवलिना लोभपराभूतस्तथाऽपरैरपि परमपदेच्छुभिस्सोऽभिभवनीयः । यस्तु तेनाभिभूयते स सुभूमसार्वभौमादिवद् दुरा-

पतरामपि समवाप्येमां मनुजजन्मादिसकलकैवल्यपदावाप्तिसामग्रीं तद्विफलिकारपुरस्सर प्रेत्य सपद्यते दुर्गतिगतदूरतदुःख निकेतनम्। लोभश्च पूर्व तनुतरोऽपि यथेप्सितसमवाप्तौ पुरः पुरः प्रभूततया प्रवर्द्धते शरावनत् उक्त च श्रीयोगशास्त्रे 'धनहीन' शतमेक, सहस्र शतवानपि। सहस्राधिपतिर्लक्ष, कोटिं लक्षेश्वरोऽपि च ॥ १९ ॥ कोटीश्वरो नरेन्द्रत्व, नरेन्द्रश्चक्रवर्तिताम्। चक्रवर्ती च देवत्व, देवोऽपीन्द्रत्वमिच्छति ॥ २० ॥ इन्द्रत्वेऽपि हि सम्प्राप्ते, यद्दच्छा न निवर्तते। मूले लघीयाँस्तल्लोभः, शराव इव वर्धते ॥ २१ ॥' तस्माद् यथोत्तरप्रवर्द्धमानतृष्णानिरोधे नैव विजीयते लोभमहाभटः प्रकटबलोद्भटः। उक्त च 'तृष्णा चेत् सपरित्यक्ता, को दरिद्रः क ईश्वरः ?। तस्याश्चेत् प्रसरो दत्तः, को दरिद्र' क ईश्वरः ?॥ १॥' तथा 'सतोषामृततृप्ताना, यत् सुख शातचेतसाम्। कुतस्तद्धनलुब्धाना-मितश्चेतश्च धावताम् ॥ २ ॥' तथा पुरः पुरस्तृष्णातिरेकसमुत्पद्यमानमनोरथशताना तनूमता कौतुस्कुत सभवेत् सर्वसुखनिधान परमार्थविधानम्। उक्त च 'आमृत्युतो नैव मनोरथाना-मतोऽस्ति विज्ञातमिद मयाऽद्य। मनोरथासक्तिपरस्य चित्त, न जायते वै परमार्थसगि ॥ १ ॥' तस्मान्मनोरथशतनिदानतृष्णातिरेक-निराकरणेन लोभश्चित्तक्षोभनिमित्तभूतो निराकरणीयोऽनर्थहेतुः। एव मापा मापमाणेन लोभः सर्वथैव विवर्जनीयो गरीयो दुःखहेतुः ४। तथाऽनुकृतमोहमहामहीपतिलास्यहास्यमपि परिहार्यमहार्यसुखकामुकैरकामुकभव्यप्राणिभिः। यतो हास्यपरतन्त्रमनोवृत्तिभिः पुम्भिरनेकान्यप्यलीकानि निगद्यन्ते। यदुक्त श्रीप्रश्नव्याकरणांगे 'अलियाइ असतगाइ जयति हासियत्ता, परपरिभवकारण च हास, परपरिवायप्पिय च हास, परपीलाकारण च हास, भेय-

विमुत्तिकारणं च हासं, अन्नुन्नजणियं च हुज्ज हासं, अन्नुन्नगमणं च हुज्ज हासं, कंदप्पाभिओगगमणं च हुज्ज हासं, आसुरियकिव्विसित्तं वा जणिज्ज हासं, तम्हा हासं न सेवियव्वं ।' तस्य परायत्तस्यांतर्वृत्तिभिश्च संप्राप्तान्यपि ज्ञानादीनि हार्यंते काजकशोधकक्षुल्लकवत् । त्यक्तसंगानां च संयतानां विशेषतो हास्यं निषिद्धमेव । उक्तं च उपदेशमालायां ' अट्टहासकेली-किलत्तणं हासखिड्डुजमगरुई । कंदप्पं उवहसणं, परस्स न करंति अणगारा ॥ ३१६ ॥ ' संयतश्चारित्ररतोऽपि अस्य विवशीकृतस्यांतः करोति कांदर्पिकां भावनाम् । उक्तं च श्रीप्रज्ञापनावृत्तौ ' कंदप्पे कुक्कुइए, दवसीले आविहासकरणे य । विम्हावितो अपरं, कंदप्पभावणं कुणइ ॥ १ ॥ कह कहकहसणं कंदप्पो अणिहुआय उल्लावा । कंदप्पकहाणं कंदप्पुवएस-संसा य ॥ २ ॥ ' भुमनयणवयणदसणछदेहि करवायकसामाईहिं । तं तं करेइ जह जह हसइ परो अत्तणा अहणं ॥ ३ ॥ वाया कुंकुइओ पुण, तं जंपइ जेण हस्सई लोगा । नाणाविहजीवरुत्ते, कुव्वइ मुहुत्तरए चेव ॥ ४ ॥ 'इत्यादि । तथा श्रीउत्तराध्ययनेऽप्युक्तं ' कंदप्पकुक्कुयाइं, तह सीलसहावहासविगहाहि । विम्हावितो अपरं, कंदप्पं भावणं कुणइ ॥ १ ॥ ' तस्माद् भाषासमितेन सम्यक्चारित्राराधनमिच्छता निर्मितानेकश्रमणगुणविनाशः सर्वथैव हासः परिहार्यः स्वकार्यसाधकेन ५ । तथा कृतसम्यग्यतिधर्माराधनसाहसक्षयभयमपि परिहरणीयं श्रमणेन भाषासमितिसमाराधकेन । यतो भीतिभीतैस्तनूमद्भिरनेकान्यपि वितथानि निगद्यन्ते । तथा भयभीतश्च भूतादिभिर्ग्रस्यते । तथा स्वयं भीतोऽन्यमपि भापयेत् । तथा भीतश्च क्षुत्पिपासादिपरीषहेभ्यः कंडरीकादिवत् स्वीकृतमपि चरणभारं परिहरेत् । तस्मान्न चेतोगोचरीचरीकरणीयं

भयमभयदानदायकैः षड्विधजीवनिकायनायकैर्निर्जितकुसुमसायकैः श्रमणपुगवैः सम्यक्परिरक्ष्यमाणस्वचरणरूपाऽप्रतिरूपविभवैः। उक्तं च श्रीप्रश्नव्याकरणांगे 'न भाइयव्वं भायं खु भयाअइति लहुअं भीओ अबिइज्ज मणूसो, भीओ भूएहिं व घिप्पिज्जा, भीओ अण्णं पि हु भेसिज्जा, भीओ तवसंजमं पि हु मुइज्जा, भीओ अ भरं न नित्थरिज्जा, सप्पुरिसनिसेवियं च मग्गं भीओ न समत्तो अणुचरिउ, तम्हा न भाइयव्वं भयस्स वा वाहिस्स वा रोगस्स वा जराए व मच्चुस्स व अन्नस्स व एवमाइअस्स।' इति तथा ये दुरंतदुरितमहारातिनिकरतिरस्करणकृते सिंहतया निष्क्रम्य सम्यक्साधुधर्माराधननिमित्तमभ्युद्यतास्तेषां कौतस्कुतः संभवेद् भीतेरवकाशः। उक्तं च श्रीउपदेशमालायां 'भयसंखोहविसाओ, मग्गविभेओ विभीसिआओ अ। परमग्गदरिसणाणि अ, दढधम्माणं कओ हुंति ॥ ३२० ॥' तस्माद् वाचं वदता सुकृतवता कृतसुचरिततिरस्कारं सप्तप्रकारमपि भयं परिहरणीयम्। तथा कृतयत्तज्जल्पनतत्परता मुखरताऽपि परित्याज्या प्राज्यासुखनिबंधनं बंधनमनिच्छता रागद्वेषरूपमप्रतिरूपं यतो मुखरतयोत्सूत्रप्ररूपणात्मस्तुतिकरणपरगर्हणकषायोदीरणप्रभृतयः प्रभूता अपि दोषाः प्रादुर्भवंति भवसंततिप्रवर्द्धकाः कुपथ्यसेवनादिवासहामयाः। किं बहुना ? मुखरतयाऽऽत्मीयगुरुणाऽपि सममसंबद्धं यत्तज्जल्पति जल्पाको दुर्विनेयः। एतानि पुनरुत्सूत्रप्ररूपणादीन्यनंतसंसारकांतारपरिभ्रमणादिनिदानतया संपनीपद्यते यदुक्तं 'उस्सुत्तभासगाणं० ॥ १ ॥ आत्मस्तुतिपरनिंदानिमित्तिश्च लघुतासंयमविकलतादिहेतवे संजायते यदुक्तं 'सुट्ठुवि गुणे धरंतो, पावइ लहुअत्तणं सुगुरुओ वि। परदोसकहानिरओ, उक्कारिसगरो अ सगुणेसु ॥ १ ॥' तथा 'सुट्ठुवि उज्जममाणं, पञ्चेव करिंति रित्तयं

समणं । अप्पथुई परनिंदा, जिब्भोवत्था कसाया य ॥ ११ ॥ परपरिवायमईओ, दूसइ वयणेहिं जेहिं जेहिं परं । ते ते पावइ दोसे, परपरिवाई इअ अपिच्छो ॥ १२ ॥ ' तथा ' आयरइ जइ अकज्जं, अन्नो किं तत्थ तुज्झ वि ताए । अप्पाणं चिअ चिंतसु, अज्झवि वसगं भवदुहाणं ॥ १ ॥ ' तथा ' लोओ परस्स दोसे, हत्थाहत्थिगुणा अ गिहंतो । अप्पाणमप्पणाच्चिअ, कुणइ सदोसं च सगुणं च ॥ २ ॥ ॥ ' कषायोदीरणं दुःखाऽऽनंत्यहेतुः संपद्यते । यतः कषायोपशांतिरेव श्रामण्यसारं तदुद्दीपनं च श्रमणतापगमहेतुस्तेन तदेव चिंतनीयं तदेव वक्तव्यं तदेव च कर्त्तव्यं येन कषायोपशमः संभवेत् । यदुक्तं तं वत्थुं मुत्तव्वं जं पइ उप्पज्जए कसायग्गी । तं वत्थुं घित्तव्वं जत्थोवसमो कसायाणं ॥ १ ॥ ' तथा ' एसो सो परमत्थो, एयं तत्तं तिलोअसारमिणं । सयलदुहकरणाणं, विणिगाहो जं कसायाणं ॥ २ ॥ ' मौखर्येण च स्वीयगुरुणापि सममसमंजसं यत्तज्जल्पकल्पनेन त्रैराशीकवन्निष्कास्यतेऽतेवासी सकलश्रीश्रमणसंघतः । उक्तं च विनयाध्ययने ' जहा मुणी पूइकन्नी, निक्कसिज्जइ सव्वसो । एवं दुस्सीलपडिणीए, मुहरो निक्कसिज्जई ॥ १ ॥ ' तथा योऽतीवमुखरतया यत्तज्जल्पनं विधत्ते स पापश्रमण इत्युच्यते यदुक्तं पापश्रमणीयाध्ययने ' बहुमाईए मुहरासद्धे लुद्धे अणिगाहे । असंविभागी अवियत्ते पावसमणत्ति वुच्चई ॥ १ ॥ तस्माद् भाषासमितेन वर्जनीयमेव मौखर्यमनार्यतानिदानं प्रधानं स्थानं प्राप्तुकामेन । तथाऽहर्निशं स्वाध्यायध्याननिरतेन सर्वविदां भक्तजनपदराजकथारूपा चतुःप्रकाराऽपि विकथा परिहार्य्या यतिसमाचार्या-राधनसावधानेन सम्यक्संयममर्यादावर्त्तिना । यतो विकथाप्रतिबद्धचित्तेन स्वस्वक्रियाकरणसमयः समतिक्रामन्नपि न

सवेद्यते, कालातिक्रमकरणे च महीयान् दोषो यदुक्त श्रीदशवैकालिके कालेण निक्खमे भिक्खू० ॥ १ ॥ अकाले चरसि भिक्खू० ॥ २ ॥ सइ काले चरे भिक्खू० ॥ ३ ॥ एव चेद् यतेः सौत्रक्रियाकलापतत्परस्यापि कालातिक्रम करणे गरीयान् दोषः सूत्रे प्रतिपादितस्तदा चतुर्विधविकथारूपप्रमादप्रमत्तस्वांतवृत्तेः स्वाध्यायध्यानप्रतिलेखनाभिक्षाचर्यादि समयसमतिक्रमे किं वाच्यम्। अन्यच्च निद्रादयः परे प्रमादा' प्रमादकर्तुरेवाहित विदधति, विकथाप्रमादस्तु तद्विधातुः परेषामपि तत्श्रवणप्रवणकृतचेतोवृत्तीनां स्वस्वक्रियाकलापविषयप्रमत्ततानिर्मितितोऽनतभवभ्रांतिरूपमहाहितविधाता। अपर च यो विकथाः करोति स तत्प्रत्यय बध्नाति दुष्कर्म कटुविपाकम्। यच्च विकथाविधानत. परेषां स्वध्यायाध्ययन-ध्यानदानानामतराय करोति तन्निमित्त च समर्जयति प्रभृतिककर्मद्वितय ज्ञानदर्शनावरणरूपम्। यदुक्त श्रीकर्मविपाके 'पडिणीअत्तणनिन्हव-उवघायपओसअतराए य। अच्चासायणयाए, आवरणदुग जिओ जयइ ॥ १ ॥' तस्मात् स्वस्वसमयसमुचितस्वाध्यायध्यानविनयवैयावृत्यादिकृत्यतत्परेण सुकृतार्थियतीश्वरेण सर्वथैव विहितानतभवप्रथा विकथा विवर्जनीया, सा च कामिनीकथादिभेदेन चतूरूपा। तत्र स्त्रीकथा जाति १, कुल २, रूप ३, नेपथ्य ४, भेदाच्चतुष्प्रकाराः, तत्र जातिः क्षत्रियविप्रादिरूपा सवित्रीपक्षरूपा वा तस्याश्च रागेण यद् वर्णन द्वेषेण च तद्दोषाविर्भाव नम्, तत्स्वरूपा जातिकथा विज्ञेया; यथैषा क्षत्रियाणी क्षत्रियाण्यां च समवति सत्यसौभाग्याविनयरूपसयमप्रभृतयो गुणविशेषाः। मातृपक्षमुद्दिश्य तु युक्ता एवैतस्यां शीलसौभाग्यादयो गुणविशेषा यत एतस्याः सवित्री शीलसौभाग्यादि-गुणोपेता, इय स्तुतिरूपा, हीलनरूपा निय यदेषा कारुज्ञातीया, कारुज्ञातीयायां च पुनस्यां कीदृग्विधा भवेयुर्विनयौदार्य-

धैर्यप्रभृतयः प्रशस्तगुणसंपत्तयः । जननीपक्षमाश्रित्य पुनरेतस्यां कौतस्कुती संभवति सच्चशीललवणिमादिगुणसंततिर्यत एतस्याः प्रसूतेस्तद्गुणविरहिता इत्यादिका जातिकथा १ । अथ कुलकथा कीर्त्यते तत्र कुलमुग्रभोगादिरूपं पितृपक्षरूपं वा तत्कथापि रागद्वेषाभ्यां स्तुतिनिंदनरूपा जातिकथावद् भावनीया २ । रूपकथा यथा अहो एतस्या वदनं शारदसंपूर्णपूर्णमासीसोमप्रतिमम् । अहो एतस्या लोचने प्रफुल्लनीलोत्पलतुले । अहो एतस्या अधरौ विद्रुमविभ्रमाडंबरविडंबिनौ । अहो एतस्या पयोधरौ विधुरितजात्यजातरूपकुंभौ । अहो एतस्याः करचरणरमा तामरसप्रभापराजयविधायिनीत्यादिका, एषा रागतः । द्वेषतस्तु धिगेतस्या मुखं निर्दग्धपिठरीतलतुल्यमित्यादिका स्वयमेव भावनीया ३ । नेपथ्यकथा यथा, अहो एतस्या कंचुकः कीदृशः शोभते नीलमणिनीलवर्णः । अहो एतस्या नानाभक्तिचित्रिता पटशाटिका देवदूष्यदूष्यताविधायिनीत्यादिका वसनमाश्रित्य । आभरणविषया तु अहो एतस्याः कनकमणिमयकुंडले तुलितशशिसूर्यमंडले । अहो एतस्याः प्रलंबमुक्ताप्रालंबस्तर्जयति शरत्समयसमुदितनक्षत्रनिकरमित्यादिका, इयं रागतः । द्वेषतस्तु धिगिमां जीर्णशीर्णवसनामित्यादिका स्वयमेव विज्ञेया ४ । इति किंचिद् भाविता चतुर्विधापि वनिताविकथा १ । अथ भक्तविकथा किंचिदुच्यते तथाहि आलाप १ निर्वापा २ रंभ ३ निष्ठान ४ भेदेन चतुष्प्रकारा भक्तविकथा । तत्रालापकथा यथा सामान्येन शाकतंदुलादिसारद्रव्यमेतावदेतस्मिन् सदने समेतीतिप्रभृतिका १ । निर्वापकथा तु शाकादिविविधभेदविषया २ । आरंभकथा तु छगलतित्तिरशूकरादिमांसादिगोचरा ३ । निष्ठानकथा त्वेतस्यावासे रूपकशतादिनिष्पन्ना रसवत्युपयुज्यत इत्यादिकाऽवसेया ४ । इति भाविता किंचिद् भक्तविकथा २ । देशविकथाऽपि च्छंद १ विधि २ विकल्प ३ नेपथ्य ४ भेदेन

विकथाया
भाषा-
समिति-
विकलता ।

श्रुति(४)मितभेदाः । तत्र देशच्छन्दकथा लाटानां जनानां मातुलसुता गम्येत्यादिका १ । देशविधिकथा तु भोजननिकेतन-परिणयनविध्यादिभेदेन नैकविधा २ । देशविकल्पकथा तु ग्रामनगरनिवेशस्य निष्पत्तिप्राकारवापीकूपादिकथारूपा परिज्ञेया ३ । देशनेपथ्यकथा तु वनितानरवेषपरिधानादिसनद्धा ४ । इति किंचिदुक्ता देशविकथा ३ । अथ नरनाथविकथा कथ्यते । सा च चतूरूपा नृपतिनिर्गम १ प्रवेश २ कोश ३ कोष्ठागार ४ भेदत. । तत्र नृपनिर्गमकथा यथा एवंविधविभूत्या विभ्राजमानो नृपतिरद्य निर्याति इत्यादिका १ । एव प्रवेशकथाऽपि भावनीया २ । कोशकथा त्वेतावान् कोशभांडागारः प्रवर्त्तते नृपतेरेतस्येत्यादिका ३ । कोष्ठागारकथाप्येवमेव ४ । एव विहिताऽनतससारकांतारपरिभ्रांतिरूपव्यथा विकथा चतुर्विधाऽपि वर्जनीया महानदपदपथिकभूतैः १ । एव क्रोधोपयुक्तताद्यष्टस्थानविवर्जनपूर्वमेव भाषणीया, सा च सत्या १ ऽसत्या २ सत्यामृषा ३ ऽसत्यामृषा ४ भेदेन चतुष्प्रकारा । तत्र जीव जीवमिति वदतः सत्या १ । अजीव जीवमिति प्ररूपयतस्त्वसत्या २ । धवाद्याकीर्णेऽपि कानने क्वचित् सहकारतरूनालोक्य सहकारकांतारमेवैतदिति वदतस्तु सत्यामृषा ३ । असत्यामृषा तु स्वाध्याय विधेहीति प्रभृतिकाऽवसेया ४ । एताश्चतस्रोऽपि भाषाः प्रवचनमालिन्यादिरक्षणप्रवणतया गुरुलाघवपर्यालोचनेन प्रवचनोड्डाहगोपननिमित्त सम्यक्सावधानतया भाषमाणः श्रमणः समाराधक एव, तत आयुक्तभाषणपरो मनोवाक्कायसयमविकलः सावद्यव्यापारतोऽनिवृत्तचेतोवृत्तिरप्रतिहताऽप्रत्याख्यातपापकर्मा सत्यादिभाषाचतुष्कमपि भाषमाणः साधुर्नाराधकः । उक्त च श्रीप्रज्ञापनोपांगे ' कति ण भते ! भासज्जा य पणत्ता । गोअमा ! चत्तारि भासज्जा य पणत्ता । सच्चमेअ भासज्जाय, बितिअ मोस भासज्जाय, तइअ सच्चामोस भासज्जाय, चउत्थ असच्चामोस-

भासज्जायं, इच्चेआइं चत्तारि भासज्जाइं भासमाणे किं आराहते विराहते? गो० इच्चेआइं चत्तारि भासज्जाइं आउत्तं भासमाणे आराहते नो विराहते, तेण परं असंजते अविरये अप्पडिहतअप्पच्चक्खायपावकम्मे सच्चं वा भासंतो असच्चामोसं वा भासं भासमाणो नो आराहते विराहते।' सुगमं नवरम्, आउत्तं भासमाणे इति–सम्यक्प्रवचनमालिन्यादिरक्षणपरतया भाषमाणस्तथाहि प्रवचनोड्डाहरक्षणादिनिमित्तं गुरुलाघवपर्यालोचनेन मृषाऽपि भाषमाणः साधुराधक एवेति। तेण परमित्यादि–तत आयुक्तभाषणात् परोऽसंयतो मनोवाक्कायसंयमविकलोऽविरतो विरमति स्म विरतो न विरतोऽविरतः सावद्यव्यापारादनिवृत्तिमना इत्यर्थः। अत एवाऽप्रतिहतं मिथ्यादुष्कृतदानप्रायश्चित्तप्रतिपत्त्यादिना न नाशितमतीतं तथा न प्रत्याख्यातं भूयोऽकरणतया न निषिद्धमनागतं पापकर्म येनासावप्रत्या० शेषं पाठसिद्धम्, अत्र यदसत्यासत्यामृषाभाषयोरपि भाष्यत्वं प्रोक्तं तदपवादविशेषमाश्रित्य। उत्सर्गतस्तु स्वपरहिता पराप्रीतिकरवाक्यविरहिता कृतसम्यक्श्रमणधर्मसमाराधनाऽनुत्पद्यमानत्रसेतरजंतुजातविराधना सत्याऽसत्यामृषा च भाषणीया। यतः सत्याऽपि भाषा याऽवक्तव्या या चाऽऽचार्यैरनाचीर्णा या च कठोरवचना या च जीवविराधनानिदानं सा न वक्तव्या। यदुक्तं श्रीदशवैकालिके भाषाध्ययने 'जा य सच्चा अवत्तव्वा सच्चामोसा य जा मुसा। जा य बुद्धेहिं नाइन्ना न तं भासिज्ज पन्नवं ॥ १ ॥ तथा 'तहेव फरुसा भासा, गुरुभूओवघाइणी। सच्चा वि सा न वत्तव्वा, जओ पावस्स आगमो ॥ २ ॥' अत्र च भाषाविचारे श्रीदशवैकालिकगतं भाषाध्ययनं समग्रमपि वाच्यम्, अत्र च भाषासमितौ संगतयतिरुदाहरणं यथा, शत्रुरुद्धे नगरे बहिर्निर्गतः स तैः सैन्यबलाबलादिपृष्टः सन् बहुं सुणेइ कन्नेहिं ॥ १ ॥

इत्याद्येव वदन् पाठग्रहिलोऽयमित्युदीर्य मुक्तः। एवं मया तेन सगतेन मुनिना चैरिसकटेऽपि भाषासमितिर्न खडिता। एवमन्यैरपि मुनिमत्तमैः सा न खडनीया। इत्युक्तं किंचिद् भाषासमितिस्वरूपम् ॥ २ ॥

अथ एषणासमितेः स्वरूपं किंचित् प्रपञ्च्यते। तथाहि–पिंडोपाश्रयवस्त्रपात्ररूपं चतुष्कमेषणाशुद्धमेव ग्राह्यम्। तत्र गवेषणैषणा ग्रहणैषणा परिभोगैषणा लक्षणास्तिस्रोऽप्येषणा विशोधयेन्निर्दोषिताविधानेन, पिण्डवसतिवस्त्रपात्रविषये तत्र गवेषणैषणायां षोडशोद्गमदोषान् षोडशोत्पादनादोषान् विशोधयेत्, ग्रहणैषणायां तु दशैषणादोषान्, परिभोगैषणायां तु सयोजनादिदोषपञ्चकम्। एतेषु प्रथमपिंडविषयाः षोडशोद्गमदोषाः प्रादुर्भाव्यते। तथाहि आधाकर्म १ देशिकं २ पूतिकर्म ३ मिश्रजातं ४ स्थापना ५ प्राभृतिका ६ प्रादुष्कारं ७ क्रीतं ८ प्रामित्यं ९ परिवर्तिता १० ऽभ्याहृतो ११ द्भिन्न १२ मालोपहृता १३ छेद्या १४ ऽनिसृष्टा १५ ऽध्यवपूरं १६ स्वरूपाः षोडशोद्गमदोषाः प्ररूपिताः श्रीमदार्हतसमये। एतेषु प्रथममाधाकर्मस्वरूपं किमप्युच्यते। तत्राधानमाधा दायकाध्यवसायरूपो विकल्पस्तया धिया विकल्पेन यतिनिमित्तमशनादीनां षड्जीवनिकायोपमर्दनेन यत् कर्म करणं तदाधाकर्म। अथ चैतस्यादिमदोषस्याधःकर्मात्मघ्नात्मकर्मरूपं नामांतरत्रितयमुच्यते। तत्रैतद्दोषदुष्टाऽशनादिभोजिनमनगारं सयमादधः करोति, असयमे पातयति, अथवाऽधो नरके नयत्येतत् कर्मेत्यधःकर्मेति कीर्त्यते। अथात्मघ्ननाम्नोऽर्थो निगद्यते, तथाहि यत्कर्मैतद्धन्ति विनाशयति चरित्रिणश्चरणात्मानमित्यात्मघ्नमित्युच्यते। अथात्मकर्मार्थः किंचिद् भाष्यते, तथाहि यत् कार्मिकभोजी भिक्षुरष्टावपि कर्माण्यधो नरके बध्नाति, प्रकृतिस्पृष्टतया प्रकरोति च स्थितिबद्धरूपतया चिनोति चानुभागनिद्धत्तरूपतया उपचिनोति च प्रदेशनिकाचनारूपतया। प्रकृत्यादिस्वरूपं च

मोदकनिदर्शनेन भावनीयम् । यथा प्रकृत्या कश्चिन्मोदको वातं हंति कश्चिच्च पित्तं कश्चिच्च श्लेष्माणम् । स्थितिस्तु कस्यचिद्दिनमेकं कस्यचिद्दिनद्वयं कस्यचिद्दिनत्रितयमित्यादिका । अनुभागस्तु रसस्वरूपः कस्यचिदेकगुणः कस्यचिद् द्विगुण इत्यादिकः । प्रदेशास्तु कस्यचिदेकप्रसृतिप्रमाणाः कस्यचिद् द्विप्र० इत्यादिका । एवं कर्मापि किंचिद् ज्ञानमावृणोति प्रकृतिमाश्रित्य किंचिद्दर्शनं किंचिच्च सुखदुःखे जनयतीत्यादि । स्थितिस्तु कस्यचिद् विंशत्यतरकोटाकोटीप्रमाणा कस्यचित्त्रिंशदतरकोटाकोटीप्रमाणा । अनुभागोऽपि शुभाशुभरूपो घात्यघातिरूपो वा कस्यचिदेकगुणो कस्यचिद् द्विगुण इत्यादिकः । प्रदेशास्तु कस्यचिदल्पा अल्पतराः, कस्यचिद् बहवो बहुतरा वा विज्ञेयाः पुद्गलस्कंधरूपाः । एवमाधाकर्मिकाशनादि भोक्ता यतिः षड्जीवनिकायव्यापादनस्वरूपं परकृतं कर्म यदात्मनः संबंधि करोति तद्भोजनतस्तस्मादात्मकर्मेति कीर्त्यते । उक्तं च श्रीपिंडनिर्युक्तौ ' आहाकम्मेण अहो, करेति जं हणइ पाणभूयाइं । जं तं आइयमाणो, परकम्मं अत्तणो कुणइ ॥ १ ॥' अस्मिन्नाधाकर्मनाम्नि दोपे नवद्वाराण्युच्यंते । तथाहि किमाधार्मिकं १ कस्य कृते कृतं च भवेत् २ कथं च स्यात् ३ कीदृशं च तद् भवेत् ४ के च दोषास्तत्परिभोगे ५ के च दोपास्तद्दायकस्य ६ कथं च तद्दोपशंकानिपेधाय पृच्छा विधीयते ७ का पुनरनेषणायां शंकाभावादशुद्धसमादानरूपा च्छलना ८ कथं च तद्दोषदुष्टाहारग्रहणेऽपि निर्दोषता ९ इति नवद्वाराणि । एतेषां नवद्वाराणां मध्ये प्रथममाद्यद्वारं व्याख्यायते । तथाहि—अशन १ पान २ खादिम ३ स्वादिम ४ रूपचतुर्भेदमाधाकर्म श्रीमदार्हतसमये कीर्त्यते । यतिनिमित्तं क्रियमाणं निष्ठानीतं च तत्र कृतनिष्ठितपदाभ्यां चत्वारो भंगा भवेयुस्तत्र साध्वर्थं कृतं साध्वर्थमेव च निष्ठितमित्येको भंगः १, साध्वर्थं कृतमन्यार्थं च निष्ठितमिति द्वितीयो भंगः २, अन्यार्थं कृतं साध्वर्थं च निष्ठि-

तमिति तृतीयो भगः ३, अन्यार्थं कृतमन्यार्थं च निष्ठितमिति तुरीयो भगः ४। एतेषु द्वितीयतुरीयौ भगौ शुद्धौ, इतरौ त्वशुद्धौ। अथ कृतनिष्ठितयोः स्वरूपं प्ररूप्यते। यत्तन्दुलादिप्रासुकीकृतं यच्च राद्धं मुद्गमाषादि तन्निष्ठितं तद्विपरीतं तु सर्वं कृतम्। अयमेवार्थः स्पष्टीक्रियते, तथाहि यतिनिमित्तमेव शाल्याद्यारोपणं तल्लवनमेव तावद् वाच्यं यावद् वारद्वयं तत् खडनम् एतत् सर्वं कृतमित्युच्यते, तृतीयवारं तु खडने त एव शाल्यादयस्तन्दुलीभूता निष्ठिताः स्युः। इदमशनमाश्रित्य प्रोक्तम्, एवं पानकाद्याहारेष्वपि वाच्यं तथाहि साधुनिमित्तं कूपादिखननं १ चिर्भिटिकादि २ हरीतक्याद्यारोपणादि ३ भावैः कृततरं विज्ञेयं पानकादीनां तेषामेव च निष्ठितत्वं प्रासुकीभवने विज्ञेयम्। अत्र निदर्शनं कस्मिंश्चिद् ग्रामे प्रायः कदशनमेवाश्नाति जनवृन्दं च गुरुप्रायोग्यभक्तलाभाभावतो यतयः सूरिं नानयति। अथ च तत्रैकः श्रावकस्तद्वदनोत्कण्ठितचित्तः समभूत्। अन्यदा केषांचित्साधूनां वर्षाकल्पयोग्यक्षेत्रदिदृक्षया तत्रागतानां तत् क्षेत्रं निरीक्ष्यानिच्छया गच्छतां तन्मध्यात्तेन श्राद्धेन ऋजुप्रकृतिर्यतिरेकः पृष्टः ' किमिति क्षेत्रमेतन्न रोचते भवताम् ?' स ऋजुतया प्राह ' गुरुयोग्यशाल्याद्यभावतः।' ततस्तेन काले शालिरुप्तो निष्पन्नश्च स प्रभूतः। अन्यदा मुनिषु समागतेषु स्वजनादयस्तेन तद्वितरणपुरस्सरं भणिताः। यदयं शालिर्युष्माभिर्मोक्तव्यो यतिभ्यश्च देयस्तैश्च तथा क्रियमाणे तदाधाकर्मदोषदुष्टं बाह्यलिंगैर्निज्ञाय ते यतयो न जगृहुः। एवं पानकाद्याहारेष्वपि श्रीमदार्हतसमयानुसारेण दृष्टांता भावनीयाः। इत्युक्तं किमाधाकर्मेति प्रथमद्वारम्।

अथ कस्य कृते कृतं तत् स्यादिति द्वितीयद्वारं प्ररूप्यते। तथाहि—समानधर्मेण चरतीति साधर्मिकः, स च प्रवचनलिंगाभ्यां यः स्यात्तस्य कृते कृतं भवत्याधाकर्म। तत्र प्रवचनं द्वादशांगीरूपं तदाधारभूतः संघोऽपि प्रवचनम्। लिंगं तु

रजोहरणमुखवस्त्रिकाद्यम्। ताभ्यां संघान्तर्वर्ती यतिजन एकादशप्रतिमास्थः श्रमणोपासको वा साधर्मिकोऽवसेयः। स च चतुर्द्धा, प्रवचनतः साधर्मिको न लिंगतः १, लिंगतो न प्रवचनतः २, प्रवचनतो लिंगतश्च ३, न प्रवचनतो न लिंगतः ४। तत्र प्रथमभंगे श्रमणोपासका १, द्वितीयभंगे तु संघबाह्या कृता निह्नवाः २, तृतीयभंगे तु संघान्तर्वर्त्तिनः सर्वेऽपि यतयः श्रमणोपासकाश्चैकादशप्रतिमास्थाः ३, तुरीयभंगे तु तीर्थकृतः प्रत्येकबुद्धाश्च विज्ञेयाः ४। एतेषु भङ्गेषु तृतीयभङ्गे न कल्पते, शेषभंगत्रये तु कल्पते शुद्धत्वात्। नन्वस्तु तीर्थकृतः प्रवचनलिंगातीतत्वं प्रत्येकबुद्धानां तु विशेषयतितुल्यानां तत् कथमिति चेदुच्यते ? नहि प्रत्येकबुद्धाः संघसमक्षमाचार्यादिपार्श्वे लिंगग्रहणं व्रतप्रतिपत्तिर्वा कुर्वंति, नापि च ग्रहणासेवनालक्षणां द्विविधां शिक्षां शिक्षंते कस्यचित् समीपे, किंतु पूर्वाधीतश्रुतबलेन स्वयमेव विज्ञाय यतिजनोचितमनुष्ठानमनुतिष्ठन्ति। लिंगं तु तेषां देवता ददाति, अतः संघे न तेषां लिंगादानात् संघान्तर्वर्त्तित्वाभावाच्च प्रवचनलिंगातीतत्वं तेषामवसेयम्। यत एव च तीर्थकृतः प्रवचनलिंगानीतास्तत एव तदर्थं देवैर्विरचिता समवसृतिर्यतीनामुपभोक्तुं कल्पते। तदर्थं कृतमशनाद्यपि च शेषयतिकृते च कृतं तीर्थकृतां कल्पते, प्रवचनलिंगोत्तीर्णत्वात्तेषाम्। तीर्थकरादिकृते तु कृतं तीर्थकरादीनामकल्पनीयम्। ननु यदि तीर्थपतिकृते कृतं तस्य न कल्पते तर्हि तदर्थं सुरविरचितसमवसरणं कथं तेनोपभुज्यते ? उच्यते तीर्थकरनामकर्मण एवमेव विपाकेन वेद्यमानत्वात्। नन्वेकादशप्रतिमाधरः श्राद्धवरः प्रवचनलिंगाभ्यां साधर्मिकः संभवति तर्हि तदर्थं कृतमशनादि कथमिव कल्पते यतिसत्तमानाम्। उच्यते गृहस्थत्वाद् यावज्जीविकलिंगधारित्वाच्च श्रुतस्य। प्रथमद्वितीयभंगयोस्तु भजनाऽपि। सा चैव एकादशप्रतिमास्थितश्रमणोपासकवर्जश्राद्धार्थं कृतं त्वशनादिकल्पं गृहस्थत्वाल्लिंगाभावाच्च।

तस्करादिमुषितलिंगसाधुकृते कृत तु न कल्पते भावतो यतित्वात्। द्वितीये त्वेव यदि लोके निह्नवा विदिता भवेयुस्तदा तदर्थं कृत कल्पते सघबाह्यकृतत्वात्। यदि न ज्ञातास्तदा न कल्पन्यव्यवहारेण सधांतर्वर्तित्वात्। अर्हद्बिंब-बल्याद्यर्थमपि कृत कल्पतेऽनशिष्टम्। ननु यद्यर्हदर्थं कृत कल्पते तर्हि तद्भवने निवासः किं न विधीयते? सत्य महाशातनादिदोषपोपसमवात्। तीर्थंकरास्तु श्रामण्यावसरे देवदूष्यमेक गृह्णति, तदनु पुनस्तदपगमे वसनविरहिताः। प्रत्येकबुद्धास्तु देवतार्पितलिंगा अलिंगा वा अवसेयाः। श्रुतमाश्रित्य तु जघन्यत एकादशांगिन उत्कर्षतस्तु भिन्नदश पूर्विण'। इत्युक्त कस्य कृते कृत तत् स्यादिति द्वितीयद्वार २।

अथ कथ तत् स्यादिति तृतीयद्वारप्ररूपणा। तथाहि प्रतिसेवना १ प्रतिश्रवणा २ सवासा ३ ऽनुमोदनाभिस्तद् ४ षोभवतीति। तत्र प्रतिसेवनाऽऽधाकर्मिकस्य परिभोगः। प्रतिश्रवणा तु तद्भोक्तुरनुज्ञा वितरणम् २। सवासस्तु तद्भोजिभिः सह वासः ३। अनुमोदना तु तद्भोक्तृप्रशसारूपा ४। एभिश्चतुर्भिः प्रकारैस्तज्जनितः कर्मबधः समवेदय समासार्थः। विस्तरार्थस्त्वय स्वय विहृत्यानीतमन्येन वा मुनिना वितीर्णमाधाकर्मिकमशनादि यद् यतिर्निशूकतयाऽश्नाति सा प्रतिसेवा। अत्र स्तेननिदर्शनम्। तथाहि केचन स्तेना' कुतोऽपि गोधनमपहृत्य निजग्रामसमीपे समाजग्मुस्तत्र च निराशकतया स्वयमारितगोमांसाशनपरायणानां तेषां केचित् पथिका मिलितास्ते च तैर्भोक्तु निमन्त्रितास्तेषां मध्ये कैश्चित्तद् भुक्त, कैश्चित्तु गोमांमशूकया नास्वादित पर परिवेषणादिसाहाय्यमकारि, अत्रांतरे तस्करगृहीत-गोवालनार्थं धावितनरैस्ते स्तेना मार्गगामिनो वयमिति वदतश्च पांथाः आपिताः प्रेतपतिनिकेतनम्। अत्र

चायमुपनयः-चौरप्रतिरूपाः स्वयमाधाकर्मप्रतिसेवकाः। पथिकतुल्यास्तु तन्निमंत्रिताधाकर्मभोजिनः। परिवेषककल्पास्तु तत्साहाय्यविधायिनः। यथावस्थानसंनिभं तु मनुष्यजन्म। तस्करगृहीतगोवालनार्थं धावितवीरसमानि तु कर्माणि। मृतिसमं तु दुर्गतिगमनमिति। अथ प्रतिश्रवणा प्रोच्यते। दाक्षिण्यसंबंधस्नेहभयादिना उपयोगकरणकाले 'लाभ' इति भणतो गुरोः संभवति सा। अयं भावः गोचरचर्याद्यर्थं व्रजंतो हि यतयः समुपात्तपात्राद्युपधयो गुरुं प्रति वदंति 'संदिशतोपयोगं कुर्मः' तदनु तदादेशेन तदर्थमष्टोच्छ्वासप्रमाणं तनूत्सर्गं निर्माय तदंते पंचनमस्कारोच्चारं पूर्वं ते 'संदिशते'ति भणंति तदा च श्रीगुरवो वदंति 'लाभे'ति, तदनु च नम्रांगास्तेऽपि भणंति 'कहं गिण्हामु'त्ति गुरवोऽपि च तदा वदंति 'जह गहिअं पुव्वसाहुहिं' इति तैरप्युच्यते 'आवस्सियाए जस्स य जोगो' इति। अस्मिंश्चोपयोगे कार्मिकभोजिना साधुना विधीयमाने गुरोर्लाभ इति भणतः संतश्चेत् प्रतिश्रवणे केऽप्यशुद्धभक्तालाभेन सुलद्धंति भणतो गुरोस्तामाहुः। अत्र च तत् सुलद्धंति भणनमनुमोदनामध्य एवांतर्भाविनमिति न विरोधः। अत्रोदाहरणं यथैको नृपतिसुतः साम्राज्योत्सुकितचेतोवृत्तिः सौववृद्धपितृवधोद्यतः स्वाभिप्रायं प्रच्छन्नतया योधानाह। तदा च तैः कैश्चिन्निगदितं 'तव सहाया वयमस्मिन् कार्ये' कैश्चिदुक्तं 'कुरुष्वे'ति केश्चित्तु मौनमेव व्यधायि। कैश्चित्तु नृपस्य निवेदितम्। नृपतिना तु प्रथमे त्रयः समं कुमारेण मारिताः। तुरीयास्तु सत्कृताः। अत्र योजना कुमारप्रतिरूपा आधाकर्मिकनिमंत्रकाः। तातवधतुल्यस्तु तत्परिभोगः। प्रथमभटत्रितयतुल्यास्तु तत्प्रतिश्रवणादिविधायिनः। तुरीययोधतुल्यास्तु तन्निषेधकाः। अथ संवासो विभाव्यते। तथाहि-संवासः कार्मिकभोजिभिः सममेकत्र निवासः। अत्र निदर्शनम्। एकस्यां पर्वतांतर्वर्त्तिन्यां तस्कराधिष्ठितायां पल्ल्यां प्रचुरा वणिग्-

त्रिप्रभृतयो वसति । अन्यदा तत्तस्करोपप्लवादेकेन नृपेण पल्लीं गृहीत्वा केचिच्चोरा विनाशिताः केचिच्च तदा नष्टाः । निरपराधा वयमिति वदतश्च तदा वणिक्प्रभृतयोऽपि निगृहीताः । अत्र दृष्टांतदार्ष्टांतिकमीलनम् । नृपनिभानि कर्माणि । पल्लीतुल्या तु वसतिः । चौरप्रतिरूपास्तु कार्मिकाशिनः । वणिगादिकल्पास्तु तद्भोजिसवासिनः । निग्रहनिभं तु दुर्गतिगमनमिति । अथाऽनुमोदना व्याख्यायते, तथाहि—कार्मिकभोजिना प्रशंसाऽनुमोदना कीर्त्यते । सा च धन्याः सुंदरभोजिनो भवत इत्यादिकाऽवसेया । अत्र कथानकम् । एको वणिक्कुमारः स्वरूपो युवतिलंपटो नृपांतःपुरीभिरीक्षांचक्रे । ततश्च परस्परानुरागयोगतो व्यवहृतिमिषेण स ताः सिषेवे । एवं गच्छति समये दुःखपर्यवसानतया दुष्कर्मणामन्यदा कदाचिद्‌वगतः स नृपतिना तत्तादृशदुःकर्मनिर्मितकर्मठः विज्ञाय महान्ययोत्पादनपुरस्सरं मारयित्वा स नृपतिना निजभटैः क्षेप्तो राजमार्गे । तदनु च स कैश्चिद्धन्यः कृतपुण्यश्चाय यदसावन्येषां दुर्गम्यामप्यदृश्यान् भागसौभाग्यसेवधिभूतान्नरपतिदारा भिषेव्यावश्य भाविनां दीर्घनिद्रामवापेत्यादिवचनप्रकारैः प्रशंसितः । कैश्चित्तु पापीयानयं यतः सर्वथैवान्ययोषितोऽनभिलषणीयाः, किं पुनर्निजनृपत्यंतःपुर्यः । अनेन च दुरात्मना जनापवादं लोकद्वयमप्यवगणय्य ता अपि विगोपिता इत्यादि वचोयुक्तिभिर्निंदितः । अथ च नृपतिप्राग्नियुक्तचरैस्तत् प्रशंसका विनाशितास्तन्निंदकाश्च पूजिता इति । अत्र चोपनयः । अंतःपुरप्रतिरूपमाधाकर्म वणिक्तनयतुल्यास्तु तद्भोजिनस्तत् प्रशंसकसदृशास्तु कार्मिकभोजिश्रमणपाशानुमोदकाः नृपनिभानि तु कर्माणि । रणसमं संसृतिपरिभ्रमणम् । इत्युक्तं प्रतिसेवनादिभेदचतुष्केनाधाकर्मस्वरूपम् ।

अथ तद्‌योगे विधेयमुच्यते । यतो हेतोश्चतुर्विधमप्याधाकर्म कर्मबंधनिबंधनं ततो हेतोः कार्मिकभोजिनो मुनीन् कर्म च

त्रिविधत्रिविधेन विवर्जयेत् । इत्युक्तं कथमितिद्वारम् ३ । अथ तुरीयं कीदृशं तदिति द्वारं व्याख्यायते । तथाहि–वांतोच्चार-
मदिरामांससदृशमेतत्तेनाधोकर्मलिप्तमपि पात्रं पूर्वशुष्कगोमयेनोन्मृष्टं तदनु वारत्रयं धौतं सत् कल्पते नान्यथा । अत्र सुराग्रहणं
शिष्टापेक्षया अन्यथा वांतादीन्यपि भक्षणादीनां भक्ष्यातिस्फुरतो वांतादिवत् सर्वथैवेदं वर्जनीयं यतिभिः । अत्रार्थे निदर्शनं–
यथा कश्चित् क्षत्रियो मिलनायातसहोदरकृते निजवनिताया मांसमर्पयामास । तच्च गृहव्यापारव्यापृतायास्तस्या मार्जारेण
भक्षितम् । तदभावेन च स्ववल्लभभीता सारमेयवान्तं मृतकमांसं समीक्ष्य तदेव संस्कृत्य तयोः परिवेषयामास, तौ च
गंधादिना तद् वांतं विज्ञाय तां च निर्भर्त्स्य नवीनं तदानीय भुक्तवंतौ । केचनाहुः सा केनाप्यतीसारेण व्युत्सृष्टं मांसं
संस्कृतवती । तच्च बालकेन पितुरुक्तं यथैतदभोज्यमेवमाधाकर्मापि । इत्युक्तं तुरीयं कीदृशमिति द्वारम् ४ । अथ के च दोषास्तत्
परिभोगे इति पंचमं द्वारमुच्यते । तथाहि आधाकर्मिकग्रहणेऽतिक्रम १ व्यतिक्रमा २ऽतीचारा ३ऽनाचार ४ रूपाश्चत्वारो
दोषा भवेयुस्तथाज्ञाभंगादयश्चत्वारः । तत्राधाकर्मामंत्रणेऽनिषिध्यमाने सत्यतिक्रमो मनाक्चारित्रोल्लंघनरूपो भवेत् १ तदा-
दानकृते चलनादौ विधीयमाने पूर्वस्मादधिकापराधरूपो व्यतिक्रमः स्यात् २ विहिते च तस्मिन् व्यतिक्रमादधिकोऽतिचारः
संपद्यते ३ । भक्षिते च तस्मिँस्तृतीयादप्यऽधिकतरोऽनाचाररूपस्तुरीयो दोषः संजायते ४ । आज्ञाभङ्गादयस्त्विमे दोषा
आज्ञाभंगो१ऽनवस्था२ मिथ्यात्वं ३ विराधना ४ । तत्राज्ञाभंगः श्रीसर्वज्ञवचनाऽतिक्रमात् १ । अनवस्था त्वेकेन गृहीतं तद्
दृष्ट्वाऽन्योऽपि तत् समादत्ते तं निरीक्ष्य पुनरन्य एवँ संजायते, अथवा येनैकशस्तत् समादत्तं स रसलांपट्यात् पुनः पुनस्तत्
समादत्ते इति २ । तथा मिथ्यात्वं च यथोक्ताऽकरणतः, उक्तं च ' जो जहवायं न कुणइ, मिच्छद्दिट्ठी तओ हु

को अन्नो । वुड्ढइ अ मिच्छत्त, परस्स सक जणेमाणो ॥ ५०४ ॥' ३ । विराधना स्वात्मसयमप्रवचनविराधनाभेदेन त्रिधा । तत्र गौरवात् प्रायः समवत्याधाकर्म तच्च प्रायः स्निग्धमधुर भवेत्, स्निग्धमधुरे च प्रभूते भक्षिते ज्वरविशुचिकादयो रोगाः समवेयुरित्यात्मविराधना । ज्वरादौ च समुत्पन्ने सूत्रार्थपौरुष्यकरणतः सूत्रार्थहानेर्ज्ञाननाशः स्यात्, आमये च समुत्पन्ने देहविह्वलतया चारित्रादिश्रद्धानत्रुटेर्दर्शनस्य विनाशः । प्रत्युपेक्षाद्यकरणे चिकित्सायां वा क्रियमाणायां पृथिव्यादि षट्कायविराधनासभवाच्च चारित्रस्य नाशः स्यात् । एव रत्नत्रयरूपस्य सर्वसयमस्य विराधना समवेदाधाकर्मिकाहाराभ्यवहारे । आधाकर्मिके च प्रभूते भक्षिते जठरादिव्यथायां समुत्पन्नायां विलापादिविधाने जनैस्तदाकर्णनाद् बहुभक्षमानयन्निजजठरमानमप्येतैर्न विज्ञायते इति जने निंदासमुत्पत्तेः प्रवचनविराधना स्यात् ४ । अथ कथचिदेतद् भुक्त्वा यो नालोचयति तस्य को दोषः ? उच्यते यो द्रव्ययतिरश्नाति जिननिषिद्ध कार्मिकमशनादि भुक्त्वा च तदतिक्रमेऽप्यमोचनपुरस्सर प्रायश्चित्तमप्रतिपद्य सकलत्रिकालविदाज्ञाभगविधायिनस्तस्य भवत्यनतससारकांतारपरिभ्रमणरूपो महादडः । यतो ग्रामाधिपतेरप्याज्ञाभगे प्राप्यन्ते वधवधादीन्यनेकविधानि दुःखानि किं पुनः त्रिभुवनपतेराज्ञातिक्रमे । इत्युक्त तदशने के दोषा इति पचमद्वार ५ ।

अथ के च दोषास्तद्दाने इति षष्ठ द्वारमुच्यते । तथाहि—आधाकर्मिकाशनादिदाने यतेश्चरितविघातः सजायते । ततः कारणाद् विवेकिभिरेतदुत्सर्गतो न देयम् । अपवादपदे तु क्वाप्यनिर्वाहादौ पात्रविशेषे वा तद्वितरणं भवेन्नेतरथा । यतः शुद्धान्नादिलाभनिर्वाहे सति द्वयोरपि दायकग्राहकयोस्तदहित ससृतिहेतुत्वात्, तदेव च दुर्भिक्षग्लानाद्यवस्थास्वनिर्वाहे सति हितमातुरनिदर्शनेन । यथा हि रोगिणोऽवस्थाविशेषतः पथ्यमपथ्य च स्यादन्नादि । एवमेतदपि । अथ पात्रविशेष-

माश्रित्योच्यते । तत्र सुपात्रे शुद्धान्नं १ सुपात्रेऽशुद्धान्नं २ कुपात्रे शुद्धान्नं ३ कुपात्रेऽशुद्धान ४ मिति चतुर्भंगी भवति । तत्र प्रथमो भंगः शुद्धो निर्जराहेतुत्वात् । द्वितीये तु भजना, शुद्धेर्विकल्पना बहुतरपापबंधनिबंधनत्वात् । शेषभंगद्वितयं त्वशुद्ध-मेकांततः पातकबंधनिबन्धनिबन्धनत्वात् । अयं चार्थः श्रीपंचमांगे प्रोक्तोऽस्ति । इत्युक्तं तद्दाने के दोषा इति षष्ठद्वारम् ६।

अथ कथं च तद्दोषाशंकानिषेधाय पृच्छा क्रियते इति सप्तमद्वारं व्याक्रियते। तथाहि देशस्य मालवप्रभृतेरनुचितशाल्योदनादिद्रव्यं चेद् बहुतरं वीक्ष्यते गृहे च धनमनुष्यादिस्तोकतर आदरश्च भक्तिसंभ्रमादिरूपः प्रचुरतरस्तदा कस्य कृते कृतमेतत् केन वा मनुजेन किं निमित्तं चेत्यादिप्रश्नो विधीयते। प्रश्ने कृतेऽपि चेद्दायकेन सत्यं नोच्यते तथापि शरीराकारादिबाह्य-लिंगैरवसीयते शुद्धमशुद्धं वेति इत्युक्तं पृच्छाद्वारम्।

अथाष्टमं छलनाद्वारं विव्रियते। तथाहि स्तोकं देयद्रव्यम् अथवा प्रभूतमपि तद्देशसमुचितम् इति हेतोः प्रायुक्तप्रकारेण प्रश्नो न व्यधायि। प्रश्ने कृतेऽपि विकृतिबहुलतया सत्यं नोक्तं गृहिभिः। तथाऽतिगूढचेतोऽभिप्रायैस्तैर्भक्तिसंभ्रमप्रभृतिकः कोऽप्यादरोऽपि न विरचितः। एवंविधछद्मनाऽनेषणीयं तैर्ग्राहितोऽपि यतिर्न श्लिष्यते तज्जनितकर्मणा चेत्समयानुसारेण त्रिविधैषणाविधिसावधानोऽशठभावश्च। इत्युक्तं छलनाद्वारम्।

अथैतद्दोषदुष्टाहारग्रहणेऽपि कथं निर्दोषतेति नवमद्वारं व्याख्यायते। तथाहि—आधाकर्मदोषदुष्टमेतदिति विज्ञायापि तदशनशीलः, शुद्धभोज्यपि बद्ध्यते तज्जन्यकर्मणा वेषधरानगारवत्। तथाहि कोऽपि द्रव्यलिंगी कस्मिंश्चिन्नगरे कस्यापि श्रमणोपासकस्य सदने संघभोज्यं समाकर्ण्य समासन्नग्रामात् समाजगाम तन्मंदिरे रसलंपटतया, तदा च तत्प्राणप्रिया

देहास्मै किं वा नेति तेनादिष्टा सति प्रत्यवोचत् ‘ यत् संघाय कृत तत्तु सर्वं दत्त, यत्तु युष्मदर्थं कृत तद् विद्यते ’ इति तयोक्ते तत्पतिः कथयांचभूव ‘ तर्हि मदीयभक्तादपि देही’त्युक्ते तया प्रतिलाभितयथेप्सितमिष्टान्नः स द्रव्ययतिः संघभक्तधिया भुजानस्तज्जनितकर्मणाऽशुद्धपरिणामतो बद्धः । एव शुद्धमप्यशुद्धधिया भुजानः श्लिष्यते दुष्कर्मणा । शुद्धगवेषणप्रवणस्तु शुद्धत्याधाकर्माऽपि भुजानः क्षपकवत् । तत्कथा चैव, यथा कस्मिंश्चिद्गच्छे साधुरेको निरीहस्तपस्वी मासक्षमणप्रांतेऽनेषणीय परिहरणानिमित्त पारणककृते गतवान् ग्रामांतरम् । अथ च तत्रैका श्राविकाऽत्रगततत्पारणका वितरणश्रद्धया सद्यः संपादितपरमान्ना सज्जीकृतघृतगुडा तद्दोपाछादनकृते बहिःक्षिप्तपायसोपलिप्तपत्रपुटका प्रतिदिनमेतदेव न रोचतेऽस्माकमिति कथनविषये शिक्षिततच्चद्भोजिबालका समागते सति स्वसदने तस्मिन् क्षपके सघृतगुड समुत्पाद्य क्षीरपूरितभाजनमस्तक परिवेषणच्छद्मना समुत्थिता । अथ च तेषु शिशुषु प्राग्दत्तशिक्षावशात्तदगृह्णत्सु तया स यतिर्जल्पितो ‘ भो महात्मन् ! यद्येतदीदृश तव रोचते तदा त्व गृहाणे ’ति तयोक्ते स समयोक्तपरीक्षया शुद्धमवधार्य तदशुद्धमपि शुद्धधिया विहृत्य भुजानोऽमूर्च्छितया शुद्धतयाध्यवसायतस्तद्भोजनांते पचमावबोधमवाप । एवमशुद्धाशनपरोऽपि शुद्धगवेषणपरोऽध्यवसाय विशुद्धितः शुद्ध्यति यतिरित्युक्त शुद्धाख्य नवमद्वार ॥ ९ ॥

अथ चालना ननु मुनिना यन्न कृत न च कारित न चानुमोदित किंतु स्वयमेव यतिभक्त्या गृहस्थेन विहित तच्चाधाकर्मदोषदुष्टमशनादि भुजानस्य मनोवचनतनुशुद्धस्य साधो' को दोष ? उच्यते चेदेव तथापि ज्ञात्वाऽऽधाकर्मदोषदुष्टमाहार गृह्णन् वर्द्धयति नित्याधाकर्मकरणलक्षण प्रसंग तस्य गृहस्थस्य, स्वय च तदनु निःशूकतया न मुचत्यप्राशुकमिति तस्माच्च-

रितार्थी यतिः परिवर्जयेदेव त्रिविधित्रिविधेनाधाकर्मदोषम् इत्युक्तं किंचिन्नवभिर्द्वारैराधाकर्मस्वरूपम् ॥ १ ॥

अथ द्वितीयौद्देशिकदोषस्वरूपं किंचित् प्ररूप्यते, तथाहि औद्देशिकं द्विधा ओघतो विभागतश्च, तत्र ओघः सामान्यतो दातृविकल्पः। स च स्वार्थमेव पाकाद्यारंभे सति काचिद्दात्री भक्तादिविभागान् कल्पयति यदेतावदस्मत्कुटुम्बकृते, एतावच्च यः कश्चित्समेष्यति याच्नायै तस्मै दानहेतोरित्येवंरूपस्तस्मात् सामान्यतो दातृविकल्परूपाद्दोषादुदिष्टमोघोद्दिष्टं कल्पितभिक्षाभागवितरणादुपरि शुद्धमित्युक्तमोघोद्देशिकम् ॥ १ ॥

अथ विभागतस्तत् प्रोच्यते तथाहि—द्वादशविधं विभागौद्देशिकमुद्दिष्ट १ कृत २ कर्म ३ लक्षणस्य भेदत्रयस्योद्देश १ समुद्देशा २ देश ३ समादेश ४ भेदैः प्रत्येकं चतुष्प्रकारत्वात्। अथोद्देशादीनां व्याख्या विधीयते। तथाहि—यावंतः केचन समेष्यंत्यर्थिनस्तत्कृते कल्पितं भक्ताद्युद्देशाख्यया प्रोच्यते १। चरकादिपाखण्डिकृते तु कल्पितं समुद्देशाख्याऽऽख्यायते २। निर्ग्रंथशाक्यतापसगैरिकादिश्रमणकृते तु कल्पितमादेशाख्यं स्यात् ३। निर्ग्रंथानां जैनसाधुरूपाणां तु कृते कल्पितं समादेशाख्यं भवेत् ४। अथोद्दिष्ट १ कृत २ कर्म ३ त्रितयं विव्रियते। तथाहि विवाहादि प्रकरणे स्वजनादिभिरशनादिके भुक्ते सत्युद्धरितमोदनतीमनदधिमोदकादि प्रकरणदिनाद् द्वितीयादिदिने प्रभूततरं निरीक्ष्य भर्त्रादिः कलत्रादेः संमुखं वक्ति यथा धर्माय देहीदं चतुर्णां यावदर्थिकानां मध्यादेकस्मैचिदित्येतदुद्दिष्टोद्देशिकं कीर्त्यते। अत्र च पाणिग्रहणादिप्रकरणग्रहणं प्रायः संखड्यामेव भवति तत् प्रभूततरमितिहेतोः। अल्पमुद्धरितं तु प्रायः कुटुम्बाद्युपयोगि स्यादिति प्रभूततरग्रहणम्। एवं यावदर्थिकादीनां चतुर्णां कृते मनोवचनाभ्यामुद्दिष्टं चतुर्भेदमुद्दिष्टौद्देशिकं स्यात् ४। तदेव चोद्धरितं

तृतीय-
लहर्यां
तृतीय-
स्तरङ्गः।

आधा-
कर्मिकौ-
द्देशिकदोष-
स्वरूपम्।

प्रागुक्तानां चतुर्णां कृते दध्यादिव्यजनेन मिश्रित सचतुर्विधं कृताख्य कीर्त्यते ८। तदेव पुनरग्नितप्त मत् प्राग्वच्चतुर्द्धा कर्माख्यया समाख्यायते १२। एवमोघत एकविध विभागतस्तु द्वादशविधमिति त्रयोदशभेदमौद्देशिक स्यात्। इति किंचिन्निगदितमौद्देशिकस्वरूपम् ॥ २ ॥

अथ तृतीयपूतिकर्मदोषस्वरूप किंचित् प्ररूप्यते। तथाहि आधाकर्मो१द्देशिकांत्यत्रितय४मिश्राद्यव्यवपूरकांत्यद्वितया ८ हारपूति ९ बादरप्राभृतिका १० रूपाविशोधिकोटशुद्गतदोपदशकाऽवयवमात्रेणापि युत शुद्धमपि भक्तप्रभृति पूति भवेत् सघृतसित परमान्नमिवाऽशु विपलेशेन। तच्च द्विविध सूक्ष्म १ बादर च २। तत्र सूक्ष्म कार्मिकगधाऽग्निधूमबाष्पैः स्यात्। इहोत्तरत्र च कार्मिकग्रहणेन सर्वेषामविशुद्धिकोटिदोपाणां ग्रहाद् दृश्यः। अत्राग्निग्रहणात्तदवयवास्तापादिरूपा अशा ग्राह्याः। अय भावः कार्मिकभक्तप्रभृति गधाद्यैः समिलित शुद्धमप्यशनादि सूक्ष्मपूति भवेत्? ननु यद्येव तर्हि पूतिदोषरहित किमपि विद्यते, यतो वह्नेस्तापादिरूपा अशा धूमः कार्मिकाशनादिगधबाष्पौ चेत्येते चत्वारोऽपि विशीर्यमाणाः सर्वमपि विश्व व्याप्नुवति, ततस्तैः स्पृष्ट शुद्धमप्यशनादि जगत् मध्यस्थित सर्वमपि सूक्ष्मपूति भवेत्? सत्य परमेतददुष्टमाचीर्णत्वादशक्यपरिहारत्वाच्च। ननु यद्येतददुष्ट तर्हि किमर्थमेतदुपन्यासः कृतः? उच्यते भेदमात्रप्ररूपणार्थमेव। यथा सूक्ष्मबादरपल्योपमविचारे बादरस्य तस्य प्ररूपणमित्युक्त सूक्ष्मपूति ॥ १ ॥

अथ तद् बादर प्ररूप्यते तथाहि बादर पूति द्विविधमुपकरणविषय भक्तपानविषय च। तत्राधाकार्मिकचुल्लीस्थालीदर्व्याद्युपकरणस्थित शुद्धमप्यशनाद्युपकरणपूति भवेत्। गृहस्थैः स्वार्थमेव ततोऽन्यत्र स्थापित तु शुद्धम्। अथ भक्तपानविषय

तदुच्यते तथाहि कार्मिकवेसनेन तप्तघृतराजिकादिक्षेपरूपेण धूमितं सत् पूति स्यादशनादि । अथवा कार्मिकहिंगुलवणादीनां शुद्धभक्तादौ संस्कारार्थं प्रक्षेपतस्तदवसेयं हिंगुलद्रव्यस्य यतिनिमित्तं सचित्तोदकेन द्रवीकरणतः परिज्ञेयमाधाकार्मिकत्वं लवणस्य तु चूर्णीकरणाग्नितापनादिप्रकारैः कार्मिकता भावनीया । तथा कार्मिकोपलिप्तस्थालादिषु राद्धं स्थापितं वा भक्तपानं पूति भवेत् । तथा कार्मिकोपलिप्तहस्तादिस्पृष्टमप्यशनादि पूति स्यात् । इत्युक्तं पूति पानविषयम् । अत्रैव विशेषः प्रोच्यते तथाहि यत्र कार्मिकमशनादि कृतं तद् गृहं प्रथमदिने तद्दोषदुष्टत्वाद् वर्जनीयं तदनु तत् सदनं दिनत्रयं यावत् पूति प्रोच्यते भक्तपानमाश्रित्य । यदा तु कश्चिद् गृही कतिचिद्दिनातिक्रमे संखडी करिष्यामि संघं वा भोजयिष्यामीति बुध्या मोदकादीनाधाकर्मिकान् विधाय स्थापयति तदा यावंति दिनानि ते मोदकास्तिष्ठंति तावंति दिनानि तद् गृहं पूति प्रोच्यते । तेषु दत्तेषु भुक्तेष्वपि पश्चाद्दिनत्रयावधि तद्गृहस्थं शुद्धमपि भक्तादि तत्स्पर्शभावात् पूति स्यादेवं तु बहून्यपि दिनानि पूतिदोषः संभवेत् । यत्र तु भाजने कार्मिकं भक्तादि कृतं स्यात्तत्तु भाजनमकृतत्रिकल्पं स्वार्थं वारत्रयं भक्तादिरंधनेन शुद्ध्यति । कल्पत्रयकृतौ तु प्रथमेनैव शुद्ध्यति । यत्र तु पात्रे कार्मिकमशनादि गृहीतं स्यातत्तु पात्रं प्रथममंगुलीप्रोंछनकरीषोद्वर्तनादिक्रियां विधाय तदनु कल्पत्रयकृतिना शुद्धं विधेयम् । इत्युक्तं पूतिकर्म ॥ ३ ॥

अथ तुरीयमिश्रजाताख्यदोषस्वरूपं किंचित् प्ररूप्यते, तथाहि यत् प्रथमत एव यावदर्थिक १ समस्तपाषंडि २ निर्ग्रंथ ३ निमित्तमात्म ४ कृते च कृतं पचनादिना तन्मिश्रजातं त्रिविधतया कीर्त्यते । इत्युक्तं मिश्रजातम् ॥ ४ ॥

अथ स्थापनादोषस्वरूपं किंचिदुच्यते । तथाहि स्थापना द्विधा स्वस्थान १ परस्थान २ भेदात् । अथवाऽनंतर १

परपर २ भेदात् । चिरे १ त्वर २ भेदाद् वा । तत्र चुल्लुपादिस्वस्थानम् १ । परस्थान तु ततः सहृत्यान्यत्र यत्र कुत्र-चित् स्थाप्यते तदवसेयम् २ । अनतर तु घृतादि १ । परपर तु क्षीरादिकमवसेयम् २ । यावत समय द्रव्यमवतिष्ठति तावत समय यतिनिमित्त तत्स्थापने चिरस्थापना १ । अथाचिरस्थापना प्रोच्यते । यत् पक्तिस्थितेषु बहुषु गृहेष्वेकस्मिन् सदने सम्यगुपयोगेन भिक्षा परिभावयस्येको यतिरपरस्तु द्वयोः पार्श्वस्थयोस्तयोर्दायकहस्तगते भिक्षे परिभावयति । एव मह त्रयात् परतो गृहांतरे साधुनिमित्ता या दातृहस्तगता भिक्षा सा इत्वरस्थापना प्रोच्यते, तत्रोपयोगाभावात् । अत्र निदर्शन यथा केनचित् श्रमणेन कस्याश्चिदगार्य्याः सविधे दुग्ध प्रार्थित तदा तयोक्त 'क्षणांतरे दास्ये' । अथ च गोचरचर्यागतेन तेन तदन्यत्र सदने प्राप्तम् । क्षणांतरे च तया स प्रोक्तो 'भो यते ! गृहाणैतद्दुग्धम्' तदा च स प्रोचिवान् 'अद्य तन् मया-ऽन्यत्रासादितम् । तेन प्रयोजने समुत्पन्ने तवापि तदादास्ये' इति तेनोक्ते तया ऋणभीतया तद्दधि विधाय स्थापितम् । श्वो दास्ये इति बुद्ध्या । तस्याप्यनादाने तया तावत् स्थापित यावद् घृत जातम् । एव प्रभूतमपि समय यावत् स्थापनादोषः सभवेत् । इत्युक्त किंचित् स्थापनादोषस्वरूपम् ॥ ५ ॥

अथ प्राभृतिकादोषस्वरूप किंचिदुच्यते । तथाहि प्राभृतिका द्विधा सूक्ष्मबादरभेदात् । तत्र गुर्वाद्यागमनं विज्ञाय कोऽप्युपासको विवाहादिमहस्योपसर्प्पणमपसर्पण यावत् करोति सा बादरा प्राभृतिका १ । यत्तु सुतादौ भोजन याचमाने सति 'यदा यतयः समायास्यति तदा तद्दाननिमित्तमुत्थिता सती तवापि तद्दास्यामी'ति दात्री ब्रूते सा सूक्ष्मा प्राभृतिका २ । इत्युक्ता प्राभृतिका ॥ ६ ॥

अथ प्रादुष्करणमुच्यते । तथाहि प्रादुष्करणं द्विविधं प्रकटकरणं १ प्रकाशकरणं २ च । तत्र प्रथमं सांधकारे मंदिरे देयस्य वस्तुनो यतिनिमित्तं वहिः सप्रकाशे प्रदेशे स्थापनम् १ । प्रकाशकरणं तु सतमसि सदने मणिप्रदीपगवाक्षकुडय-छिद्रादिकरणैः साधुकृते प्रकाशकरणम् २ । यतः सांधकारस्थानस्थितमशनादि न कल्पते यतीनां विहर्तुम् । तदुक्तं श्रीदशवैकालिके नीअदुवारं तमसं, कुट्ठगं परिवज्जए । अचक्खुविसओ जत्थ, पाणा दुप्पडिलेहगा ॥ १ ॥ अत्र निदर्शनं यथा कोऽपि श्रमणशिरोमणिस्तपनकृशतनुः सर्वतोऽपि मलदिग्धांगो युगमात्रमहीप्रदेशनिहितनयनव्यापार-स्त्वराचापल्यविरहितगतिः कयाचिच्छ्राद्धया ददृशे स्वगृहाभिमुखमागच्छमानः । तदा च संजातश्रद्धा सा श्राद्धी विपुल-मन्नपानं समादाय समायाता वहिः स्वगेहतः । अस्मिन्नवसरे च स यतिस्तत्सदनं नीचद्वारं सांधकारं निरीक्ष्यानेषणीय-मिदमशनादीति स्वचेतसि निश्चित्य गतस्तदनादाय । अथ च तस्मिन्नेव निकेतने क्षणांतरे समायातः कोऽपि द्रव्यलिंगी तेन च तया दत्तं तदन्नादि गृहीतं, गृहीते च तस्मिस्तया स प्रोक्तः ' किं कल्पते यतीनां नीचद्वारे सांधकारेऽशनादि समादातुम् ? ' तदा च स प्रोचिवान् ' न कल्पते तत्तत्र स्थितं यतिसत्तमानामेषणासमितानाम् । अहं तु लिंगमात्रोपजीवी, तेन मम किमु कल्प्यमकल्प्यं वा । ' इत्युक्तं प्रादुष्करणम् ॥ ७ ॥

अथ क्रीतमुच्यते । तथाहि क्रीतं चतुर्द्धा स्वद्रव्यक्रीतं १ स्वभावक्रीतं २ परद्रव्यक्रीतं ३ परभावक्रीतं च ४ । तत्र चूर्णांजनादिस्वद्रव्यप्रदानेन परमावर्ज्य यद् गृह्यतेऽशनादि तत् स्वद्रव्यक्रीतम् १ । यच्च धर्मकथाकथनातीतानागतनिमित्त-भाषणादिस्वभावेन परं रंजयित्वा समादीयतेऽशनप्रभृति तत् स्वभावक्रीतम् २ । तथा यतिनिमित्तं यत् परेण द्रव्येण क्रीतं

तत्र प्रथमस्य स्वसा लक्ष्मीनाम्नी द्वितीयेन परिणीता । द्वितीयस्य भगिनी तु बंधुमत्याख्याऽऽद्येन । अथ च प्रथमस्य भ्राता वैराग्यरंगतः समात्तव्रतो विहरन् लक्ष्मीगृहं प्रविष्टः । सा च चिरसमयसमायातसोदरगौरवार्थं स्वगृहराद्धकोद्रवकूरं बंधुमत्या वितीर्य तद्गृहराद्धं शालिकूरमानीय तस्मै ददौ । अथ च देवदत्तो भुंजानः कोद्रवकूरदर्शनात् कुपितः 'पापे ! किमिदं राद्ध' मिति बंधुमतीमताडयत्तावद् यावत्तयोक्तं 'तवैव स्वसा शालिकूरं गृहीत्वा गते'ति धनदत्तोऽपि विदितवृत्तांतो लक्ष्मीं प्रति कुपितः । 'आः पापे ! परगृहाद्धान्यमानीय मामेवं लघूकरोषी'ति तां ताडितवानिति जनादवगतकलहोत्थानो मुनिस्तान् प्रतिबोध्य प्रव्रज्यामग्राहयदिति । लोकोत्तरे तु तद् द्रव्यविषया १ ऽन्यद्रव्यविषय २ परावर्तिते यदा यतिरेव यत्यंतरसमीपे परावर्त्य गृह्णाति तदा विज्ञेये । इत्युक्तं परावर्तितम् ॥ १० ॥

अथाभ्याहृतमुच्यते तत्राभि सम्मुखं स्वस्थानात् साधुसमीपे दानायाहृतमभ्याहृतं तत्तु द्विविधं स्वग्रामाभ्याहृतं १ परग्रामाभ्याहृतं २ । तत्र पाश्चात्यं द्विविधम् । सप्रत्यपायपरग्रामाभ्याहृतम १ ऽप्रत्यपायपरग्रामाभ्याहृतं २ च । तत्र प्रत्यपायशब्देन मार्गस्थितस्तेनगर्त्तागिरिनदीजलदवानलव्याघ्रादिरूपविघ्नं विज्ञेयम् । अथवा प्रकटछन्नादिभिर्भेदैस्तदनेकविधमवसेयम् । आचीर्णं पुनरेतत् यत्करशतमितभूभागतः समानीतं गेहत्र १ यच्च यदानीतं तत्रैकस्मिन् सदने भिक्षाग्राही विदधात्युपयोगं द्वितीयस्तु द्वयोस्तयोः, इत्युक्तमभ्यहृतम् ॥ ११ ॥

अथोद्भिन्नमुच्यते । तथाहि उद्भिन्नं त्रिधा लिप्तोद्भिन्नं १ दर्दरोद्भिन्नं २ कपाटोद्भिन्नं च ३ । तत्र जतुच्छगणादिनोपलिप्तं घृतघटादिमुखं साधुदानकृते उद्भिद्य यद्दीयते घृतादि तल्लिप्तोद्भिन्नम् । दर्दरस्तु कुतुपादेर्मुखबंधनं वस्त्रचर्मादिखंडं तदुद्भिद्य यद्दी-

तृतीय-लहर्यां तृतीय-स्तरङ्गः ।

प्रामित्य-परावर्तिता-भ्याहृत-दोष-स्वरूपम् ।

यते तद्दर्दरोद्भिन्नम् २ । यत्तु पिहित कपाटमुद्भिद्य दीयते तत् पिहितोद्भिन्नम् ३ । एतेषु जतुलिप्ते उद्भिद्यमाने पुनर्लिप्यमाने च तेजस्कायविराधनादयो दोषा भवेयुर्यच्छगणमृत्तिकादिलिप्ते तद्भिद्यमाने पुनर्लिप्यमाने च पृथ्व्यप्कायविराधनादयो दोषाः समभवेयुस्तथा व्यापारेण क्रयविक्रयप्रभृतयोऽपि तथोद्भिन्ने सति घटकोष्ठिकादिमुखे ये मूषकादयो जीवास्तत्र निपतति तद्विराधनादयोऽपि दोषा अत्र विज्ञेयाः । एवं दर्दरोद्भिनेऽपि यथासभव दोषा वाच्याः । अव्यापार्यमाणकपाटोद्भिन्ने तूपर्यधो वा कृताऽवस्थितीनां लूतापुटप्रहगोधातदडकादित्रसजतूना विराधनाऽन्येऽपि च पूर्वोक्ता दोषाः समभवेयुः । यश्च दर्दर उन्मुद्रितमथिः परिभुज्यमानो भवति यच्च कपाट नित्य परिवहति तत्र त्रसादिजीवविराधनाऽसभवे गृह्यतेऽदुष्टत्वादित्युक्त किंचिदुद्भिन्नम् ॥१२॥

अथ मालाऽपहृतमुच्यते तथाहि मालापहृत जघन्यमध्यमोत्कृष्टभेदात्त्रिविधम् । तत्र क्षितिनिहितचरणाग्राभ्यामुत्पाटित पार्ष्णिभ्यां चरणाभ्यामत्यूर्ध्वसिक्ककादिस्थ चक्षुगोचर दात्र्या यद् वितीर्यते तज्जघन्यमालापहृतम् १ । मंचकादिक वाऽऽरुह्य यद्दीयते तन् मध्यमम् । निश्रेण्यादिक स्वारुह्य यद्दीयते तदुत्कृष्टम् ३ । अथवा तच्चतुर्विध तथाहि सिक्ककसदनोपरितन भूभागस्थितमूर्ध्वस्थितम् १ । भूमिगृहादिस्थमधःस्थितम् २ । कोष्ठिकादिगत तूभयस्थित पार्ष्ण्युत्पाटनादयो उत्क्षेपाच्च ३ । धरण्यामेव स्थित तु यत्करादुपादेय तत्तिर्यक्स्थितम् ४ । एतच्च त्रिविध चतुर्विध वा मालोपहृत दुष्टत्वाद् वर्जनीयम् । अत्र निदर्शन यथा कोऽपि यतिः कस्यचिद् गृहे विहर्तुमगात्, तदा च तद्गृहवनिता चक्षुरगोचरसिक्ककस्थितमोदकवितरणाय समुत्थिता, तां च तथाविधां वीक्ष्य स साधुस्तदनादाय निर्गतः । अथ च कोऽपि पार्श्वस्थस्तस्मिन्निर्गते तत्र समागात्, तदा च तद्गृहपतिना स पृष्टः 'किमिति प्राक् समागतसाधुना न गृहीता मोदका ?' इत्युक्ते स प्रोक्तवान्

'प्रागदत्तदाना इमे मोदका भोक्तुं कथं लभंते' इति वचनानंतरं तद्गृहपतिना प्रणुन्ना तद्दयिता तस्मै मोदकदानकृते तस्मिन् सिक्के करमक्षिपत् तदा च तन्मोदकसौरभ्यसमाकृष्टेन तत्रागतेन दीर्घपृष्टेन सा दष्टा पाणी, मंत्राद्युपायैश्च सा पुनरुज्जीविता । अन्यदा च साधौ समागते तद्गृहधनिकेनोक्तं 'यदा युष्माभिर्मोदका न गृहीतास्तदा किं सिक्के भुजगो भवद्भिर्वीक्षितः ? वीक्षितश्चेत्तदा किं नोक्तः' मुनिनोक्तं 'मया पन्नगो नेक्षितः, परमस्माकमयं सर्ववित्प्रणीतोऽशनादिग्रहणविधिर्यन्नयनविषयातिक्रांतमशनादि न ग्राह्यं तेन तन्न मोदकाग्रहण' मित्युक्ते सति स प्रतिबुद्धः संजातश्रद्धः श्रीमदार्हतमतविषये । इत्युक्तो जघन्यमालापहृते दृष्टांतः । एवमन्यथाऽपि तेषु ते समयानुसारेण भावनीयाः । एतत् पुनर्मालापहृतं न भवति यत् स्थिरदर्दरसोपानादिनाऽसंभाव्यमानचरस्थिरजंतुविराधनेन मार्गेण समानयत्यशनादि दात्री मालादिगतम् । यदुक्तं श्रीपिंडनिर्युक्तौ 'दद्दरसेलसोवाणे, पुव्वारुढे अणुच्चउक्खित्ते ॥ मालोहडं न होई, सेसं मालोहडं होइ ॥ १ ॥ तिरिआयतमुज्जुगएणं गिण्हए जं करेण पासंतो । एअमणुच्चुक्खित्तं उच्चुक्खित्तं भवे सेसं ॥ २ ॥ इत्युक्तं मालापहृतं ॥ १३ ॥

अथाच्छेद्यमुच्यते तथाहि अन्येभ्यो भृत्यादिभ्यः सकाशाच्छिद्योद्दाल्य यद्ददाति स्वामिप्रभुस्तेनस्तदाच्छेद्यमुच्यते स्वाम्यादिभेदात्रिविधम् । तत्र स्वामी ग्रामादिनायकः । प्रभुर्गृहादीनां पतिः । स्तेनास्तस्कराः । एतच्च गोपदृष्टांतेन दुष्टत्वाद् वर्जनीयम् । स चाऽयं कस्यापि गोपस्य दुग्धं ग्रामपतिना भृतिदिने बलादुद्दाल्य दत्तं कस्यचिद् यतिलिंगधारिणः । अथ च स गोपः पयोभाजनं न्यूनं समादाय गतः स्वगृहे तदा च तद्दयिता तत्पयःपात्रं न्यूनं निरीक्ष्य तमाक्रुष्टवती । तदा च

तेन सद्भावे प्रोक्तेऽपि सा कलहान्न व्युपरमति । तदा च दुग्धाप्राप्त्या तद्डिम्भान्यपि रोदयांबभूवु' । एवं चाऽसमंजसे संजाते सति निजगृहस्वरूपे समुत्पन्नमन्युः स गोपः साधुं गवेषयामास वधकृते । अथ च साधुना स गोपो दृष्टो लक्षितश्च तद्भावः विज्ञाय च तद्भावं तेन साधुना स गोपः प्रोक्त–' त्वदा मया ग्रामेशनिर्बंधाद् दुग्धं गृहीतं तदनु तत्प्रत्यर्पणकृते त्वदन्वेषणं विदधता मया त्वं दृष्टोऽसि । तेन त्वमेतद् ग्रहाणं मुक्त्वा मयि कोपं' मिति मुनिनोक्ते शांतमन्युना गोपेन स प्रोक्तो–' ऽद्य त्वं मुक्तोऽसि, नैव पुनः कार्यो–'रिति एवमन्ययोरप्याछेद्ययोर्दृष्टांतभावना विधेया इत्युक्तमाच्छेद्यम् ॥ १४ ॥

अथानिसृष्टमुच्यते । तथाहि अनिसृष्टशब्देनादत्तमुच्यते । तावद् बहुना सत्कं तैरदत्तमननुमतं वा यदेकः कश्चिद्ददाति तद् विज्ञेयम् । तच्च त्रिधा साधारण १ चोल्लक २ जड्डा ३ ऽनिसृष्टभेदात् । तत्र साधारणतयाराद्धं तैः सर्वैरननुज्ञातमेकस्य कस्यचिद्ददतः साधारणाऽनिसृष्टं स्यात् १ । चोल्लकानिसृष्टं चैव विज्ञेयं यत्स्वामिना कुत्रापि स्वसेवकानां भोजननिमित्तमशनादिकारितं भवति । तत्र च तैरननुमतमेव यदा सूपकृद्ददाति यतये तदा तद् भवति २ । जड्डशब्देन तु समयभाषया हस्ती प्रोच्यते तन्निश्रया कृतमशनादि नृपेन द्विपेन वाऽननुमतमेव यद्ददाति हस्तिपकप्रभृतिकस्तज्जड्डानिसृष्टमुच्यते । एतेषु च गृह्यमाणेष्वदत्तादानाप्रीतिर्नृपतिपिंडप्रभृतयो दोषा भवेयुः । तथाहि कस्मिंश्चिद् ग्रामे मोदकादिद्रव्यमादाय द्वात्रिंशत् पुरुषा उद्यानिकार्थमुद्याने गताः । ते च कस्मिंश्चिज्जलाशये स्नानकृते प्राप्ताः, कंचन नरं मोदकचिंतनकृते स्थापयित्वा । अथ च तत्रास्थाने समायात. कोऽपि यतिलिंगधारी । तेन च स मोदकचिंतकः प्रोक्तः 'भो देहि मह्यमेकं मोदकं'मिति तेनोक्ते सति स नरः कथयामास ' परकीया एते मोदकाः, कथं मया दातुं शक्यते ? ' इति तेनोदिते स

यतिस्तं प्रति प्रोक्तवान् ' भोः परकीयेणापि द्रव्येण पुण्यमात्मीयं किं नोपार्ज्यते ? अन्यच्च द्वात्रिंशन्मानानामपि मोदकानां वितरणे तवैक एवायाति एवं च व्ययः स्तोको लाभश्च भूयान् वीक्ष्यते ' इत्याद्युक्तिभिस्तं नरं विप्रतार्य तेन द्रव्ययतिना तत्पार्श्वादेको मोदकः समादत्तः । तं च समादाय पश्चाद् व्रजन् स वीक्षांचक्रे तैः स्नानप्रत्यागतैर्नरैः । दृष्टा च स तैः पृष्टः ' भोः किमपि प्राप्तं भवता ? ' स प्रोचिवा ' ने 'ति तदनु तैरुक्ते ' तर्हि दर्शय, विलोकयामो यथा ' स चाऽदर्शयन् बलाद् विलोकितस्तैः । विलोकिते च तस्मिन् दृष्टस्तैस्तत्पार्श्वे मोदकः । तं च विलोक्य स तैः पृष्टः 'कुतस्तेऽयं मोदकः ?' तेनोक्तं ' मम मोदकचिंतकेन दत्तः ' स च तैः पृष्टः प्रोक्तवान् ' मां विप्रतार्याऽनेन मोदको गृहीतस्तेन स्तेनोऽसा ' विति तेनोक्ते स द्रव्ययतिस्तैर्गृहीत्वा बद्धः प्रवचनोड्डाहश्च समभूत्तदनु न्यायकृद्भिः स यथा स्थितस्वरूपं पृष्ट्वा निर्विषयः कृतः। एवं चान्ययोरप्यनिसृष्टयोर्दृष्टांतभावना समयानुसारेण विधेया । इत्युक्तमनिसृष्टम् ॥ १५ ॥

अथाऽध्यवपूरकः कीर्त्यते स च त्रिधा यावदर्थिक १ पापंडिक २ यत्यर्थ ३ भेदात् । तत्र प्रथमं स्वार्थमेव वह्निज्वालनस्थालीजलप्रक्षेपणप्रभृतिके आरंभे कृते सति पश्चाद् यावदर्थिककृते तंदुलादीनामधिकतराणां प्रक्षेपणाद् यावदर्थिकार्थोऽध्यवपूरः । एवं शेषयोरपि तयोर्भावना विधेया । अत्र च यावदर्थिकादिकृते यावदधिकं प्रक्षिप्तं भवति तावन्मितं चेद्दानाय ततः पृथग् विहितं दत्तं वा भवेत्तदा कल्पते । यदुक्तं श्रीपिंडनिर्युक्तौ जावंतिए विसोही, संजयपासंडमीसए पूती । छिन्ने वि सोहितम्मि कप्पति न कप्पती सेसं ॥ १ ॥ इत्युक्ताः षोडशोद्गमदोषाः ॥ १६ ॥

अथैतेष्वेवाविशोधिकोटिविशोधिकोटिस्वरूपं कीर्त्यते । तथाहि आधाकर्म १ कर्मोद्देशिकांत्यत्रितयं ४ मिश्रांत्यद्विकम् ६

आहारपूति ७ पादरप्राभृतिकाऽध्यवपूरांत्यद्वितय १० मित्येते दशोद्गमदोषा अविशोधिकोटितया कीर्त्यन्ते । अनया चाऽवि शोधिकोट्या स्पृष्टमशनाद्यशुचिलवेन स्पृष्टमिवानास्वाद्य भवति । अतस्तया युत पात्रमपि पूर्वं करीषनिश्शोधित तदनु कृत-त्रिकल्प कल्पते नान्यथा यतस्तदऽत्ययनोऽपि विषलव इव भक्तादिसहस्राणि विनाशयति । शेषा उद्धरितोद्गमदोषा उत्पादनादि दोषाश्च विशोधिकोटितया कीर्त्यंते । तदवयवश्च यो यत्र यदा पतित, स तस्मात्तदैवोद्धरणीयः । अत्र चतुर्भंगी शुष्के शुष्क पतितम् १, शुष्के आर्द्रे पतितम् २, आर्द्रे शुष्क पतितम् ३, आर्द्रे आर्द्रं पतितम् ४ । एतेषु प्रथमभगे सुखमुद्धर्त्तुं, द्वितीयभगे तु पात्राग्रत कर दत्त्वाऽन्यवृत्त्य क्षिप्त्वा तद् शुद्ध द्रव गालयेत्, तृतीयभगे त्वशुद्धद्रवमध्यपतितमोदनादि हस्त क्षिप्त्वा बहिः कर्षयेत् शुद्धद्रवे त्वशुद्धद्रवे पतिते तावन्मात्र त्यजनीयम् । निर्वाहे तु सर्वमपि वर्जनीयम् । अनिर्वाहे त्विय चतुर्भंगी विज्ञेया, अस्यां त्वशठः शुद्ध्यति शठस्तु बद्ध्यते तत्कर्मणा । उक्त च श्रीपिंडनिर्युक्तौ ' सुक्के सुक्क पडिअ, विगिंचिउ होइ त सुह पढमो । बीयम्मि दवं छोढु, गालेति दव कर दाउ ॥ १ ॥ तइअम्मि कर छोढु, उक्खिचइ ओयणाइ ज तरइ । दुल्लहदव्व चरिमे, तत्तिअमित्त विगिंचति ॥ २ ॥ सथरे सव्वमुज्झति, चउभगो असथरे । असढो सुज्झई जेसु, मायावी जेसु बज्झती ॥ ३ ॥ ' इत्युक्ताः षोडशोद्गमदोषाः ।

अथ षोडशोत्पादना दोषा निगद्यते तथाहि, धात्री १ दूतीकर्म २ निमित्त ३ जीव ४ वनीपक ५ चिकित्सा ६ क्रोध ७ मान ८ माया ९ लोभ १० पूर्वपश्चात्संस्तव ११ विद्या १२ मन्त्र १३ चूर्ण १४ योगपिंड १५ मूलकर्म १६ नामानः षोडशोत्पादना दोषा भवति ।

तेषु बालविषयं क्षीर १ मज्जन २ मंडन ३ क्रीडापना ४ ऽङ्क ५ रूपं पंचप्रकारं धात्रीत्वं विधाय यदशनादि समादत्ते द्रव्ययतिः स धात्रीपिंडो विज्ञेयः। अत्र निदर्शनं यथा–कोल्लइरनाम्नि नगरे क्षीणजंघाबलाः श्रीसंगमनामानः सूरयो दुर्भिक्षे स्वगच्छमन्यत्र विहार्य नवभागीकृतक्षेत्रवसतयस्तत्स्थिवांसः। अन्यदा च तेषां शिष्यो दत्ताभिधानः श्रीगुरुशुद्धि-गवेषणाकृते समाजगाम तत्र स्थाने। स च तत्रागतः श्रीगुरुं तत्रैव च सति भागे स्थितं निरीक्ष्य गुरोर्भ्रष्टाचारत्वमा-शंक्य तस्थौ बहिरुपाश्रयात्। अथ च स मध्याह्ने गुरुणा समं विहर्तुं गतोऽज्ञातोंछगवेषणे न संक्लेशभाक् समभूत्। तदा च विज्ञाततच्चित्ताध्यवसायैः श्रीगुरुभिः कस्यचिन्महेभ्यस्य सदने व्यंतरग्रस्तं शिशुं च चुटिकादानेन सज्जीकृत्य तत्पात्रविहृतयथेप्सितमोदकैस्तमुपाश्रये प्रेष्य स्वयमरसविरसाहारं विहृत्य विहिता देहधारणा। अथ च प्रतिक्रमण-काले तं' धात्रीपिंडमालोचये 'ति श्रीगुरुणा प्रोक्तः स प्रत्युक्तवान् ' यद्भवद्भिरेव तदालोचनं विधेयं, यतः स भवद्भिरेव विहृतो न तु मया 'इति तेनोक्ते सति देवतया तत्शिक्षाकृते घोरांधकारं वात्या कर्करवृष्ट्यादिविकुर्वणं कृतं, तदा च स भीतिभीतः शब्दयामास श्रीगुरून्। तदा च श्रीगुरुभिर्निष्ठ्यूतेन लिप्ता प्रदीपवद् द्योतमाना निजांगुलीं ध्वतनिकरविषधर-जांगुली तस्य प्रदर्शिता। तां च समालोक्य स चेतसि चिंतयामास अहो! गुरुसमीपे दीपोऽपि विद्यते। इति तेन चिंतिते सति ते स देवतया शिक्षितः श्रीगुरुचरणे निपत्य सौत्रापराधं क्षामितवान्। यथाऽनेन धात्रीपिंडो गृहीतस्तथान्यैर्नादेयः। इत्युक्तं धात्रीपिंडस्वरूपम् ॥ १७ ॥

अथ दूतीपिंडस्वरूपं प्ररूप्यते, तथाहि–दूती संदिष्टार्थकथिका, तत्कर्मणा समासादितः पिंडो दूतीपिंड इति कीर्त्यते।

तच्च दूतीत्व स्वग्रामपरग्रामप्रच्छन्नप्रकटत्वभेदाच्चतुर्विधम् । एतच्च चतुर्विधमपि दूतीत्व सावद्यव्यापारप्रवृत्तिनिमित्तत्वेन दुष्टत्वाद् वर्जनीयम् । अत्र निदर्शन यथा—द्वयोर्ग्रामयोर्वैरे सत्येकस्मिन् ग्रामे कोऽपि कस्याश्चिद्देहिन्या गृहे स्थितः साधुलिंग धारी । अन्यदा च स तस्मिन् विरुद्धग्रामे व्रजन् शय्यातर्या प्रोक्तो 'यन्मम तत्र ग्रामे दुहिता समस्ति, तस्याश्चैव वाच्य यदस्मत् प्रभुर्युष्मद्ग्रामोपरि समागच्छन्नस्ति तेन भवद्भिः सावधानतया स्थेयम्' । तेनापि स सदेशकस्तस्याः प्रोक्तस्तया च पते', तेन च ग्रामजनस्य । तदनु च तत्पतिप्रभृतिकः सकलोऽपि ग्रामलोकः सज्जीभूतः कलये । अथ च शय्यातर्याः पतिपुत्रौ समेतौ ग्रामजनेन सम तत्र युद्धाय । एव चोभयोर्ग्रामलोकयोर्मिथः कलहे बहुजनक्षये जायमाने सति शय्यातर्याः पतिपुत्र जामातरः परासुतां प्रापु' विदिततद्वृत्तांतया च शोकातुरया तया शय्यातर्या स सौवोपाश्रयान्निष्कासितः उड्डाहश्च जने समभूत् । इत्युक्त किंचिद्दूतीपिंडस्वरूपम् ॥ १८ ॥

अथ निमित्तपिंडस्वरूप किंचित् प्रोच्यते । तथाहि—यत् त्रिकालविषयलाभालाभसुखदुःखजीवितमरणादिरूप निमित्त जनपुरतः प्रकाश्य पिंडो गृह्यते स निमित्तपिंडः । अयमपि महादोषनिबधन, तथाहि—कस्मिन्नपि ग्रामे कापि युवती स्वपतौ ग्रामांतर गते सति तद्विरहार्दिता पप्रच्छ कचन यतिं लिंगधारिण 'यन्मम दयितः कदा समेष्यति ग्रामे ?' इति तया पृष्टे सति स प्रोक्तवान् 'प्रातरेष्यति' इति तेनोदिते सति स तया प्रोक्तः 'किमत्राभिज्ञान ?' तेनोक्त 'येनात्राभिज्ञानेन भवत्या गुह्यप्रदेशे मशकः प्रवर्त्तते । तेनाभिज्ञानेनैतन्मदुक्त पतिममागमन श्रद्धेय भवत्या' इति तेनोक्ते सजातप्रत्यया समानंदितचित्ता सा त मिष्टान्नेन मोदकादिना प्रत्यलाभयत् । अथ च प्रातःसमये सा परिजन समील्य गता पतिसम्मुखम् ।

अथ च सोऽपि स्वगृहचरितान्वेषणकृते एकाकी समागच्छँस्तं निजपरिजनं संमुखमागतं निरीक्ष्य प्रोचिवान् ‘ कथमवगतं भवद्भिर्मदागमनम् ? ’ इति तेन प्रश्ने कृते सति तत्प्राणप्रिया प्रोक्तवती यद् ‘ यतिकथनात् । ’ तदा च तया पत्यग्रे सर्वः स्वाभिज्ञानकथनादिवृत्तांतः कथितः, तमाकर्ण्य च स शङ्कितस्तं मुनिमाकार्य पृष्टवान् ‘ यत् त्वया कथमेतदवगतम् ? ’ तेनोक्तं ‘ शास्त्रबलेन ’ चेदेवं तदा कथय ‘ किमेतस्या वडवाया गर्भे ’ तदा तेनोक्तं ‘ पंचपुंड्रः किशोरकोऽस्ति ’ इति मुनिनोक्ते तेन प्रत्ययार्थं तस्या वडवाया उदरं विदारितं निर्गतश्च तदंतःस्थितस्तादृशो गर्भः । तं च निरीक्ष्य संजातप्रत्ययेन तेनोक्तं ‘ चेदेतदेवं नाऽभविष्यत्तदा यद् वडवायाः कृतं तत्त्वाऽपि कृतमभविष्यत् । संप्रति मुक्तोऽसि व्रज समाधिना ’ एवं निमित्तपिंडो महादोषपोषनिबंधनमत्रापि । इत्युक्तं किंचिन्निमित्तपिंडस्वरूपम् ॥ १९ ॥

अथाजीवनापिंडस्वरूपं किमपि प्ररूप्यते तथाहि–आजीवनापिंडः पंचप्रकारो जाति १ कुल २ गण ३ कर्म ४ शिल्प ५ भेदतः । तत्र मातृपक्षोद्भवा जातिर्विप्रक्षत्रियादिरूपा वा १ कुलं च पितृपक्षोद्भवमुग्रभोगादिरूपं वाऽवसेयं २ गणस्तु मल्लसारस्वतादिवृंदरूपः ३ कृषिवाणिज्यादिकं च कर्म ४ चित्रकर्मसीवनादिरूपं च शिल्पम् ५ । एभिर्जात्यादिभिः पंचभिः प्रकारैस्ततुल्यताकथनजनितचित्तोत्कर्षानां पुरतस्तत्तुल्यमात्मानं निवेद्य यदशनादिसमादानं स आजीवनापिंडो जात्यादिभेदतः पंचप्रकारोऽपि परिहार्यः । इत्युक्तं किंचिदाजीवनापिंडस्वरूपम् ॥ २० ॥

अथ वनीपकपिंडस्वरूपं किमप्युच्यते । तथाहि वनीपको भिक्षाचरस्तद्वत् श्रमणब्राह्मणकृपणातिथिश्वानादिभक्तानामात्मानं तद्भक्तं दर्शयित्वा यदशनादि समादानं स वनीपकपिंडः । तत्र श्रमणाः पंचप्रकारा निर्ग्रंथशाक्यतापसगैरिकाजीवि-

कमेदतः । ब्राह्मणास्तु प्रसिद्धाः । कृपणास्तु दारिद्र्यांधछिन्नांगादयः । श्वानादीत्यत्रादिशब्दात् काकशुकगवादयोऽपि विज्ञेयाः । अत्र च श्रमणादिभक्तताप्रकटन श्रीपिंडनिर्युक्तिगाथाभिर्भावनीय तथाहि–' भुजति चित्तकम्म ठिया व कारुणिअ दाणरुइणो वा । अवि कामगदहेसु वि नस्सई किं पुण जईसु ॥ १ ॥ लोयाणुग्गहकारिसु भूमीदेवेसु बहुफल दाण । अवि णाम बंभबंधुसु किं पुण छक्कम्मनिरएसु ॥ २ ॥ किवणेसु दुम्मणेसु अ अबंधवाय कजुंगिअगेसु । पूयाहिज्जे लोए दाणपडाग हरइ दितो ॥ ३ ॥ पाएण देइ लोओ उवगारिसु परिचिएसु ऽज्झुसिए वा । जो पुण अद्धाखिन्न अतिहिं पूएइ त दाण ॥ ४ ॥ अवि णाम हुज्ज सुलहो, गोणाइण तणाइ आहारो । छिच्छिक्कारहयाण न हु सुलहो होइ सुणगाण ॥५॥ केलासभवणा एए, आगया गुज्झगा महिं । चरति जक्खरूवेण, पूयाऽपूया हिआऽहिआ ॥ ६ ॥ इति एव च श्रमणब्राह्मणादीना गुणोत्सर्पणाकरणे मिथ्यात्व स्थिरीकरणादयो दोषा भवेयुः । यदुक्त श्रीपिंडनिर्युक्तौ 'मिच्छत्तथिरीकरण उग्गमदोसा य तेसु वा गच्छे । चडुकारदिन्नदाणा पचत्थिग मा पुणो इतु ॥ १ ॥' तस्मात् श्रमणेन भक्तादिनिमित्त नैव विधेया तेषां प्रशसा इत्युक्त वनीपकपिंडस्वरूप ॥ २१ ॥

अथ चिकित्साऽपि प्रोच्यते । तथाहि–चिकित्सा द्विविधा सूक्ष्मा १ बादरा २ । तत्रौषधवैद्ययोः सूचने सूक्ष्मा चिकित्सा १ । बादरा तु वैद्यवदौषधादिकारापणेन पित्ताद्युपशामनवमनविरेचनादिक्रियाकारापणतोऽवसेया २ । आभ्या सूक्ष्मबादराभ्यां चिकित्साभ्यां यदशनादिग्रहण सा चिकित्सापिंडः । अयमपि व्याघ्रनिदर्शनेन महादोषपोषनिबंधनत्वाद् वर्जनीयः । तच्चेद

यथा केनापि भिषग्वरेण काननमध्ये गच्छता क्षुत्क्षामकुक्षिरीक्षाञ्चक्रे व्याघ्रोऽन्धः । तं च तादृग्विधं वीक्ष्य संजातकारुण्यातिशयेन तेन सज्जीकृतः स केनचिदौषधेन । तदनु तेन बुभुक्षाक्रांतेन भक्षितः प्रथमतया स एव वैद्यवरः । पश्चाच्च स प्रभूतप्राणिप्राणांतकारी विचचार वनांतरे । यथेयं व्याघ्रचिकित्सा कर्त्तुरपरेषां च प्राणिनां परिणामसुंदरा न समजनि तथा सततारंभिणामसंयतानां गृहस्थानामपि चिकित्सा न कस्मैचिद् गुणाय संजायते संयतस्य । तस्माच्चिकित्सापिंडः सर्वथैव वर्जनीयः सर्वसाधुभिः । इत्युक्तं चिकित्सापिंडस्वरूपम् ॥ २२ ॥

अथ क्रोधपिंडस्वरूपं प्ररूप्यते । तथाहि–विद्यामंत्रादिप्रभावमुच्चाटनमारणादिकं तपःप्रभावं तु शापदानादिकं तथा नृपादिप्रियत्वं तदीयदेहबलं वा क्रोधफलं वा निरीक्ष्य यद्ददाति दानाशनादिकं स क्रोधपिंडो निगद्यते । अत्र च घृतपूरक्षपकनिदर्शनम् । तथाहि–हस्तिकल्पे नगरे एको मासक्षपणांते मृतकभक्तमहे द्विजन्मधाम्नि विहर्त्तुं गतोऽभूत् । तदा च वेदगर्भेषु यथेच्छं घृतपूरेषु भुंजानेषु चिरादप्यसंप्राप्तघृतपूरः कोपाटोपादन्यस्मिन् पुनर्दास्यंतीत्युक्त्या स निर्ययौ । अथ च दैववशात्तत्सदने द्वितीयोऽपि मनुष्यः परासुरभूत् । साधुरपि तथैव तन्मासिके जगाम तदा च तथैव तांस्तदशनपरान्निरीक्ष्य चिरेणाप्यनासादितघृतपूरादिभिक्षः क्रुधा प्रागुक्तमेव प्रोक्त्वा तथैव पश्चाद् वलितः । पुनरपि तदीयमंदिरे तृतीयोऽपि मर्त्त्यो मृतः । तन्मासिकेऽपि मुनिस्तदेवोक्त्वा पश्चाद् वलमानो द्वारपालेन निरीक्षितस्तेन च तदखिलं तद्गृहाधिपतेर्निवेदितम् । तेनापि समुत्पन्नमृत्युभयेन निजापराधं क्षमयित्वा स साधुः प्रतिलाभितो घृतपूरैर्यथेष्टम् । यथाऽनेन साधुना क्रोधफलं दर्शयित्वा पिंडग्रहणकृतं तथाऽन्यैर्न कर्त्तव्यम् । इत्युक्तं क्रोधपिंडस्वरूपम् ॥ २३ ॥

कोऽपि कुलपुत्रकः प्राणप्रियादेशवशंवदः प्रभाते भोजनं प्रार्थितवाँस्तस्याः समीपे । तदा च तया शयनीयस्थया सा प्रोचे 'यदि बुभुक्षितोऽसि तद्चुल्लाभस्मापनय पानीयेंधनादि च समानय, यथा शीघ्रमेव भवंतं भोजयामि' इति तयोक्तः प्रतिदिनं तथैव कुर्वाणो भस्मापनयनात्संजातश्वेतांगुलिर्लोकैः श्वेतांगुलिरित्युक्तः १ । अथ द्वितीयस्वरूपं प्रोच्यते, तथाहि-कश्चित् कांतावशवर्त्ती तया प्रोक्तस्त्वयैव सर्वदा सरोवराद् वारि समानेतव्यं, स च तं प्रियादेशं गुर्वादेशमिव बहुमन्यमानः प्रत्यहं तथैव विधत्ते । अथ च दिने जनलज्जयांधकारे स याति कासारं, तदा च बकास्तन्निकटनिवासिनः समुड्डीयंते । एतच्च जनैर्विज्ञाय तस्य बकोड्डायीति नामांतरं विरचितम् २ ॥ अथ तीर्थस्नातुः कथ्यते स्वरूपम् । तथाहि-कोऽपि प्राणप्रियायत्त-प्राणः प्रार्थितवाँस्तस्याः सविधे स्नानं तदा च तयोक्तं 'याहि स्नानसामग्रीं समादाय जलाशये तत्रैव च स्नानं विधाय शीघ्रं समागच्छेः स्वगृहं' स च तथा विदधानो जनैस्तीर्थस्नातेत्युक्तः ३ । अथ किंकरस्वरूपं प्ररूप्यते, तथाहि-कश्चिद्-यितावशंवदः प्रत्यूषसमये समुत्थाय तां प्रति वक्ति 'कथय प्रिये किं करोमि ?' तदा च सा वक्ति 'प्रथमं पानीयमानय' तदानयित्वा च स पृच्छति 'पुनः किं करोमि' सा वक्ति 'गृहं प्रमार्जय' एवं च्छगणापनयनदलनादिनिखिलादेशानां प्रांते किं करोमीति कथनाज्जनैः स किंकर इत्युदीरितः ४ । अथ हदनस्वरूपम् । कोऽपि प्रियादेशादपत्यानां क्रीडापन-मूत्रपुरीषादिधापनं तत्खरंटितवसनक्षालनादिना संजातदुर्गंधाम्बरो जनैर्हदन इति नाम्ना निगदितः ५ । अथ गृध्रावरं-खिकथा, तथाहि-कश्चिद् भोक्तुमुपविष्टः प्रियासमीपे व्यंजनदधितक्रादि याचमानस्तया गृहकर्मव्यापृतया साधिक्षेपं प्रोक्तो यदग्रतः समागत्य गृहाण । स च तदादेशात् पुनः पुनर्गृध्र इव रिंखंस्तन्निकटे यातीति जनैर्गृध्रावरिंखीत्युक्तः ६ ।' इत्थं

च तेषां षण्णां गृहिणीवशवर्तिनां स्वरूपं समाकर्ण्य पार्षद्यैरुक्तं एतैः षड्भिरप्येक एवाऽयं देवदत्तः । ' एवं च स देवदत्त' स्त्रोपहासमसहमानः क्षुल्लकं प्रति प्रोक्तवान् 'किममीषां वचोभिर्याचय यते ! मनोऽभिमतम् ।' तदा च क्षुल्लकेनोक्तं ' यद्येवं तर्हि त्वदीयसदनाद्देहि मह्यं साज्यगुडाः प्रभूताः सेवतिकाः ' । अथ चोत्थाय तद्दानार्थमसौ सौवसदनं व्रजत् क्षुल्लेन ज्ञापितो यथाभूतं तत्प्रियावृत्तांतम् । सोऽपि तं विज्ञाय क्षुल्लं द्वारे स्थापयित्वा गतोऽतर्निकेतनं, गत्वा च कस्यचित् कार्यस्य मिषेण प्रियां सौधोपर्यारोहयित्वा तेन निश्रेणी दूरीकृता क्षुल्लश्च मध्ये समाकारितः । दत्ताश्च सघृतगुडास्तस्य यथेष्टं सेवतिकाः क्षुल्लेनापि च पूर्वकृतनासापर्पणसंकेतस्मारणकृते स्वनक्रोपर्यङ्गुलीं चालयता गृहीतास्ताः । यथाऽनेन क्षुल्लेन मानपिंडो गृहीतस्तथाऽन्यैः श्रमणसत्तमैर्न ग्राह्य इत्युक्तं मानपिंडस्वरूपम् ॥ २४ ॥

अथ मायापिंडस्वरूपं प्ररूप्यते । तथाहि मायया परवचनाकया विविधप्रकारं स्वकीयरूपं विधाय यत्समादत्ते यतिः पिंडं स मायापिंडः । अत्र चाषाढभूतेरुदाहरणम् । तथाहि–राजगृहनगरे सिंहरथो नृपतिः पालयति नीतिमार्गेण साम्राज्यम् । अन्यदा च तत्र धर्मरुचिनामानः समाजग्मुः सपरिकराः । तेषां च विनेयो विविधलब्धिनिधानमाषाढभूतिनामा विहरन् नटगेहे जगाम । तत्र च तेनैको मोदकः समासादितस्तदनु स चिंतयामास अयमाचार्याणां भविष्यति । तदनु काणरूपं कृत्वा द्वितीयवारं गतः, तदाऽप्येको मोदकः प्राप्तः, अयमुपाध्यायानाम् । तदनु कुब्जरूपेण तृतीयवारमपि तं जग्राह, अयं च सांघाटिकयतेः । अथ च कुष्ठिरूपेण तुरीयवारमपि स तं जग्राह । एतच्च वातायनस्थितेन नटेन निरीक्ष्य चिंतितं यद्यं तिष्ठत्यस्मदावासे तदा नाट्येन बहुद्रव्यमुपार्जयतीति । तमाकार्य यथेष्टं मोदकान् वितीर्य स तेन भणितो यत्त्वया सर्वदैव समागन्त

व्यमत्राहारग्रहणहेतवे । अथ च तेन नटेन स्ववल्लभा भणिता यदयं कलानिधिस्तथोपवरणीयो यथा त्वत्तनयानुरक्तः प्रतिदिनं समेत्यात्मीयसौधे । इति तेन शिक्षितया तया स नित्यं स्वधाम्नि समागच्छन् सौवांगोद्भवाभ्यां तथा लोभितो यथाऽऽमकुंभ इवांभोभिस्तत्संबंधिहावभावादिभिर्भिन्नो गुरूनवगणय्य त्यक्तव्रतो मद्यमांसादि नासेवनीयमिति प्रतिपद्य तत्पाणौ कृत्य तस्थिवाँस्तत्रैवावासे । अन्यदा च नाट्यपेटकपरिवृतः स नृपधाम जगाम । तदा च नृपतेर्द्यूतदेवनव्याक्षिप्ततया स पश्चाद् वलितः । अथ च तद्वल्लभाभ्यां स्ववल्लभस्य कालक्षेपं तत्र प्रभूतमवधार्य सुरापानविरचितं तद्विसंस्थुलितादेहात् तादृशे समालोक्य स चिंतयामास विषयविरक्तो धिग् मां यदेकांतहितश्रीगुरुचरणसमाराधनमपहायैवंविधस्वभावयोरप्येतयोरनुरागं विधाय मुधैव हारितवानपवर्गनिबंधनं श्रीसर्वसंयमसमाराधनं, तदथापि करोमि स्वकर्मवनदहनं तत्प्रतिपत्तिपुरस्सरं तदाराधनेन । इति विचिंत्य सदनान्निर्गच्छन्नटप्रेरिताभ्यां ताभ्यां याचितजीवनोपायः पात्रीकृतपंचशतमितराजसुतः सप्तदिनैः श्रीभरतसार्वभौमनाटकं तावदासूत्रयामास यावदादर्शगृहं प्रविष्टस्तत्र चांगुलीयकरत्नपाताद् भरतवच्छरीरासारतादि भावयन् समवाप पंचमावबोधम् । तदनु स समात्तयतिर्लिगो नृपतिप्रभृतीन् प्रतिबोध्य राजांगजपंचशत्याश्चारित्रं वितीर्य भव्यजनबोधनपरो विजहार वसुंधरावलये । यथाऽनेन महात्मना पूर्वं मायापिंडो जगृहे तथान्यैः साधुश्रेष्ठैर्न समादेयः । इत्युक्तं मायापिंडस्वरूपम् ॥ २५ ॥

अथ लोभपिंडस्वरूपं किंचिदुच्यते । तथाहि–इदमेव स्निग्धमधुरं मोदकादि गृहीष्ये इत्याशयवान् यदटति प्रभूतसमयं स लोभपिंडः १ । अत्र च निदर्शनं सिंहकेसरक्षपकः । तथाहि चंपायां यतिरेकस्तपस्वी पारणकदिने सिंहकेसरमोदकविह-

रणेच्छु कस्मिंश्चिदुत्सवदिने विहरणार्थं गतस्तदलाभात्सञ्जाततदभिलापातिरेकस्तानेव मनसि धारयन् धर्मलाभस्थाने सिंहकेसरा इत्येव भणन् बभ्राम यामद्वय यामिन्याः। अथ चार्द्धरात्रेऽपि स तथैव पर्यटन् विज्ञाततदाशयेनविज्ञशिरोमणिना केनचित् श्रमणोपासकेन सिंहकेसरमोदकैः स्थाल परिपूर्य तैः प्रतिलाभितः। तदनु स्वस्थीभूत त स श्राद्धः प्रश्नयामास 'भगवन्! पूर्वार्द्धप्रत्याख्यान किं पूर्णं न वे?'ति तदनु दत्तोपयोगेन यतिना ऊर्ध्वमालोकने निशाकर प्रस्फुरत्कर निरीक्ष्यार्द्धरात्रवेलां विज्ञाय त प्रति प्रोक्त 'महानुभाग! भव्य कृत भवता, यदनाचारप्रवृत्तोऽह युक्त्या प्रतिबोधितोऽस्मी'ति तत्पुरतः प्रनलपन् नगराद् बहिः स निर्जगाम। तत्र च प्रासुकस्थण्डिले विधिना तत्परिष्ठापन कुर्वन् विशुद्धतमाध्यवसायतः पञ्चमाव-बोधमवाप। यथाऽनेन मुनिसत्तमेन लोभपिंडो विहृतस्तथाऽन्यैर्यतिभिर्न विहार्य'। इत्युक्त लोभपिंडस्वरूपम् ॥ २६ ॥

अथ पूर्वपश्चात्सस्तवदोषस्वरूप उच्यते। तथाहि सस्तवो द्विविधो दायकगुणस्तवरूपः स्वाजन्यप्रकटनरूपश्च। प्रत्येक-मेकैकोऽपि द्विप्रभेदः पूर्वसस्तवपश्चात्सस्तवभेदत.। तत्र च दातुर्दानात् प्रथम गुणस्तवने पूर्वसस्तवः। स चैव 'एसो सो जस्स गुणा वियरंति अवारिया दस दिसासु। इहरा कहासु सुणिमो पच्चक्ख अज्ज दिट्ठोसि ॥ १ ॥' दानानंतर तु गुणोत्कीर्त्तने पश्चात्सस्तवः। स चाय विमलीकयम्ह चक्खू जहत्थया वियरिआ गुणा तुज्झ। आसि पुरा मे सका सपय निस्सकिय जाय ॥ १ ॥' सबधप्रकटनरूपसस्तवोऽपि द्विविधः पूर्वपश्चाद्भेदतः। तत्रात्मीय परकीय च वयःस्वरूप विज्ञाय यादृशी भवती तादृग्विधैव मम माता स्वसा पुत्री वा समभवदित्यादिभणने पूर्वसस्तवः। पश्चात्-सस्तवस्तु दायकश्वश्रूश्वसुरादिप्रतिरूपता भणने विज्ञेयः। इत्युक्त किंचित् पूर्वपश्चात्सस्तवदोषस्वरूपम् ॥ २७ ॥

अथ विद्यामंत्रादिपिंडानां स्वरूपं प्ररूप्यते । तत्र जापहोमादिसाध्यस्त्रीदेवताधिष्ठिता चाक्षरपंक्तिर्विद्या । एतद्विपर्यये तु मंत्रो विज्ञेयः । चूर्णशब्देन पुनस्तिरोधानवशीकरणादिकार्यसाधका नेत्रांजनभालतिलकादयोऽवसेयाः । योगास्तु सौभाग्यदौर्भाग्यकराः श्रीचंदनधूपादिद्रव्यविशेषरूपाः; अथवा जलस्तंभनभोगमनादिसाधकाश्चरणप्रलेपप्रभृतयः । एते च पिंडाद्यर्थं प्रयुज्यमाना महादोषपोपनिबंधनम् । अत्र विद्यापिंडे निदर्शनम् । तथाहि–कस्मिंश्चिन्नगरे द्रव्यलिंगीनां परस्परमुल्लापे तन्मध्यादेकेन तेनेत्युक्तं चेद् भवतामनुज्ञा भवति तदाऽमुकगृहाद्दापयामि भवतां घृतगुडवसनानि । अथ च तैरनुज्ञातः स गतस्तत्सदने । तदनु तद्विद्यया चाधिवासितेन तेन गृहिणा प्रोक्तं ‘ किं विलोक्यते भवताम् ? ’ तेनोक्तं ‘ घृतगुडवस्त्रादि मह्यं देहि ’ इति तेनोक्तः स गृही तस्मै तद्दद्दौ यथेप्सितम् । तदनु पश्चान्निवृत्तेन तेन तस्यां विद्यायामपहृतायां स गृही पूत्चकार केनाऽपि धूर्त्तेन मुष्टो हहाऽस्मीति । अस्मिँश्च विद्यापिंडे गृह्यमाणे जनावर्णवादशासनापभ्राजनात्मसंयमविराधनादयः प्रभूता दोषाः संभवेयुः । एवं मंत्रादिपिंडेष्वपि दोषभावना विधेया ॥ २८ ॥

अथ मंत्रपिंडे पादलिप्ताचार्योदाहरणम् । तेन हि मंत्रज्ञानपुरस्सरं स्वजानूपरि प्रदेशे प्रदेशिनीं भ्रामयता सुदंडनृपतेः शिरोऽर्तिरुपशमं नीता, तदनु तेन तत्सदनादशनादि समासादितं । यदुक्तं श्रीपिंडनिर्युक्तौ ‘ जह जह पएसिणी जाणुगम्मि पालित्तओ भमाडेइ । तह तह सीसे वियणा पणस्सइ सुदंडरायस्स ॥ २९ ॥

अथ चूर्णपिंडे क्षुल्लद्वयकथा । तथाहि–पाटलीपुरनगरे केचिदाचार्याः क्षीणजंघाबला दुर्भिक्षे स्वगणमन्यत्र विहार्य तस्थिवांसः । क्षुल्लद्वयं च विहार्यमाणमपि तेषां पार्श्वे स्थितम् । अथ च दुर्भिक्षे अन्यत्राहाराप्राप्त्या तन्नगरनरपतेश्चंद्रगुप्तस्य भोजना-

वसरे स्थालपार्श्वयोरुपविश्य तन्मध्यतः प्रतिदिनमाहारग्रहणं कुर्वंतस्तौ चूर्णांजनाजितनयनतयाऽदृश्यरूपौ । अतश्च चद्रगुप्ते नरपतेरवमौदर्येण देहदौर्बल्यं समालोक्य निरामयकायतायामपि चतुर्बुद्धिनिधिश्चाणक्यामात्यश्चिंतयामास । नूनं कोऽपि भोजनावसरेऽजनसिद्ध क्षमापालस्थालगतां रसवतीं भुनक्ति, तेनावमौदर्यतो महीपतितनुकृशता जायमानाऽस्तीति विचिंत्य, तत्परिज्ञानकृते नृपतिजेमनसमये सौधद्वारं पिधाय धूमस्तेन कारितः । ततश्च तौ क्षुल्लौ नयनाऽजनगलनात् साक्षान्निरीक्षितौ तेन सचिवपुंगवेन। निरीक्ष्य च तयोर्विधाय रोषं तदनु तेन श्रीगुरव उपालब्धाः । एवं चूर्णपिंडो महादोषपोषहेतुः ॥ २० ॥

अथ योगपिंडे दृष्टांतस्तथाहि–नद्युपकंठे ब्रह्मद्वीपे पंचशती तापसानां परिवसति स्म। ते च तापसाः पारणकदिने कुलपति कारितपादलेपाः स्रोतस्विनीं समुत्तीर्य सलिलोपरि चलनेन समायांति । तदा जने एवं प्रघोषोऽभूत् यदेते तपसो माहात्म्येन जलोपरि चलतोऽपि न निमज्जंति एवं जने तेषां प्रशंसा, जैनेषु च न कोऽपि तपोलब्धिविशेष इत्यार्हतमतनिंदा च समभूत् । एतच्च श्राद्धैः श्रीआर्यसमिताचार्याणां निवेदितम्। गुरुभिरुक्तं यदेते युष्माभिश्चलनधावनपूर्वं भोजनीया यथैषां पादलेपोऽपैति, तदनु चलनक्षालनपुरस्सरं भोजयित्वा नागरिकजनैः सममनिच्छतोऽपि तटीकूलं यावत्ते संप्रेषिताः । तदनु ते चिंतातुरा जाताः स्य यद्भुमवरिनति विचिंत्य सरिद्वारिणि प्रविष्टास्तत्र निमज्जंतो नद्यां योगचूर्णं निक्षिप्य रक्षिताः श्रीआर्यसमिताचार्य्यैस्तदनु गुरुमाहात्म्यं निरीक्ष्य प्रतिबुद्धाः प्रव्रजितास्तद्गुरूणां समीपे जने जिनमतप्रभावना च समभूत् । यथा एभिस्तापसैः पादलेपं विधाय जने स्वप्रभावनां कृत्वा पिंडो गृहीतस्तथा साधुभिर्न ग्राह्यः । अर्हत्मतप्रभावना कृते तु एते विद्यामंत्रादयो यतनया श्रीआर्यखपुटाचार्यादिभिरिव प्रयोक्तव्या दर्शनोद्दीपकत्वात् ॥ २१ ॥ इत्युक्तं विद्यापिंडादिस्वरूपम् ।

चूर्णपिण्ड-योगपिण्ड-मूलकर्म-पिण्ड-स्वरूपम्, एषणादोष-दशके च म्रक्षित-दोषः ।

अथ मूलकर्मस्वरूपं प्ररूप्यते । तथाहि–सौभाग्यार्थं मज्जनरक्षाबंधधूपनादिविधानं तथा गर्भस्य करणस्तंभनघातनादि तथा पाणिग्रहणस्य कारापणादि भवबनस्य मूलत्वात् मूलकर्मतया प्रोच्यते । एतच्च महादुरितनिबंधनं षड्जीवनिकायवध-मैथुनप्रवृत्त्यंतरायादिदोषपोषहेतुत्वात् । अत्रापि दृष्टांतभावना श्रीपिंडनिर्युक्त्यनुसारेण विधेया ॥ ३२ ॥ इत्युक्तं षोडशविधोत्पादनादोषस्वरूपं तदुक्तौ च प्रपंचितं किंचिद् द्वात्रिंशद्गवेषणास्वरूपम् ।

एषणादोषदशकस्वरूपं प्ररूप्यते, तथाहि–शंकित१म्रक्षित२निक्षिप्त३पिहित४संहृत५दायको६न्मिश्रा७ऽपरिणत८लिप्त९छर्दित१०नामानो दशैषणादोषा भवेयुः । तत्र कार्मिकादिदोषवत्तया शंकितस्याशनप्रभृतिकस्य ग्रहणे भक्षणे च चतुर्भंगा भवंति । तथाहि शंकिततया ग्रहणे शंकिततया भोगः १ । शंकिततया ग्रहणे च कथंचित्तद्‌वगमान्निश्शंकिततया भोगः २ । निःशंकिततया ग्रहणे च कुतोऽपि हेतोर्दोषाशंकायां शंकितया भोगः ३ । निश्शंकिततया ग्रहणे निश्शंकिततया भोगः ४ । एतेषु श्रुति(४)प्रमितेषु भंगेषु द्वितीयतुरीयौ भंगौ शुद्धौ भोजनस्य निश्शंकितत्वात् । शेषभंगयोस्तु यं दोषमाधाकर्मादिकमाशंकते तमापद्यते यतिषोडशोद्गमदोषदशैषणादोषाणामन्यतरं इत्युक्तः शंकितदोषः ॥ ३३ ॥

अथ म्रक्षितदोषस्वरूपं किंचिदुच्यते, तथाहि–म्रक्षितं द्विधा सचित्ताचित्तभेदतः, तत्र प्रथमं पृथ्वीवारिवनस्पतिम्रक्षित-भेदात्त्रिविधम् । तत्र सचित्तपृथिवीरजोऽवगुंठितं सरजस्कम्रक्षितमुच्यते । सेटिकामृत्तिकालवणोपहरितालहिंगुलमनःशिलागैरिकांजनादिम्रक्षितं पृथिवीकायम्रक्षितं, मिश्रं कर्दमम्रक्षितं कीर्त्यते, एते सर्वेऽपि भेदाः पृथ्वीकायम्रक्षितमध्येऽवतरंति । अप्काय-म्रक्षितं तु पूर्वकर्मपश्चात्कर्मस्निग्धोदकार्द्रभेदाच्चतुष्प्रकारम् । तेषु दानात् पूर्वं पाण्यमत्रयोः क्षालने पुरःकर्म, दानाऽनंतरं तु

तयोः क्षालने पश्चात्कर्म, ईषल्लक्ष्यमाणजलस्नेह तु स्निग्ध, स्पष्ट प्रतीयमाननीराद्रे तूदकार्द्रम् । वनस्पतिकायम्रक्षित तु प्रत्येकानतवनस्पतिम्रक्षितभेदाद् द्विविधम् । अचित्तम्रक्षित तु गर्हितेतरससक्ताचित्तम्रक्षितरूप, तत्र ससजति लगति सलेपत्वात्कीटिकामक्षिकादयः प्राणिनो येषु तानि ससक्तानि घृतगुडतैलप्रभृतिकानि । अथवा ससजति उत्पद्यते जतवो येषु तानि ससक्तानि दिनद्वयातीतदधिप्रभृतीनि । उक्त च श्रीपिंडनिर्युक्तौ ससज्जिमेहिं वज्ज, अगरहिएहिं पि गोरसदवेहिं । महुघयतेल्लगुडेहिं य, मा मच्छिपिपीलियाघाओ ॥ १ ॥ एव त्रिविधसचित्तगर्हितेतरससक्ताचित्तम्रक्षितहस्तभाजनाभ्यां दीयमानमशनादि वर्जनीय यतिसत्तमैः । इत्युक्त म्रक्षितदोषस्वरूपम् ॥ ३४ ॥

अथ निक्षिप्तदोषस्वरूप किंचित् प्रपञ्च्यते । तथाहि निक्षिप्त पृथिव्युदकपावकपवनप्रत्येकानतवनस्पतिकायेषु सचित्तेषु मिश्रेषु [redacted] तथा द्वीन्द्रियादिषु त्रसेष्वनतरतया परम्परतयाऽवस्थापितमित्यनतरपरपराभेदाद् द्विप्रकारमपि निक्षिप्त परिहार्यम् । इत्युक्त निक्षिप्तस्वरूपम् ॥ ३५ ॥

अथ पिहितस्वरूप किमप्युच्यते तथाहि—पिहितशब्देन देयमशनादि केनाप्यपरवस्तुना छादितमुच्यते । अत्र च चतुर्भंगी सचित्तेन सचित्तम् १ अचित्तेन सचित्त २ सचित्तेनाचित्तम् ३ अचित्तेनाऽचित्तम् ४ । एतेषु चतुर्षु भगेषु प्रथमभगत्रयम शुद्धम्, अत्यभगस्तु शुद्धः । तत्रापि गुरुलघुपदाभ्या प्राग् चतुर्भंगी भवति । तेषु द्वितीयतुरीयभगौ शुद्धौ निरपायत्वात् । शेषौ द्वौ पुनरशुद्धौ सापायत्वात् । इत्युक्तः पिहितदोषः ॥ ३६ ॥

अथ सहृतदोषस्वरूप प्ररूप्यते । तथाहि—येन हस्तेन भाजने वा कृत्वा दात्री यतेरशनादि वितरितु वांछति तत्रा

परं किमप्यदेयमस्ति सचित्तमचित्तं मिश्रं वा तदन्यत्र पृथिव्यादौ भाजनादौ वा सचित्तेऽचित्ते मिश्रे वा क्षिप्त्वा तेन हस्तेन भाजनेन वा कृत्वा यदा दत्ते दात्री तदा संहृतदोषो भवेत् । अत्र सचित्ताऽचित्तमिश्रभेदैश्च तिस्रश्चतुर्भंग्यो भवंति । तथाहि— एका चतुर्भंगी सचित्तमिश्रपदाभ्यां, द्वितीया सचित्ताचित्तपदाभ्यां, तृतीया मिश्राचित्तपदाभ्याम् । तत्र सचित्ते सचित्तं संहृतं १ मिश्रे सचित्तं २ सचित्ते मिश्रं ३ मिश्रे मिश्रं ४ चेति प्रथमा । अचित्ते सचित्तं १ सचित्ते सचित्तं २ सचित्ते अचित्तम् ३ अचित्ते अचित्त ४ मिति द्वितीया । तथा मिश्रे मिश्रम् १ अचित्ते मिश्रं २ मिश्रे अचित्तम् ३ अचित्ते अचित्तमिति ४ तृतीया । अत्र प्रथमचतुर्भंग्यां सर्वेष्वपि भंगेषु न कल्पते । द्वयोस्तु प्रथमेषु त्रिषु भंगेषु प्रतिषेधश्चरमे पुनर्भजना । अत्र च षड्जीवनिकायानपेक्ष्य स्वस्थानपरस्थानचिंतया नैरंतर्येण पारंपर्येण च बहूनि भंगशतानि भवंति । एतेषां च भंगानां मध्ये यद्सचित्तमिश्रसंघट्टनदोषस्तत्र न कल्पते । शेषेषु पुनर्भंगेषु कल्पते । तत्रापि स्तोके स्तोकं १ स्तोके बहुकं २ बहुके स्तोकं ३ बहुके बहुकम् ४ । एवं स्तोकबहुपदाभ्यां चतुर्भंगी भवति । तत्रापि प्रथमतृतीयभंगावाचीर्णौ द्वौ त्वनाचीर्णौ । अत्रापि चेदल्पभारं भाजनमुत्क्षिप्य वितरति तदा ग्राह्यं नेतरथा भाजनभंगषट्कायवधादिदोषसंभवात् । उक्तं च श्रीपिंडनिर्युक्तौ 'जत्थ उ थोवे थोवं, सुक्के उल्लं च छुहइ तं गब्भं (गेज्झं) । जइ तं तु समुक्खेउं, थोवाहारं दलइ अन्नं ॥ १ ॥' इत्युक्तः संहृतदोषः ३७ ।



अथ दायकदोषस्वरूपं किंचिदुच्यते । तथाहि—स्थविराप्रभुपंडकवेपमानज्वरितांधाव्यक्तमत्तोन्मत्तछिन्नकरचरणगलत्कुष्ठनिगडतांदुकितपादुकारूढादिभिर्दायकैर्दीयमानस्य समादाने दायकदोषः स्यात्तत्र स्थविरः सप्ततिवर्षोपरिवर्ती, तद्धस्तेन हि

गृह्यमाणे आहारे भाजनाहारनिपतनषड्जीवनिकायविराधनादयो दोषाः सम्भवेयुः । स्थविरोऽपि चेद् दृढसंहननोऽहीनपञ्चेन्द्रियश्च स्यात्तदा तत्करविहरणेऽपि न दोषः १ । तथाऽप्रभुर्वितीर्यमाणाशनादेरस्वामी भृतकादिस्तेन दीयमाने प्रभोरप्रीतिः स्यात् २ । तथा षण्ढो नपुंसकस्तेन हि वितीर्यमाणे जनापवादशङ्कादयो दोषा भवेयुः ३ । तथा वेपमानः कम्पमानस्तेन दीयमाने भाजनबहिरशनादिपतनपरिशाटनभाजनभङ्गादयो दोषाः ४ । तथा ज्वरितो ज्वररोगपीडितस्तत्पाणिना विहरणे हि ज्वरसंक्रमणजनापवादप्रभृतयो दोषाः ५ । तथाऽन्धेन दीयमाने षड्जीवनिकायवधसंचलनपतनभाजनबहिरशनादिप्रक्षेपणजनगर्हादयो दोषाः ६ । तथाऽव्यक्तो बालो जन्मतो वर्षाऽष्टकान्तर्वर्ती, तदन्नभाजनं हस्तात् पातयति देयं वा पात्राद् बहिः क्षिपति अधिकं वा वितारयति, ततश्च तज्जननीप्रद्वेषषट्कायवधादयो दोषाः ७ । तथा मत्तः मदिरापानोत्थमदविकलस्तेन दीयमाने आलिङ्गनाहननपात्रभङ्गगालीप्रदानप्रवचनखिंसाद्या दोषाः ८ । तथोन्मत्तस्तत्र पीतमद्यवद्दोषा वाच्याः ९ । तथा छिन्नकरचरणसकाशाद् भिक्षादाने हि जनापवादादयो दोषाः १० । गलत्कुष्ठसकाशाद् भिक्षाग्रहणे हि तद्रोगसंक्रमादयो दोषाः ११ । तथा निगडितो लोहमयबन्धनेन बद्धः, अन्दुकितश्च दारुमयहस्तबन्धनेन बद्धः । एताभ्यां सकाशे भिक्षासमादाने तद्बाधासम्भवादयो दोषाः १२ । १३ । तथा पादुकारूढः काष्ठमयोपानत्समारूढः, तत्सकाशादाहारग्रहणे हि जीवविराधनादयो दोषाः । पादुकारूढादिभिरित्यत्रादिशब्दात् कण्डयत्यादयो दायकभेदाः संगृहीताः । तत्र मुशलघातैरुदूखलप्रक्षिप्तानि शाल्यादिबीजानि श्लक्ष्णयती कण्डयती प्रोच्यते । तया च दीयमानेऽशनादिकं बीजसंघट्टादयो दोषाः १५ ॥ तथा या स्त्री जीरकलवणादि शिलायां पिनष्टि मृद्नाति तयाऽपि दीयमाने पूर्वोक्त एव दोषः १६ । तथा या भृज्जति स्फोटयति

तप्तकडिहल्लकादौ चनकादि । तयाऽपि वितीर्यमाणे चनकदाहादिदोषसंभवः १७ । तथा या भुंक्ते सा चेदाचमनं विधाय वितरति तदाऽप्कायविराधना । अथान्यथा तदोच्छिष्टमप्येते न त्यजंतीति जनापवादः स्यात् । तत्र च गरीयान् दोषः यदुक्तं छक्कायदयावंतो वि, संजओ दुल्लहं कुणइ बोहिं । आहारे नीहारे, दुगुंछिए पिंडगहणे वि ॥१॥ १८ । तथा मंथानेन दधिमथनं कुर्वती चेद्ददाति तदा सा दध्यादिलिप्तकरा प्राणिव्यपरोपणं कुर्यादित्यादयो दोषाः १९ । तथा दलनं कुर्वती चेदुत्थाय विश्राणयति तदा तत्र बीजसंघट्टादयो दोषाः २० । तथा स्थालीतः समाकृष्य स्थगतिकादावग्रभक्तं स्थापयित्वा चेद् वितरति तदा प्रवृत्त्यादयो दोषाः २१ । तथा महद् भाजनं नामयित्वा चेद्दत्ते तदापि पीलिकादिप्राणिवधादयो दोषाः २२ । तथा ऊर्ध्वाधस्तिर्यग्लक्षणैस्त्रिभिः प्रकारैः काष्ठकंटकगवादिभ्यः सकाशात् संभाव्यमानाभिघातादिप्रत्यपाया या तस्याः सकाशादशनादिसमादाने तदपायप्रवचनोड्डाहादयो दोषाः २३ । अथवा कूलवालकमुनिव्रतत्याजनपरमागधिकागणिकावद् या सप्रत्यपाया शाकिनीप्रभृतिका वा तत्सविधेऽप्याहारग्रहणात् संयमात्मविराधनादयो दोषाः २४ । तथा या योषित् कर्त्तयति पूणिकाः सूत्रीकरोति २५ । या च लोढयति कर्पासं निरस्थिकं कुरुते २६ । या च विकीर्णयति रुतं हस्ताभ्यां स्थूलकं पुनः पुनः सूक्ष्मं विधत्ते २७ । या च रूतं पिंजनेन मृदूकरोति २८ । एताभिश्चतसृभिर्दीयमाने कर्पासास्थिकसंघट्टनदेयवस्तुलिप्तहस्तधावनादिदोषसंभवः । तथा याऽष्टमासिकगर्भा तस्याः सकाशादशनादिग्रहणे निषदनोत्थानाभ्यां गर्भपीडासंभवादयो दोषाः । अत एव स्थविरकल्पिका नवममासे गुर्विणीपाणिना न विहरंति, गच्छनिर्गता जिनकल्पिकादयस्तु प्रथमदिनादारभ्य तत्करविहरणं परित्यज्यंति २९ । तथा या बालवत्सा केवलस्तन्योपजीविशिशुका । तया दीयमाने निक्षिप्तस्य

शिशोर्मार्जारादिभ्यो विनाशसंभवः। निक्षिप्यमाणस्योत्क्षिप्यमाणस्य च शिशोरतिसौकुमार्येण परितापनादयो दोषाः ३०। तथा षट्कायान् हस्ते गृह्णन्त्या अथवा तानेवाऽनन्तरं परम्परं वा घट्टयन्त्याः षट्कायारंभं कुर्वत्या वा तथा श्रमणमागतं निरीक्ष्य षट्कायान् भूमौ निक्षिपन्त्या वा हस्तेन गृह्यमाणे षट्कायविराधनादयो दोषाः ३१। ३२। ३३। ३४। तथा या साधारणं बह्वायत्तं दत्ते। तत्राऽनिसृष्टवद्दोषा वाच्याः ३५। तथा या चौर्यं कृत्वा दत्ते तत्र तु दोषाः प्रतीता एव ३६। तथा या परकीयमिदमित्युक्त्वा वितरति तत्र स्वामिनाऽननुज्ञातेऽदत्तादानादयो दोषाः ३७। तथा या पदार्थं परनिमित्तं कार्पटिकादि-दाननिमित्तं कल्पितं दत्ते तत्रान्तरायकरणादयो दोषाः ३८। अत्र च कण्डयतीत्यादिषु प्रायः स्त्रीणामेव मुख्यत्वात्तद् विशेषणकरणम्, एभिः स्थविरादिभिर्दायकैर्दीयमानमुत्सर्गतो वर्जनीयम्। अपवादपदे तु पूर्वोक्ततथाविधदोषासंभवे विहार्य-मपि इत्युक्तं किंचिद्दायकदोषस्वरूपम् ॥ ३८ ॥

अथोन्मिश्रदोषस्वरूपं किंचिदुच्यते। तथाहि अनाभोगादौत्सुक्यात् स्तोकत्वात् प्रत्यनीकत्वाद् वा साधूनां दानविषये योग्यमयोग्यं च द्रव्यमेकीकृत्य यद्दीयते तदुन्मिश्रमुच्यते। अत्र च मिश्रमचित्ताचित्तपदैः संहृतवच्चतुर्भंग्यो वाच्याः। तत्र च मिश्रसचित्तमिश्रितमकल्प्यम्, अचित्तमिश्रिते तु स्तोकबहुपदाभ्यां संहृतवच्चतुर्भंगी भवति। तत्र प्रथमतृतीयभंगौ शुद्धौ द्वौ त्वशुद्धौ। इत्युक्तं किंचिदुन्मिश्रदोषस्वरूपम् ॥ ३९ ॥

अथाऽपरिणतदोषस्वरूपं प्ररूप्यते। तथाहि अपरिणतं द्विविधं द्रव्यापरिणतं भावापरिणतं च। तत्र यद्दातव्यमेवाप्रासुकं स्यात्तद् द्रव्यापरिणतम् १। भावस्त्वध्यवसायः, स च देयवस्तुस्वामिनोर्द्वयोर्मध्यादेकस्य परिणतो दानविषये इतरस्य तु

न, अथवा विहरणार्थगतयतिद्वयमध्याद्दीयमानमशनादि एकस्य मनसि शुद्धतया परिणतं द्वितीयस्य तु न, तद् भावापरिणतम् २ । इत्युक्तोऽपरिणतदोषः ॥ ४० ॥

अथ लिप्तदोषस्वरूपं किमप्युच्यते । तथाहि यस्मिन् दधिदुग्धतक्रतीमनादिद्रव्ये दीयमाने यः स्यात्करभाजनादौ लेपः तल्लेपयुक्तं द्रव्यं लिप्तमुच्यते । तच्च विशेषकारणं विना न ग्राह्यम्, यदुक्तं घेतव्वमलेवकडं लेवकडे मा हु पच्छकम्माई । न य रसगेहिपसंगो इअ वुत्ते चोयगो भणइ ॥ १ ॥ ननु यदि लेपवद् द्रव्यग्रहणे पश्चात्कर्मादयो दोषा भवेयुस्तेन तन्न गृह्यते । एवं चेद्वरं मा कदापि मुनिर्भुक्ताम्, एवं च सर्वेषां दोषाणां मूलमेवोच्छिन्नं भवेत् । अत्रोत्तरं सकलकालं क्षपणमेव विदधतः साधोश्चिरसमयभाविनां नियमतपःसंयमादीनां हानिर्बोभवीति । तस्मात् प्रव्रज्याप्रतिपत्तिसमनंतरमेव यावज्जीवानशनं कर्तुमनुचितं यतिसिंहानां किं तु प्रांतकाल एव तद् युक्तम् । यदुक्तं श्रीमत्तुरीयाध्ययने चरे पयाइं परिसंकमाणो, जं किंचि पासं इह मन्नमाणो । लाभंतरे जीवियवूहइत्ता पच्छा परिन्नाय मलावधंसी ॥ १ ॥ एवं चेदनशनं कर्तुमनुचितं तर्हिं क्षपणैः षाण्मासिकं तपो निर्माय यतिः करोतु पारणकमलेपकृता, उच्यते एवं च कुर्वतः साधोश्चेदवश्यविधेयानां संयमयोगानां हानिर्न स्यात्तदा को निवारयिता । पुनराह विनेयः एवं चेदवश्यकर्त्तव्यानां हानिः स्यात्तदैकेन दिनेन न्यूनं षाण्मासिकं तपः कृत्वा पारयत्वलेपकृता एवमेकैकदिनहान्या यतिस्तावदात्मानं तोलयेद् यावच्चतुर्थं विधाय पारणकमाचाम्लेन यावज्जीवं कुर्यात् । एवमप्यशक्तावलेपवद् द्रव्येण यावज्जीवं विदधात्वाचाम्लम्, अत्रोत्तरं करोत्येव चेत् प्रत्युपेक्षणेर्याशोधनप्रभृतीनां संयमयोगानां न भवति हीनता । परं संप्रति सेवार्त्तसंहनिनां सर्वेषां



उन्मिश्रा०
परिणत-
लिप्तदोष-
स्वरूपम् ।

तादृग्विधा न शक्ति, किंतु कस्यचिदेव गवेषेन तथा नोपदिष्टं श्रीमदार्हतसमये । पुनराह विनेयः ननु महाराष्ट्राः सदैव सौवीरकूरमात्रभोजिनस्तेऽपि च सेवार्त्तसहनिनः, एवं च तेऽपि चेद् यापयति यावज्जीवं तेन भोजनेन तर्हि यतयस्तु मोक्षार्थिनस्तेन तेषां विशेषत एव युक्तं पूर्वोक्तयुक्त्या यापयितुं यावज्जीवम्, अत्रोत्तरं साधूनां हि ग्रीष्मसमयेऽप्याहार उपधिः शय्या च एतत्त्रितयं शीतं स्यात् । तत्राहारस्य शीतता गोचरचर्यायां गतस्य यतेः स्तोकस्तोकाहारग्रहणेन प्रभूतस्य वेला विलम्बस्य सम्भवात् । उपधेस्तु प्रावृट्कालप्रारम्भ एव प्रक्षालनेन मलिनतया । शय्यायास्तु वह्निप्रत्यासन्नताऽभावादिहेतुभिः तेन शीतत्रितययोगाद् बहिरन्तश्च शीततया जठराग्नेरुपघातः स्यात्ततश्च क्षुन्मन्दताऽजीर्णतादयो दोषाः समवेयुस्तेन तक्रादि-समादानमनुज्ञातं भगवद्भिर्यतीनां यतस्तक्रादिनापि जठरपिठरस्थितोऽग्निः प्रदीप्तः स्यात्तक्रादेरपि तथा स्वभावत्वात् । घटिकोन्मिश्रतीमनसर्पिःप्रभृतीनां तु भजना । ग्लानत्वादिप्रयोजनोत्पत्तावेव तदादानस्य समनुज्ञातत्वात् । यतस्तानि प्रभूत-लेपानि रसगृद्धिजनकानि च । गृहस्थानां पुनराहारोपधिशय्यारूपत्रितयं शीतत्वाविष्युष्णं गवेषेन तेषां तक्रादिसमादानं विनापि बाह्याऽभ्यन्तरतापयोगादाहारो जीर्यते । तत्र बाह्यः शय्योपधियोगाच्चाप आभ्यन्तरस्त्वाहारयोगात्, तिय सीय समणाण तिय उण्ह गिहीण तेणणुन्नाय । तक्काईण गहण कट्टरमाईसु भइयव्व ॥ १ ॥ इति श्रीपिंडनिर्युक्तिवचनात् । इति प्रासङ्गिकमुक्त्वा प्रस्तुतं प्रस्तूयते । तथाहि अत्र च लिप्तदोषे संसृष्टासंसृष्टहस्तभाजनसावशेषनिरवशेषद्रव्यैः कृत्वाऽष्टौ भङ्गा भवेयुः । तथाहि संसृष्टः पाणिः संसृष्टं भाजनं सावशेषं द्रव्यम् ॥ १ ॥ हस्तभाजने संसृष्टे द्रव्यं तु निरवशेषम् ॥ २ ॥ संसृष्टः करो भाजनं त्वऽसंसृष्टं द्रव्यं च सावशेषम् ॥ ३ ॥ संसृष्टः पाणिरसंसृष्टं भाजनं द्रव्यं तु निरवशेषम् ॥ ४ ॥ असंसृष्टो हस्तः

संसृष्टं भाजनं द्रव्यं तु सावशेषम् ॥ ५ ॥ असंसृष्टः करः संसृष्टं भाजनं द्रव्यं तु निरवशेषम् ॥ ६ ॥ असंसृष्टः पाणिरसंसृष्टं भाजनं द्रव्यं तु सावशेषम् ॥ ७ ॥ हस्तभाजने असंसृष्टे द्रव्यं तु निरवशेषम् ॥ ८ ॥ एतेषां भगानां मध्ये प्रथमतृतीयपंचमःसप्तमभंगेषु कल्पते सावशेषे द्रव्ये सति पश्चात्कर्माद्यसंभवात् । सममभंगेषु तु न कल्पते द्रव्यस्य निरवशेषतया पश्चात्कर्मादिदोषसंभवात् । इत्युक्तं लिप्तदोषस्वरूपम् ॥ ४१ ॥

अथ छर्दितदोषस्वरूपं किमपि कथ्यते । तथाहि यदशनादि दीयमानं किंचिद् भूमौ निपतति तच्छर्दितमिति कीर्त्यते । तत्रोष्णस्य छर्दने दायको दह्यते पृथ्वीकायादयो वा दह्यंते कायाः । शीतपतनेऽपि च तेषां विराधना । उक्तं च श्रीपिंडनिर्युक्तौ उसिणस्स छड्डणे देंतओ व, डज्झेज्ज कायदाहो वा । सीयपडणम्मि काया, पडिए महुबिंदुआहरणं ॥ १ ॥ अत्र च मधुबिंदुना निदर्शनं तथाहि–चंपायां पुरि धर्मघोषनामाऽमात्यः । तस्य च प्रियंगुनाम्नी प्राणप्रिया । स चाऽन्यदा विषयविरक्तो गृहीतचारित्रः । कालेन श्रीगुरुचलननलिनमूलममधीतैकादशांगादिश्रुत एकाकिविहारप्रतिमां प्रपन्नो विहरन् वारत्तकपुरेऽभयसेननृपमंत्रिसदने भिक्षार्थं गतः । तत्र च दीयमानसाज्यमधुपायसान्मधुबिंदुमवनौ निपतन्तं निरीक्ष्य भिक्षामनादायैव स निर्गतः । अथ चानात्तभिक्षे भिक्षौ तस्मिन्निर्गते गवाक्षस्थो मंत्री तस्मिन्ननात्तभिक्षत्वात् कुपितः सन् यावत् किंचिच्चिंतयति तावत्तत्र मधुबिंदौ मक्षिका समुपविष्टा, तां च समालोक्य तत्र गृहगोधा समेता, तां प्रति सरटस्तं प्रति मार्जारस्तं प्रत्यासन्नग्रामसमागतराजपुत्रसारमेयस्तं प्रति वास्तव्यः श्वा तयोश्च मिथो युद्धे तत् स्वामिनोरपि युद्धमजनि । एतच्च सर्वं गवाक्षस्थो मंत्री निरीक्ष्य तत उत्तीर्य निवारयामास सारमेयप्रभू युद्ध्यमानौ, चिंतयामास च चेतसि यदनेनैव

लिप्त–छर्दितदोष-स्वरूपम् ।

तृतीय-लहर्यां तृतीय-स्तरङ्गः ।

निमित्तेन मुनिना भिक्षा न जगृहे। तदथ धन्य इत्यादि भावयन् स समुत्पन्नजातिस्मरणः प्रव्रज्यामादाय क्रमेण विहरन् सुसुमारपुरे प्राप्तवान्। तत्र च स तस्थौ प्रतिमया देवकुले। तत्र च धुधुमारनामा नृपतिस्तत्तनया चाप्रतिरूपरूपाऽङ्गारवती नामधेया। तां च याचितवाँश्चण्डप्रद्योत। स च न दत्तवाँस्ताम्, तन्निमित्तं च चण्डप्रद्योतेन तत्पुरं परितो वेष्टितं कियत्यपि समये व्यतीते नृपपृष्टो नैमित्तिक उपश्रुतिं विलोकयन् यामिन्यां भापयामास डिम्भान्। तदा च ते भीताः प्रतिमास्थितं वारत्तकमुनिं शरणं प्रपन्नाः। मुनिनाऽपि सहसा ते न भेतव्यं भवद्भिरित्युक्ताः, तदा च तन्मुनिवचनं निशम्य प्रमुदितमनो नैमित्तिको नृपतिं विज्ञपयामास 'स्वामिंस्तव मुन्युक्तशकुनबलाद् विजयो भावी' इति तेनोक्ते तेन नृपेण युद्धं विधाय चण्डप्रद्योतनृपतिर्बद्धः। पुनः कियताऽपि कालेन तं विमुच्य सत्कारपुरस्सरं सौभाग्योद्धुरां स विवाहितः। कियन्ति च दिनानि स पुरे स्थापितः। अन्यदा च चण्डप्रद्योतेन सा पृष्टा 'तत्र पित्रा स्वल्पबलेनाप्यहं कथं बद्धः?' तयोक्तं 'वारत्तकयत्युक्तशकुनबला'दिति तयोक्ते तेन स मुनिर्नैमित्तिकयते! तुभ्यं नमो भवत्विति हसितः। तदा च स यतिः प्रव्रज्यादिवसादारभ्य तमतीचारमपश्यँस्तं शिशुव्यतिकरं सस्मार। स्मृत्वा च तमतीचारं प्रतिक्रम्य केवलश्रियमवाप्य स ययौ महोदयम् ॥ ४२ ॥

इत्युक्ता यतिगृहस्थोभयसम्भवा दशग्रहणैषणादोषाः।

अथ परिभोगैषणादोषपञ्चकस्वरूपं किंचित्प्रपञ्च्यते। तथाहि संयोजनाऽप्रमाणाङ्गारधूमकारणस्वरूपाः पञ्चपरिभोगैषणादोषा भवति। तत्र रसगृद्ध्याऽन्योन्यद्रव्यसंयोजनं संयोजना। सा च द्विधा द्रव्यतो भावतश्च। तत्र द्रव्यतो द्विविधा उपाश्रयाद् बहिरतश्च भिक्षामादत्ते च यद् रसनिमित्तं क्षीरखण्डादि द्रव्याणां संयोगं जनयति सा बहिः संयोजना। वसतेरतस्तु

त्रेधा पात्रे कवले वदने च। तत्र यद् द्रव्यं यस्य द्रव्यस्य रसविशेषाधायि तस्य तेन सह पात्रे संयोजने पात्रविषया संयोजना, यथा घृतखंडादेः पात्रांतः संयोजनम् १। यदा तु कवलतयोत्पाटितं पूपिकादि गुडादिमिश्रितं करोति तदा कवलविषया संयोजना २। यदा च मुखे कवलं प्रक्षिप्य तदनु शाकं मुखे प्रक्षिपति यद्वा तत्र मंडकादि पूर्वं प्रक्षिप्य तदनु गुडादिकं प्रक्षिपति तदा मुखविषया संयोजना ३। एनां तु द्विविधां द्रव्यतः संयोजनां कुर्वन् रसगृद्धः सन् यदात्मानं संयोजयति ज्ञानावरणीयाद्यष्टकर्मभिः समं सा भावतः संयोजना। उक्तं च श्रीपिंडनिर्युक्तौ संजोयणा उ भावे, संजोएऊण ताणि दव्वाइं। संजोयइ कम्मेणं कम्मेण भवं तओ दुक्खं ॥ १ ॥ विधिविहितत्वाद्विष्णुघृतादिनिर्गमनार्थं त्वनुज्ञाता सा भगवद्भिर्यतस्तत् परिष्ठापने हि कीटिकादिबहुसत्त्वोपघातसंभवेन महत् प्रायश्चित्तं समेति। उक्तं च तत्रैव पत्तेअ पउरलंभे, भुत्तुव्वरिए अ सेसगमणट्ठा। दिट्ठो संजोगो खलु, अहक्कमो तस्सिमो होइ ॥ १ ॥ यतो रसहेतुक एव संयोगो निषिद्धस्ततो ग्लानाद्यर्थं कल्पते। उक्तं च तत्रैव रसहेउं पडिसिद्धो, संजोगो कप्पए गिलाणट्ठा। जस्स व अभत्तछंदो, सुहोचिओऽभाविओ जो य ॥ १ ॥ इत्युक्तः संयोजनादोषः १।



अथ प्रमाणातिक्रमदोषस्वरूपं प्ररूप्यते। तत्राऽविकृतवदनप्रमाणा द्वात्रिंशत् कवलाः साधूनामाहारमानमुच्यते साध्वीनां च तेऽष्टाविंशतिः। यदुक्तं श्रीपिंडनिर्युक्तौ बत्तीसं किर कवला, आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलियाए, अट्ठावीसं भवे कवला ॥ १ ॥ द्वात्रिंशत्कवलानां मध्ये एकेनापि कवलेन न्यूनमाहारं गृह्णन् साधुर्यात्रामात्राभोज्यवमौदर्यकर्त्ता च प्रोच्यते। यदुक्तं तत्रैव एत्तो किणाइ हीणं, अद्धं अद्धद्धगं च आहारं। साहुस्स बिंति

संयोजना-
प्रमाणाति-
क्रमदोष-
स्वरूपम्।

धीरा जायामाय च उमं च ॥ १ ॥ तथा साधुना तथाऽऽहारो ग्राह्यो यथोदरस्य पचभागाः पूर्यंते भक्तपानाभ्यां षष्ठ स्तु रिक्तोऽवतिष्ठति । तत्रापि साधारणकाले त्रयः सव्यजनस्याशनस्य द्वौ च पानस्य । शीतकाले पुनरेको द्वौ वा पानस्य शेषा भक्तस्य । उष्णकाले तु द्वौ त्रयो वा भागाः पानस्य शेषा भक्तस्य समादेया । उक्तं च तत्रैव अद्धमसणस्स सव्व जणस्स कुज्जा दवस्स दो भागे। वाऊपवियारणट्ठा छब्भाय ऊणय कुज्जा ॥ १ ॥ सीओ उसिणो साहारणो अ कालो तिहा मुणेयव्वो । साहारणम्मि काले तत्थाहारे इमा मत्ता ॥ २ ॥ सीए दवस्स एगो भत्ते चत्तारि अहव दो पाणे । उसिणे दवस्स दोण्णि अ तिण्णि व सेसा उ भत्तस्स ॥ ३ ॥ एवमुक्तप्रमाणमाहार गृह्णन् साधुर्न लिप्यते । यदुक्त श्रीपिंडनिर्युक्तौ पगाम च निगाम च पनीय भत्तपाणमाहारे । अइयहुय अइयहुसो पमाण दोसो मुणेयव्वो ॥ १ ॥ बत्तीसाइ परेण पगम जिच तमेव उ निकाम । ज पुण गलतनेह पणीयमिति त बुहा येति ॥ २ ॥ अइयहुअ अइयहुसो अइप्पमाणेण भोयण भोत्तु । हाएज्ज व वामिज्ज व मारिज्ज व त अजीरत ॥ ३ ॥ यहुयातीयमइयहु अइयहुसो तिन्नि तिन्नि व परेण । त चिअ अइप्पमाण मुजइ ज वा अतिप्पतो ॥ ४ ॥ प्रमाणातिक्रमदोपदुष्टाहारग्रहणे च वमनविरेचनमरणकामोद्दीपनादयः प्रभूताः प्रादुर्भवति दोषाः । प्रमाणोपेताहाराभ्यवहारे च ते न सभवेयुः । यदुक्त अप्पाहारस्स न इंदियाइ विसएसु सपयट्टति । नेव किलम्मइ तवसा रसेसु न वि मुज्झए आवि ॥ १ ॥ तथाहि आहारानि आहारा ॥ १ ॥ तस्मात् प्रमाणोपेत एवाहारो ग्राह्य । इत्युक्तमप्रमाणदोपस्वरूप ॥ २ ॥

अथांगारदोषस्वरूपं किंचिदुच्यते। तथाहि तत्रांगारशब्देन विगतधूममग्निना दग्धमंगारत्वप्राप्तमिंधनमुच्यते। यदुक्तं श्रीपिंडनिर्युक्तौ अंगारत्ति पवुच्चइ तं चिय दड्ढं गए धूमे ॥ तत्सदृशं चारित्रं करोति प्रासुकमप्याहारं प्रशस्तगंधरसं रागमूर्च्छितः सन् भुंजानः। यदुक्तं तत्रैव रागग्गिसंपलित्तो, भुंजंतो फासुयंपि आहारं। निद्दढंगालनिभं, करेइ चरणिंधणं खिप्पं ॥ १ ॥ इत्युक्तमंगारदोषस्वरूपम्।

अथ धूमदोषस्वरूपं किमप्युच्यते। तत्रांगारत्वमसंप्राप्तं ज्वलमानमिंधनं सधूममित्युच्यते। यदुक्तं तत्रैव अंगारत्तमपत्तं जलमाणं इंधणं सधूमं तं तत्सदृशं चरणं विदधाति यतिर्विरूपगंधरसाहारे मनसा वचसा कायेन वा द्वेषपोषं प्रादुर्भावयन्। तत्र मनसाऽहो कीदृशमपक्वं विरसं दुर्गंधं वेति चिंतयन्, वचसा तु तन्निंदां विदधानः, कायेन तु मुखमोटनादि कुर्वाणः। तस्मात् सरसविरसाहारयो रागद्वेषपरिहारं कुर्वता यतिसत्तमेन ध्यानाध्ययनादिनिमित्तमाहारो ग्राह्यः। उक्तं च तत्रैव आहारंति तवस्सी, विगइंगालं च विगयधूमं च। झाणज्झयणनिमित्तं, एसुवएसो पवयणस्स ॥ १ ॥ इत्युक्तं धूमदोषस्वरूपं ॥ ४ ॥

अथ कारणदोषस्वरूपं किंचिदुच्यते। तत्र कारणे आहारमगृह्णन् कारणाभावे वाहारं गृह्णन् मुनिः संयुज्यते कारणदोषजनितकर्मणा। तत्र साधूनां वेदनाप्रशमवैयावृत्त्यविधानेर्याशोधनसंयमसमाराधनप्राणधारणधर्मध्यानानुसंधानलक्षणानि षडाहारग्रहणकारणानि भवंति। तत्र 'छुहा समा वेयणा नत्थि' इति वचनाद् बुभुक्षासमा वेदना नास्ति, तत्प्रशमार्थं यतिर्भुंजीत १। तथा बुभुक्षितो वैयावृत्त्यं कर्तुं न शक्नोतीति तदर्थं च २। तथा क्षुधार्त्तो लोचनभ्रमलतयेर्यां शोधयितुं न



अप्रमाणाङ्गार-धूम-कारण-दोष-स्वरूपम्।

गच्छनुयादिति तन्निमित्त च ३। तथा संयम० प्रत्युपेक्षाप्रमार्जनादिलक्षणस्तदर्थं च ४। तथा प्राणधारणार्थं च ५। तथा सूत्रार्थानुस्मरणादिनिमित्त च ६। एतदर्थसंवादिनी च श्रीपिंडनिर्युक्तिगाथा तथाहि वेअण वेआवच्चे, इरिअट्ठाए अ संजमट्ठाए। तह पाणवत्तिआए, छट्ठं पुण धम्मचिंताए ॥ १ ॥ तथा षड्भिः कारणैः साधुर्नाश्नीयात्। तथाहि–आतङ्को १उपसर्ग२ब्रह्मगुप्तितितिक्षा३प्राणिदया४तपः५शरीरव्युत्सर्ग६लक्षणानि षड् निमित्तानि अभवत्यभोजने। तत्रातङ्को ज्वरादिरूपस्तदुपशमार्थं मुनिर्नाश्नीत १। तथा नृपस्वजनाद्युपसर्गनिवारणार्थं च २। तथा ब्रह्मगुप्तयोऽन्यथा सोढुं न शक्यते तेन तदर्थं च ३। तथा जलदवृष्टिमहिकानिपातादौ प्राणिदयार्थं च ४। तथा चतुर्थादिषण्मासोपवासांततपोनिमित्त च ५। तथा विनेयव्युत्पादनादिसकलकृत्यकरणानंतर पाश्चात्ये वयसि संलेखनां विधाय कायव्यवच्छेदार्थं च ६। अत्र च पिंडनिर्युक्तिगाथे तथाहि आयंको जरमाई, रायासन्नायगाइ उवसग्गो। बंभवयपालणट्ठा, पाणिदया वासमहियाई॥ १ ॥ तवहेउ चउत्थाई, जाव उ छम्मासिओ तवो होइ। छट्ठं सरीरवोच्छे–यणट्ठया होअणाहारो ॥ २ ॥ एवं षड्भिः कारणैराहार गृह्णन् षड्भिश्च कारणैराहारमगृह्णन् लिप्यते कारणदोषोत्थकर्मणा ५। इत्युक्ताः पंचपरिभोगैषणा दोषा। एवं सप्तचत्वारिंशद्दोषविरहितमाहारमाददानो मुनिरेषणासमित उच्यते अन्यथा त्वाजीवीति। उक्त च श्रीउपदेशमालायां धायालमेसणाओ, भोअणदोसे अ पंच सोहेइ सो। एसणाइसमिओ, आजीवी अन्नहा होइ ॥ १ ॥ तस्मादाहारविषयमूर्च्छारहितेन यतिसत्तमेनैते सप्तचत्वारिंशद्दोषाः सर्वप्रयत्नेन वर्जनीयाः।

अथैतेषु किंचिद् गुरुलघुविशेषो भाण्यते तथाहि–सर्वगुरु मूलकर्म, तस्माद् यथाक्रममाधाकर्मैकर्मौद्देशिकचरमत्रिक

मिश्रांतिमद्विकं बादरप्राभृतिका सप्रत्यपायपरग्रामाभ्याहृतं लोभपिंडानंतकायाव्यवहितनिक्षिप्तपिहितसंहृतो मिश्रापरिणतच्छर्दितानि संयोजना अंगारदोषो वर्त्तमानभविष्यन्निमित्ते चेति लघवः षण्मासिकतपसो यथाक्रमं चतुर्थतपोवत् । एतेभ्यश्च कर्मौद्देशिकाद्यामेदो मिश्राद्यभेदो धात्रीत्वं दूतीत्वमतीतनिमित्तमाजीवित्वं वनीपकत्वं बादरचिकित्सा क्रोधमानपिंडो संबंधिसंस्तवकरणं विद्यामंत्रयोगचूर्णपिंडाः प्रकाशकरणं स्वपरद्रव्यस्वभावक्रीते लौकिकप्रामित्यपरावर्त्तिते निष्प्रत्यपायपरग्रामाभ्याहृतं पिहितोद्भिन्नं कपाटोद्भिन्नमुत्कृष्टमालापहृतं सर्वमाच्छेद्यं सर्वमनिसृष्टं पुरःकर्म पश्चात्कर्म गर्हितम्रक्षितं संसक्तम्रक्षितं प्रत्येकाव्यवहितनिक्षिप्तपिहितसंहृतमिश्रापरिणतानि प्रमाणोल्लंघनं सधूममकारणभोजनं चेति लघवश्चतुर्थादाचामाम्लमिव । एभ्योऽप्ययऽध्यवपूरकांतिमभेदद्वैतं कृतौद्देशिकभेदचतुष्कं भक्तपानपूति मायापिंडोऽनंतकायव्यवहितनिक्षिप्तपिहितादीनि चेति लघव आचाम्लादेकभक्तमिव । एभ्योऽप्योघौद्देशिकमुद्दिष्टभेदचतुष्कमुपकरणपूति चिरस्थापितं प्रकटकरणं लोकोत्तरपरावर्त्तितं प्रामित्यं परभावैः क्रीतं सप्रत्यपायनिष्प्रत्यपायस्वग्रामाभ्याहृतं दर्दरोद्भिन्नं जघन्यमालापहृतमध्यवपूरकप्रथमभेदः सूक्ष्मचिकित्सा गुणसंस्तवकरणं मिश्रकर्दमसेटिकादिना म्रक्षितं किंचिद्दायकदुष्टं प्रत्येकपरंपरनिक्षिप्तादीनि मिश्रानंतरनिक्षिप्तानि चेति लघव एकाशनात् पूर्वार्द्धवत् । एतेभ्योऽपीत्वरस्थापना सूक्ष्मप्राभृतिका सस्निग्धसरजस्करूपम्रक्षितप्रत्येकमिश्रपरं परस्थापितादीनि चेति लघवः पूर्वार्द्धप्रत्याख्यानात् केवलविकृतित्यागप्रत्याख्यानवत् । इति भावितः किंचिद्दोषेषु गुरुलघुविशेषः प्राक्तनशास्त्रानुसारेण ।

अथैतावद्दूषणवियुतस्य पिंडस्याऽप्राप्तौ यतिः किं कुर्यात् ? उच्यते विशुद्धपिंडकृते एतान् दोषान् विशोधयन् पुष्टा-

लबनसद्भावाभावविद् द्रव्यक्षेत्रकालभावानपेक्ष्य मनागशुद्धमपि पिंडमाददानो यतेत पचकहान्याम् । अथ पचकहानिरि- त्यस्य वाक्यस्य कोऽर्थ. ? उच्यते पचकशब्देन सूत्रोक्तस्तपोविशेपस्तेन या हानिः स्वतपसो व्यय । कोऽर्थ. सदोपाहार ग्रहणात्तदपराधशुद्धये यथा पचकेन पचकेन प्रायश्चित्तेन नृपापराधदीयमानदडद्रव्येणेव स्वतपसो व्ययः स्यात्तथा तेन यतेत इत्थमशठतया सूत्रोक्तयुक्त्या यतना कुर्वतो यतेर्या काचित् स्वानुष्ठानखडनरूपा विराधना स्यात् सा निर्जराकारणमेव । यदुक्त श्रीपिंडनिर्युक्तौ जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला, अज्झत्थ विसोहिजुत्तस्स ॥ ११ ॥ इत्युक्त गवेपणैपणाग्रहणैपणापरिभोगैपणादोपस्वरूपम् ।

एव च यथैपणात्रयमाश्रित्य सप्तचत्वारिंशद्दोपा. परिहरणीया' श्रमणैस्तथा शय्यातरपिंडराजपिंडावपि । तत्र प्रथम शय्यातरपिंडस्वरूप पूर्वाचार्य्यकृतगाथाभ्यामेवोच्यते । तथाहि सागारिओत्ति १ को पुण २ काहेत्ति ३ कइविहो वा सपिंडो ४ । असिज्झायरो [redacted] काहे परिहरिअव्वो अ सो कस्स ६ ॥ १ ॥ दोसा वा के तस्स उ ७, कारणजाए च कप्पए कम्मि ८ । जयणाए वा काए ९ समणेगेसु घित्तव्वो १० ॥ २ ॥ ( व्याख्या ) सागार एव सागारिक शय्यातर शय्या तदुगतयतीन् वासरव्यतदुवितरणेन वा ससार तरतीति शय्यातर ॥ १ ॥ कोऽयमुपाश्रयस्य प्रभुस्त- त्सदिष्टो वा तेपु पुन प्रभूतेपूत्सर्गत सर्वेऽपि वर्जनीयाः । अनिर्वाहे तु क्रमादेकैक । यदातूपाश्रयसकीर्णतया पृथक् पृथगुपाश्रयेपु तिष्ठति यतयस्तदा निर्वाहे सर्वेऽपि परिहार्या । अनिर्वाहे त्वाचार्योपाश्रयशय्यातरो वर्जनीय एव ॥ २ ॥ काहेत्ति—कदा कुत. कालात् प्रभृति भवेत् शय्यातरः ? उच्यते प्रातरावश्यके विहिते स्वापे वा कृते, यदुक्त जइ जग्गति

सुविहिआ, करंति आवस्सयं च अन्नत्थ । सिज्जायरो न होई, सुत्ते व कए व सो होइ ॥ १३ ॥ कतिविधो वा तस्य पिंडः ? उच्यते द्वादशविधोऽशनादिचतुष्क ४ पादपुंछन ५ वस्त्र ६ पात्र ७ कंबल ८ सूची ९ क्षुर १० कर्णशोधन ११ नखभेदिनीभिः १२ । यदुक्तं असणाईया चउरो, पाउंछण-वत्थ-पत्त-कंबलयं । सूइ-छुर-कन्नसोहण, नहरणिआ सागरिअपिंडो ॥ १ ॥ तृणादीनि तु शय्यातरपिंडतया नोच्यंते । यदुक्तं तणडगलछारमल्लगसिज्जा-संथारपीढलेवाई । सिज्जायरपिंडो सो, न होइ सेहो अ सोवहिओ ॥ १४ ॥ अशय्यातरश्च कदा स्यादित्याह, दिननिर्गमनकालाद्दिनमेकं वर्जयंति, ततोऽशय्यातरः स्याद् । यदुक्तं वुत्थे वज्जं अहोरत्तं, (आदेशांतरेण तु) सूरत्थमणे दिणनिग्गयाण सूरोदये असागरिओ । अत्थमिअनिग्गयाणं, बारसजामाउ सागरिओ ॥ १५ ॥ परिहर्त्तव्यश्च स कस्य ? उच्यते रसायणदृष्टांतेन सकलस्यापि लिंगधारिणः । उक्तं च लिंगत्थस्स उवज्झो तं परिहरउ भुंजओ वा वि । युक्तस्य अयुक्तस्य वा श्रमणगुणो रहितेति शेषः रसायणदृष्टांतस्त्वयं महाराष्ट्रे कल्यपालापणे सुरा भवतु मा वा तथाऽपि पताका बध्यते । तां च निरीक्ष्य सर्वेऽपि भिक्षाचरप्रभृतयस्तं हट्टं परिहरंत्यभोज्यमत्रस्त्वमिति हेतोरेवमिहाऽपि यस्य धर्मध्वजो वीक्ष्यते स यत्र तिष्ठति तद्गृहपिंडः शय्यातरपिंडत्वाद् वर्जनीय एव । के च दोषास्तत्पिंडे गृह्यमाणे ? उच्यते तीर्थंकरनिषिद्धत्वादयो भूयांसो दोषाः । यदुक्तं तित्थयरप्पडिकुट्ठो १ अन्नायं २ उग्गमो वि अ न सुज्झे ३ । अविमुत्ति ४ अलाघवया ५ दुल्लहसिज्जा य ६ वुच्छेओ ॥ १ ॥ (व्याख्या) सर्वजिनैः साधूनां शय्यातरपिंडो निषिद्धः । यदुक्तं पुरपच्छिमवज्जेहिं अ वि कम्मं जिणवरेहिं लेसेणं । भुत्तं विदेहिएहिं अ, न य सागरिस्स

पिंडो व ॥ १ ॥ यस्यैव कृतकर्म तस्यैवैकस्य न कल्पते शेषाणा तु कल्पते । इत्येव लेशतो मध्यमद्वाविंशतितीर्थपतिभिर्महाविदेहजिनवरैश्च कार्मिकमप्यशनाद्यनुज्ञात स्वयतीना न तु शय्यातरपिंडग्रहणम् १ । कुतो हेतोरित्याह अज्ञातस्य नृपादिप्रव्रजितत्वेनाविदितस्य यद् भैक्ष तदज्ञातमित्युच्यते साधुना च प्रायस्तदेवादेय अन्नये उछ चरई विसुद्धमिति वचनात्, तच्चासन्ननिवासादिपरिचयेन ज्ञातस्वरूपस्य यते॰ शय्यातरगृहे पिंडमाददानस्य स्यादिति २ । तथा उद्गमः कल्पनीयभक्तादिमरननमपि चेति समुच्चये सोऽपि न शुद्ध्यति । कथ बाहुल्ला गच्छस्स उ पढमालिअपाणगाइकज्जेसु । सज्झाय करणआउट्टिआइ करेइ उग्गमेगयर ॥ १ ॥ तथाऽविमुक्तिर्लौलुपतया तत्कुलामोचन यदुक्त भावे उक्कोसपणीयगेहिओ त कुलेन वड्डेइ । नाणाई कज्जेसु अ गओवि दूर पुणो एइ ॥ १ ॥ तथा न लाघव लघुता यस्य तद् भावोऽलाघवता । तत्र विशिष्टाहारलाभेनोपचितत्वाद्देहस्य तेन सम सस्तवेन प्रभूतोपधिलाभाच्च गुरुत्वम् । अत्र दृष्टांतः कस्यचिन्मुने॰ शय्यातरेण कबलादि वितीर्णं तत्प्रणयाच्च तत्तनयादिभिरपि तदनु स तद्भारेण विहार न करोति । अन्यदा च दुर्भिक्षे शय्यातरेण चिंतित यद् बुभुक्षया वय मरिष्यामः, अस्माभिश्च सममयमपि मरिष्यतीति तदेन सुभिक्षे प्रेषयामीति विचिन्त्य तस्मिन् बहिर्भूमौ गते तत्सनधि सर्वमुपकरण बहिर्निष्कास्य सगोप्य चोपाश्रयो ज्वालित॰ । समागते च तस्मिन शेष दग्धमित्युक्त्वा पात्राणि समर्पितानि, सुभिक्षे पुनरागम्यमित्युक्त्वा विहार च कारितः । अथ च सुभिक्षे तस्मिन् पुनरागते सद्भावमुक्त्वा सर्वं समर्पितमित्यलाघवता भवेत् ५ । तथा दुर्लभा च शय्या कृता स्यात्, येन शय्या देया तेनाऽशनाद्यपीति गृहिणां भीते॰ । अत्र निदर्शन कस्यापि गृहिणो गृहे पचशतमितयतियुताः सूरयस्तस्थिवासः । तन्मध्यादेकः सघाटकः

प्रथमं तत्सदनान्निर्गच्छन् कारणेन भिक्षां गृह्णाति कालेन स निर्द्धनत्वं गतः । अन्यदा च तस्मिन् गणे ततोऽन्यत्र विहृते सति समागता अन्ये मुनयः । तच्च तदंतिके शय्यायां याचितायां स प्रोक्तवान् 'उपाश्रयो वर्त्तते परं निःस्वतया वितरणोचितं किमपि नास्ति तेन तं न दास्ये,' इति तेनोक्ते यतयः प्रोचु 'रस्माकं शय्यातरपिंडो न कल्पतेऽतस्तं वितर,' इति तैरुक्ते स प्राह 'मत्सदनाद् रिक्तपात्रा भवंतो निर्यातोऽमंगल 'मिति तदनु कथं कथमपि तं प्रज्ञाप्य तैरुपाश्रयो गृहीत इति दुर्लभा च भवेत् शय्या ६ । तथा वितरणभयाद् व्यवच्छेदो विनाशश्च शय्याया विधीयते गृहस्थेन तदभावे भक्तपानविनेयादीनां च व्यवच्छेदः ७ । अथैते दोषाः प्रायः पिंडांतरग्रहणेऽपि संभवंतीति किंनिमित्तमेतत्पिंडपरिहरणम् ? उच्यते पडिबंधनिराकरणं केई अन्ने गिहीयगहणस्स । तस्साऊंटणमाणं इयरे विंति भावत्थं ॥ १ ॥ ( व्याख्या ) शय्यातरपिंडपरिहारे साधुशय्यातरयोर्योऽत्यंतोपकार्योपकारकभावेन स्नेहस्तन्निराकरणं केचिदाचार्य्याः कथयंति कारणम् । अन्ये पुनरगृहीतग्रहणस्य साधुभिरस्वीकृतभक्तादिदातव्यस्य शय्यातरस्याउंटनमावर्जनमहो निरीहा एते इति वसत्यादिदानतः पूजनीया इति भावोत्पादनात् । तथा केचित् पुनराज्ञां जिनोपदेशं तात्पर्यमाहुः, इत्युक्तं सप्रसंगं दोषद्वारं ७ ।

अथ कस्मिन् कारणज्जाते शय्यातरपिंडो गृह्यते ? उच्यते अत्यागाढा १ ऽनागाढ २ रूपे द्विविधे ग्लानत्वे । तत्रात्यागाढे क्षिप्रमेव प्रायो ग्राह्यः । अनागाढे त्वन्यत्र तदप्राप्तावेव तथा तदाऽसौ निमंत्रयति तदा कथनीयप्रयोजने समुत्पन्ने ग्रहीष्यामो न तु न कल्पते इति । अतीवनिर्बंधे तु प्रसंगनिषेधयतनया ग्राह्यः । तथा ग्लानादिप्रयोजने घृतादावन्यत्राप्राप्यमाने आमोदे यः शय्यातरपिंडः । तथा अशिवे तथाऽवमोदर्ये तथा नृपादिप्रद्वेषे तस्करादिभये च । उक्तं च दुविहे गिलानम्मि

निमतणे दव्वदुल्लहे असिवे। ओमोअरि अ पउसे भए अ गहण अणुन्नायं ॥ १ ॥ ८ ॥

कया च यतनया ग्राह्यः? उच्यते त्रिःकृत्वश्चतुर्षु दिक्षु गवेषयित्वा गीतार्थो द्रव्यदुर्लभतया शय्यातरपिंडमादत्ते कारणे समुत्पन्ने। यदुक्त तिक्खुत्तो सरिकत्ते चउदिसिं मग्गिऊण गीयत्थो। दव्वम्मि दुल्लहम्मि सिज्जायरसतिए गहण ॥ १ ॥ एवमेकमाश्रित्य प्रोक्त, यत्रापि नैकेऽपि तु पुत्रादयः शय्यातराः स्युस्तत्रापि यावतस्तत्स्वामिनस्तत्सदिष्टा वा ते सर्वेणानुज्ञाप्य तेषां मध्ये च योऽनुल्लघनीयवाक्यस्तस्यैव पिंड॰ परिहार्यः भद्रकप्रान्तादिविशेषमाश्रित्य शेषाणामपि ९। इत्युक्तो लेशतः शय्यातरपिंडः।

अथ राजपिंडस्वरूप किंचिदुच्यते। तथाहि यो मूर्द्धाभिषिक्तो नृपतिस्तस्याशनादिचतुष्कवस्त्रपात्रकम्बलपादपुछनरूपोऽष्टविधः पिंडः परिवर्जनीयो व्याघातादिनिमित्तैः। तत्रेश्वरतलवरादिभिः प्रवेशनिर्गमपरैः साधोः प्रवेशनिर्गमविषयस्खलनारूपो व्याघातो भवेत्। अत एव भिक्षास्वाध्यायादेरपि अमगलबुध्या हननरूपो वा अतिसम्मर्दात् पात्रभगरूपो वा आदिशब्दात् प्रचुरान्नादिप्राप्तौ लोभ स्यात्ततश्चैषणाप्रेरणम्। तथा उदारदेहाना करितुरगराजदारादीनां दर्शनेनाभिष्वगो भवेत् ततश्च सयमात्मविराधनादयो दोषा निदानादिविधानाच्चारिकचौरादिशकया नृपप्रभृतिभिस्तस्य विनाशनात्। तथा नृपादिकोपात् कुलगणसघाद्युपघातोऽपि, तथाऽहो निंद्यमपि राजप्रतिग्रहमेते गृह्णतीति जने गर्हा च स्यात्। अतो हेतोः प्रथमचरमजिनपतितीर्थवर्त्तिभिर्यतिभिः सर्वथैव वर्जनीयो राजपिंडः।

नन्वेते दोषा मध्यजिनमुनीनामपि समाना एव, तत् किं ते त न वर्जयति? उच्यते अप्रमादितया ऋजुप्रज्ञतया च

ते तद्दोषपरिहारसमर्था अतो न वर्जयंति । उक्तं च मुइओ मुद्धभिसित्तो मुइओ जो होइ जोणिसुद्धो अ । अभिसित्तो इयरेहिं सयं च भरहो जहा राया ॥ १ ॥ मुइयाइगुणो राया अट्ठविहो तस्स होइ पिंडोत्ति । पुरिमे य राणपसोवाघायाईहिं पडिकुट्ठो ॥ २ ॥ असणाईया चउरो वत्थं पायं च कंबलं चेव । पाउंछणगं च तहा अट्ठविहो रायपिंडो य ॥ ३ ॥ ईसरपभिईहिं तहिं वाघाओखद्दलोहुदाराणं । दंसणसंगो गरिहा इयरेसि न अप्पमायाओ ॥ ४ ॥ इति भावितौ किंचित्समयानुसारेण शय्यातरपिंडराजपिंडौ । तदुक्तौ च प्रपंचितं किंचित् पिंडविशुद्धतास्वरूपम् ॥ १ ॥

अथ शय्याविशुद्धिस्वरूपं किंचिद् भाण्यते तथाहि शय्याऽपि पिंडवत् प्राय आधाकर्मादिदोषरहितैव सेव्या मूलगुणैरुत्तरगुणैर्मूलोत्तरगुणैरुत्तरोत्तरगुणैश्च विशुद्धा । यदुक्तं मूलुत्तरगुणसुद्धं थीपसुपंडगविवज्जिअं । वसहिं सेविज्ज सव्वकालं विवज्जए हुंति दोसाओ ॥ १ ॥ तत्र प्रथमं मूलगुणैरशुद्धा वसति सिद्धांतगाथयैवोच्यते । तथाहि पिंढीवंसो दो धारिणीओ चत्तारि मूलवेलाओ । मूलगुणे हु ववेओ, एसा उ अहागडा वसही ॥ १ ॥ (व्याख्या) पृष्टिवंशो मध्यबलकरूपः द्वे धारिण्यौ बृहद्बेल्यौ यत्र प्रतिष्ठं गृहं चतस्रो मूलबेल्यो याश्चतुर्षु गेहपार्श्वेषु विधीयंते एभिः सप्तभिर्मूलभूतैर्यतिनिमित्तं कृतैर्युक्ता वसतिराधाकर्मिका । एतैरेव सप्तभिर्मूलभूतैर्गृहस्थैः स्वार्थं कृतैर्युक्ता वसतिर्मूलगुणविशुद्धा । अथ मूलोत्तरगुणा विशुद्धा वसतिः प्रोच्यते प्राक्तनसूरिकृतगाथयैव । तथाहि वंसग १ कडणु २ कंवण ३ थापण ४ लेवण ५ दुवार ६ भूमी अ ७ । सप्परिकम्मा वसही एसा मूलुत्तरगुणे तु ॥ १ ॥ (वृद्धव्याख्या) वंशका दंडकाः कडणं कटकादिभिः

कुद्दाकरण २ उक्रंवण दडकोपरि ओलवण ३ थापण दर्भादिना छादन ४ लेवण चिक्खल्लेन कुड्यलिंपन ५ दुवारत्ति द्वारबाहुल्यस्यान्यस्य वा द्वारस्य करण ६ भूमीयत्ति भूमेर्विषमायाः समीकरण ७ एभिः सप्तभिः साधुमाधाय विनिर्मितैर-न्विता वसतिर्मूलोत्तरगुणाविशुद्धा । तद्विपरीता तु तैर्विशुद्धा । एते चतुर्दशाप्यऽविशोधिकोटिभूताः पृष्ठिवशादयः । अथोत्तरो-त्तरगुणा विशुद्धा वसति' कथ्यते । तथाहि दूमिअ १ धूमिअ २ वासिअ ३ उज्जोविअ ४ वलिकडा ५ अवत्ता ६ य। सित्ता ७ सम्मट्ठा ८ वि अ विसोहिकोडिंगया वसही ॥ १ ॥ दूमिअत्ति सेटिकादिभिर्धवलिता १ धूमिअत्ति-अगर्वादिभिर्दुर्गंधा सती सुगधा कृता २ वासिअत्ति पटवासादिभिरपनीतदुर्गंधभावा ३ उद्योतिता मणिदीपादिभिः प्रकाशिता ४ बलिकृता कृतकूरादिवलिविधाना ५ अवत्ता छगणमृज्जलैरुपलिप्तक्षितितला ६ सिक्ता केवलसलिलार्द्रीकृता ७ समृष्टा प्रमार्जिता यतिनिमित्तमिति सर्वत्र विज्ञेय ८ । एते उत्तरोत्तरा विशोधिकोटिभूता वसत्युपघातकाः एतैरशुद्धा उत्तरोत्तर-गुणाविशुद्धा । तदविपरीता तु तैं' शुद्धा । एव चतुःशालाद्युपाश्रयेषु मूलोत्तरगुणभावना विधेया । उक्त च चउसालाईए वि हु वन्निओ एवमेव चउविभागो । इह मूलाइगुणाण सरूवा पुण सुण न ज भणिओ ॥ १ ॥ विहरताण पाय समत्त कज्जाण ज्ञेण गामेसु । वासो तेसु अ वसही पयइ जुआ तओ तासिं ॥ २ ॥ यतो विहार कुर्वता यतीना प्रायो ग्रामेष्ववस्थितिर्भवेत् तेषु च प्रायः पृष्ठिवशादियुता एव वसतयस्ततस्तासा भणन साक्षादकारित तु चतुःशाला-दिवसतीनामिति । तथा वसतिर्नवधा प्रोच्यते । तन्मध्यादष्टविधा सा वर्जनीया । नवमी तु वसतिर्विविक्ता स्वीकार्या । तत्र प्रथमा कालातिक्रांता १ द्वितीया उपस्थाना २ तृतीयाऽभिक्रांता ३ तुर्याऽनभिक्रांता ४ पचमी वर्ज्या ५ षष्ठी महावर्ज्या ६

सप्तमी सावद्या ७ अष्टमी महासावद्या ८ नवमी अल्पक्रिया ९ उक्तं च कालाइक्कंतु १ वठाणा २ अभिकंत ३ अणभिकंता य ४ । वज्जा ५ य महावज्जा ६ सावज्ज ७ मह ८ प्पकिरिया ९ य ॥ १ ॥ (व्याख्या) ऋतुबद्धे मासोपरि वर्षासु च चतुर्मासोपरि तिष्ठतां कालातिक्रांता ॥ १ ॥ ऋतुबद्धमासावस्थानानंतरं द्विमासां वर्षासु च चतुर्मासावस्थानानंतरं चाष्टौ मासान् परिहृत्य यदि तत्रायांति यतयस्तदोपस्थाना ॥ २ ॥ उक्तं च चउमासा समईया कालाईया उ सा भवे सिज्जा । सच्चेव उवठाणा दुगुणा दुगणं च वज्जित्ता ॥ १ ॥ यत्र वर्षाकाले स्थितास्तत्र यदि वर्षाद्वयमन्यत्र विधाय समायांति तद्दोषवती शय्या न स्यादिति कल्पचूर्णौ यावदर्थिकार्थं कृता या सा यद्यन्यैश्चरकप्रभृतिभिर्वा निषेविता स्यात् पूर्वं तदनंतरं चेद् यतयस्तस्यां समायांति तदा साऽभिक्रांता ॥ ३ ॥ सैवाऽपरैरभुक्ता सती मुनिभिः सेव्यमानाऽनभिक्रांता ॥ ४ ॥ स्वार्थं विहितां वसतिं यतिभ्यो वितीर्य स्वार्थमपरां कुर्याद् गृही चेत्तदा वर्ज्या ॥ ५ ॥ श्रमणपाखंडिब्राह्मणाद्यर्थं कृता महावर्ज्या ॥ ६ ॥ श्रमणपंचकार्थं कृता सावद्या ॥ ७ ॥ जैनमुनिकृते कृता महासावद्या ॥ ८ ॥ उक्तं च अत्तट्ठकडं दाऊं जईण अन्नं करेइ वज्जाओ । जम्हा तं पुव्वकडं वज्जेइ तओ भवे वज्जा ॥ १ ॥ पाखंडकारणा खलु आरम्भो अहिनवो महावज्जा । समणट्ठा सावज्जा महासावज्जा य साहूणं ॥ १ ॥ या पुनः प्रोक्तं कालातिक्रांताद्यष्टदोषविवर्जिता स्वार्थबिंबप्रतिष्ठार्थं वा कारिता धवलनाद्युत्तरदोषविरहिता साऽल्पक्रिया । यदुक्तं जा खलु जहुत्तदोसेहिं वज्जिया कारिया सयण । परिकम्मविप्पमुक्का सा वसही अप्पकिरियाउ ॥ १९ ॥ इयमपि स्त्रीपशुपंडकविवर्जितैव सेवनीया । यदुक्तं थीवज्जिअं वियाणह इत्थीणं जच्छ ठाणरूवाणि । सद्दा य न सुव्वंती

ता वि अ तेसिं न पिच्छति ॥ १ ॥ तत्र प्रथम स्थानमुच्यते । तथाहि ठाण चिट्ठति जहिं, मिहोकहाईत्ति नवर- मित्थीओ । ठाणे नियमा रूवं, सिय सद्दो तेण तो वज्ज ॥ १ ॥ स्यात् कदाचित् अवर्जने च ब्रह्मव्रतागुप्तिलज्जानाश- प्रीतिवृद्धिप्रभृतयो दोषा भवेयु' । यदुक्त बंभव्वयस्स अगुत्ती, लज्जानासो अ पीइवुड्ढी अ । साहुतवोवणवासो, निवारण तित्थहाणी अ ॥ १ ॥ ब्रह्मव्रतागुप्तिः स्त्रीससक्तवसतिनिवासात् पुनःपुनर्दर्शनेन च लज्जानाशप्रीतिवृद्धी साधु- स्तपोवननियमनमिति भजने गर्हा तथा वसतेरन्यद्रव्याणां वा निवारण निषेधः तथा तीर्थहानिश्च साधुषु जनाऽनादरात् तथा स्त्रीरूपे तु गतेरिव दोषोत्पत्तिस्तथाहि वनितानां चंक्रमणोर्ध्वस्थानरमितसविलासाऽवलोकननानाविधशृंगारादीन्निरीक्ष्य भुक्तभोगस्यानगारस्य पूर्वभुक्तस्मृतिरभुक्तभोगस्य तु भोगविषयविस्मयोत्पत्तिश्च भावः ॥ ३ ॥ उक्त च चंकमियं ठिय मोडिय च, विप्पेरिकय च सविलासं । सिंगारे य बहुविहे, दट्ठु भुत्तेयरे दोसा ॥ १ ॥ मोट्टियकिलिकिंचित रमि- तमित्यर्थः भुक्तभोगाऽभुक्तभोगयोः स्मृतिकुतूहलोत्पत्तिप्रभृतयो दोषाः । स्त्रीणां पुनर्मुनिजनरूपविषयविस्मयेन कामोत्प त्त्यादयो दोषाः । यदुक्त जहुमलपकियाण वि, लावन्नसिरीउ जहसि देहाण । सामन्ने वि सुरूवा, सयगुणिआ आसि गिहवासे ॥ १ ॥ तथा स्त्रीशब्दे त्वमी गायाणि य पढियाणि व, हसियाणि य मंजुले । अउल्लावे भूसण- सद्दे, राहस्सिए अ सोउण जे दोसा ॥ १ ॥ तथा यथा स्त्रीससक्ता वसतिस्त्याज्या तथा पशुपडकससक्ताऽपि । पसुपंडगेसु वि इह, मोहानलदीविआण ज होइ । पायमसुहा पवित्ती, पुव्वभवब्भासओ तह य ॥ १ ॥ तस्मादल्पक्रियाऽपि वसतिः स्त्रीपशुपंडकरहितैव सेवनीया इति भावित किंचिद् वसतिविशुद्धिस्वरूप ॥ २ ॥

अथ वस्त्रविशुद्धिस्वरूपं किंचिद् भाण्यते । तथाहि वस्त्रमपि पिंडवदाधाकर्मादिदोषरहितमेव ग्राह्यम् । विशेषस्तु कथ्यते, इह वस्त्रं त्रिधा एकाक्षविकलाक्षपंचाक्षावयवनिष्पत्तिभेदात् । तत्रैकेंद्रियावयवनिष्पन्नं कार्प्पासिकादि, विकलेंद्रियाऽवयवसंभवं कौशेयकादि, पंचेंद्रियावयवनिष्पन्नं तु कंबलादि । अत्र कौशेयग्रहणं कारण एव । एतत्रितयमपि जघन्यमध्यमोत्कृष्टभेदेन त्रिविधम् । तत्र जघन्यं वदनवसनं १ मध्यमं तु चोलपट्टप्रभृति २ उत्कृष्टं तु कल्पादि ३ । इदमपि च त्रिकं प्रत्येकं यथाकृताल्पपरिकर्मबहुपरिकर्मभेदात्रिविधम्, एतेषु च प्रथमं यथाकृतं स्वीकार्यं सर्वप्रकारैर्विशुद्धत्वात्, तदलाभेऽल्पपरिकर्म स्वल्पदोषत्वात्, तदप्राप्तौ तु बहुपरिकर्मापि । तत्र वस्त्रग्रहणविषये एषणाचतुष्कं प्रोक्तं श्रीमदार्हतागमे । तथाहि–उद्दिठ्ठ १ पेह २ अंतर ३ उज्झियधम्मो ४ इति तत्रोद्दिष्टा यद् गुरुसाक्षिकं स्वयं स्वीकृतं वचसा वसनं जघन्यादिकमेकाक्षावयवनिष्पन्नादिकं वा तदेव गृहस्थेभ्यो मार्गयतो भवेत् १ । प्रेक्षा तु मानोपेतं वसनमवलोक्य यतिर्ब्रूते यथा 'भोः श्रमणोपासक ! यादृशमिदं दृश्यते तादृशं मे वसनं वितरे' ति २ । अंतरेषणा तु तदा ज्ञेया यदा परिधानवसनमुत्तरीयं वा शय्या वा याऽधस्तनमुपरितनं वा वस्त्रं त्युक्तुमिच्छति दाताऽन्यद् भोक्तुकामः, अत्रांतरे याचमानस्य मुनेश्चेद्ददाति ३ । उज्झितधर्मा तु स्वदेशं बहुवस्त्रं वा देशं व्रजंतः कार्पटिका यत्त्यजंति वक्तुं वस्त्रे वा देशे यत्त्यक्तं लभ्यते तद् याचितमयाचितं वाऽनुजानीध्वं यदवग्रह इति कृत्वा गृह्णतो यतेः स्यात् । आसां चतुर्णामेषणानां मध्ये जिनकल्पिनोऽंत्यैषणाद्वयेनैव वसनं गृह्णंति न पुनराद्यैषणाभ्याम् । अत्रापि वस्त्रग्रहणे मूलोत्तरगुणविशुद्धिः सिद्धांताज्ञया विधेया, तथाहि तणविणणसंजयट्ठा, मूलगुणा उत्तरा उ पज्जणया एतच्चूर्णिः तानं वानं चेति इमे यत्र संयतार्थं कृतास्तत्र मूलगुणा-

| | | |
|---|---|---|
| दे | आ | दे |
| मा | रा | मा |
| दे | आ | दे |

विशुद्ध तद्विपरीत तु मूलगुणविशुद्धम्। ये तु निष्पन्ने पञ्चण सोऽप्य उप्पुमण धावनादयश्च विधाय ते पविक्रते तैरुत्तरगुणाविशुद्ध विपर्यये तु तैर्निशुद्धमवसेय वस्त्रम्। यदा च वास समादीयते गृहस्थाविके तदा तस्य नव भागाः करणीयास्तत्र चत्वारो देवभागाः, द्वौ च मानुषौ, द्वौ पुनरासुरौ, मध्यमभागश्च रक्ष'सधधी। एतेषु चांजनखजनकर्दमलिप्तमूषकभक्षितादिक विलोक्यम्। तत्र देवतभागेषु वस्त्रस्यैव विघत्वे उत्तमो लाभः, मानुषयोस्तु भागयोर्मध्यम', आसुरयोस्तु ग्लानता, रक्षोभागे तु मरणम्। उक्त च नवभाग कप्पणाए, पढम वत्थ करित्तु जोयति। नाऊण फलविसेस, गिण्हति अहव वज्जति ॥ १ ॥ चत्तारिदेवया भागा, दुवे भागा य माणुसा। आसुरा य दुवे भागा, मज्झे वत्थस्स रक्खसो ॥ २ ॥ अजण खजण कद्दमलित्ते, मूसगभक्खिय अग्गिविदड्ढे। तुण्णियकुट्टिय कुट्टिय, पज्जवलीढे होइ विवागु सुहो ॥ ३ ॥ असुहो वा इमो लाभो, माणुसेसु अ मज्झिमो। आसुरेसु अ गिलन्न, मज्झे मरणमाइसे ॥ ४ ॥ इत्युक्त किंचित् सिचयविशुद्धिस्वरूपम् ॥ २ ॥

अथ पात्रशुद्धिस्वरूप किंचिदुच्यते। तथाहि–पात्रमपि पिंडवदाधाकर्मादि दोषरहितमेव ग्राह्यम्। विशेषः पुनरेष एकेंद्रियविकलेंद्रियपचेंद्रियानयवत्वभेदात् पात्रमपि त्रेधा। तत्रैककरणशरीरनिष्पन्न तुबकादि १। द्विकरणागनिष्पन्न तु सख शुक्त्यादिमयम् २। पचाक्षागनिष्पन्न तु कुतुपशृगपात्रादि ३। एतेष्वाद्यत आद्यमेव ग्राह्यम्, तदप्यलाबुदारुमृन्मयत्व

मेदात्रिविधम्, एतदपि प्रत्येकं जघन्यमध्यमोत्कृष्टमेदात्रेधा । तत्र जघन्यमोलककारि १ । मध्यममात्रकम् २ । उत्कृष्टं तु पतद्ग्रहः ३ । इदमपि प्रत्येकं त्रिप्रकारं यथाकृत १ मल्पपरिकर्म २ बहुपरिकर्म ३ । पूर्वपूर्वाभावे चोत्तरमादेयम् । एतदपि उद्दिट्ठ १ पेह २ संगय ३ उज्झिय ४ घम्मत्ति समयोक्तैषणा चतुष्कशुद्धमेव ग्राह्यम् । तत्रैषणात्रयं पूर्ववद् व्याख्येयम् । तृतीया त्वेवं संगइयं वा वेजइयं वा (एतद् व्याख्या)कस्यापि गृहस्थस्य पात्रद्वैतं भवेत्, स चैकस्मिन् दिने एकैकं वारकेण व्यापारयति । तत्र यद् वाहयति तत् स्वांगिकम्, यत्तु तिष्ठति तद् वैजयिकम् । ईदृशं च कोऽप्यभिग्रहविशेषवान् मुनिर्याचत इति । पात्रविषये मूलोत्तरगुणविशुद्धिस्तु मुहकरणं मूलगुणा, पाएनिक्खोरणं च इयरेउत्ति सूत्रोक्त-विधिना विज्ञेया । इत्युक्तं किंचित् पात्रविशुद्धिस्वरूपम् ॥ ४ ॥

अत्र चैषणासमितौ पिंडविषये नंदिषेणमुनिनिदर्शनं यथा । तेन मासक्षपणपारणकेऽपि सुरमायासाधुवैयावृत्यकृते-ऽशुद्धजलं न गृहीतं तथान्यैरपि मुनिसिंहैरशुद्धाहारः परिहार्यः सर्वदैव । इदं च निदर्शनं पिंडविषयं दर्शितम्, एवं वसतिवसन-पात्रविषयेऽपि दृष्टांतयोजना विधेया समयानुसारेण । इत्युक्तं किंचिदेषणासमितिस्वरूपम् ३ ।

अथाऽऽदाननिक्षेपणासमितिस्वरूपं किंचिदुच्यते । तत्राऽऽदानेन सह निक्षेपणाऽऽदाननिक्षेपणा, तद्विषया समितिरा-दाननिक्षेपणासमितिः । सा च रजोहरणमुखवस्त्रादिकस्योपकरणस्य दंडकप्रभृतिकस्य उपग्रहिकोपकरणस्य प्रथमं चक्षुपा प्रत्युपेक्षणं तदनु रजोहरणादिप्रमार्जनां च विधाय ग्रहणनिक्षेपणे कुर्वता यतिवरेण समाराधिता भवति । अस्यां च समितौ सूत्रोक्तः सर्वोऽपि प्रतिलेखनाविधिरंतर्भवति । सा च प्रतिलेखना द्विविधा छद्मस्थसंबंधिनी केवलिसत्का च । इयं द्विविधापि

वस्त्रपात्र-विशुद्धि-स्वरूपम् इत्येषणा-समितिः ।

द्रव्यभावाभ्यां द्विविधा । तत्र ससक्तोपधिविषया प्रतिलेखना केवलिनां ससक्ताऽससक्तविषया च छद्मस्थानाम् । तत्राप्रत्युपेक्षित एव प्राणिभि ससज्यते तेन पूर्वमेव त प्रत्युपेक्षयति पचमावबोधिनः । अथ प्रत्युपेक्षितोऽप्युपधिरूपभोगकाले चेत् ससज्यते तदा ससक्तमेव केवलिन' प्रत्युपेक्षते । इत्युक्ता केवलिना द्रव्यप्रतिलेखना । अथ तेषामेव भावप्रतिलेखना प्रोच्यते तथाहि–वेदनीय कर्मातिबहु ज्ञात्वा निजायुःकर्म चाल्पतर विज्ञाय कर्मप्रतिलेखनाकृते कुर्वेति केवलिनः समुद्घातम् । अत्र च भावः कर्मोदयरूपोऽवसेय. । इत्युक्ता केवलिना भावप्रतिलेखना । अथ छद्मस्थानां द्रव्यप्रतिलेखना निगद्यते तथाहि–ससक्ताऽससक्तद्रव्यविषया च प्रतिलेखना छद्मस्थानाम् । यथा कस्मिंश्चिन्नगरे निशि तस्करगवेषणार्थं हिंडने प्रमत्ता आरक्षका विनाशिता नृपतिना तद्विपरीतास्तु सन्मानिताः । एवमुपकरणादि ससक्त भवतु मा वा तथापि ये प्रतिलेखना–प्रमार्जना विधौ प्रमाद्यति यतयस्तेषा भवभ्रमणलक्षणो दडः समापतति । ये तु तत्र न प्रमाद्यति तेषां तु न । अत्र दृष्टांतदार्ष्टांतिक योजना त्वेव नृपतिस्थानीया तीर्थपतयः । आरक्षकास्तु साधवः । भांडक च पुरम् । स्तेनस्थानीयास्तु प्राणाः । तस्करापहरणाय रत्नस्थानीय तु ज्ञानादित्रिकम् । दडस्थानीय तु ससारारण्यपरिभ्रमणम् । भावप्रतिलेखना तु किं कृत किं च कृतशेष किं च बाह्याभ्यतररूप तपः कर्तुं शक्यमपि कुर्वन्नाऽस्मि एव पूर्वरात्रेऽपररात्रे च यच्चिंतन तद्रूपाऽवसेया । उक्तार्थ–सवादिन्यश्चेमा श्रीमदोघनिर्युक्तिगाथास्तथाहि–दुविहा खलु पडिलेहा, छउमत्थाण च केवलीण च । अब्भिंतरबाहिरिया, दुविहा दव्वे य भावे य ॥ १ ॥ पाणेहि उ ससत्ता, पडिलेहा होइ केवलीण तु । ससत्तमससत्ता, छउमत्थाण तु पडिलेहा ॥ २ ॥ ससज्जइ धुवमेय, अपेहिय तेण पुव्वपडिलेहे । पडिलेहिय पि ससज्ज–इत्ति ससत्तमेव

जिणा ॥ ३ ॥ नाऊण वेयणिज्जं, अइबहुअं आउअं च थोवागं। कम्मं पडिलेहेउं, वचंति जिणा समुग्घायं ॥ ४ ॥ संसत्तमसंसत्ता, छउमत्थाणं तु होइ पडिलेहा। चोअग जह आरक्खी, हिंडंताहिंडिया चेव ॥ ५ ॥ तित्थयरा रायाणो, साहू आरक्खि भंडगं च पुरं। तेण सरिसा य पाणा, तिगं व रयणा भवो दंडो ॥ ६ ॥ किं कय किं वा सेसं, किं करणिज्जं तवं च न करेमि। पुव्वावरत्तकाले, जागरओ भावपडिलेहा ॥ ७ ॥ प्रतिलेखना च स्थानो १ पकरणा २ ऽवष्टंभ ३ स्थंडिल ४ मार्ग ५ प्रतिलेखनाभेदात् पंचविधा भवति। तत्र स्थंडिल प्रतिलेखना पारिष्ठापनिकासमित्यधिकारे वक्ष्यते। मार्गप्रतिलेखना तु ईर्यासमित्यधिकारे प्रोक्ता। तेन स्थानादित्रिकप्रतिलेखनास्वरूपमत्र कथ्यते। तत्र स्थानमूर्ध्वस्थाननिषीदनत्वग्वर्त्तनरूपं त्रिविधम्। तत्र स्थानमूर्ध्वस्थानलक्षणं तच्च कायोत्सर्गादिकार्ये निर्गमप्रवेशस्थानादि वर्जयित्वा प्रत्युपेक्ष्य चक्षुषा भूमिं यतनया च प्रमार्ज्य विधेयम्, एवं निषीदनमपि संदंशकप्रमार्जनपुरस्सरमासनं प्रत्युपेक्ष्य प्रमार्ज्य च कार्यम्। त्वग्वर्त्तनं तु दिने न विधेयमुत्सर्गतः, अपवादपदे तु मार्गश्रांतग्लानवृद्धा एते त्रयोऽप्याचार्यमनुज्ञाप्य प्रत्युपेक्षणादिपूर्वं संस्तारकोत्तरपट्टावास्तीर्य वर्जयित्वालोकं कुर्वंति। उक्तं च श्रीओघनिर्युक्तौ अद्धाणपरिस्संतो, गिलाणवुड्ढा अणुण्णवेत्ताणं। संथारुत्तरपट्टो, अत्थरण निवज्जणाऽऽलोगं ॥ १ ॥ निशि तु पौरुषीं यावत् स्वाध्यायं विधाय चैत्यवंदनमुखवस्त्रिकाप्रतिलेखनपुरस्सरं संज्ञा कायिक्योरुपयोगं विधाय प्रत्युपेक्षणपूर्वं संस्तारकोत्तरपट्टावूर्वोरुपपर्यंकत्रसंमील्य पादौ यतस्ततो भूमिं प्रमृज्य शनैः शनैः संस्तारकमास्तृणोति। तदनु तत्रोक्तविधिना संस्तारकविधिं पठति संस्तारप्रक्षेपविधिश्च वसतिभेदादवसेयस्तत्र वसतिस्त्रिधा, विस्तीर्णा लघ्वी प्रमाणोपेता च।

तत्रोत्सर्गतः प्रमाणोपेतैव ग्राह्या, यतो विस्तीर्णायां तस्यां भौतकार्पटिकादयः शयनाय समायाति। तैः सह सवासे च सयमात् विराधनादयो दोषा । सकटाया तु वसतौ प्रवेशनिर्गमयोः प्रस्खलनपतनप्रभृतयो दोषा.। अपवादपदे तु त्रिविधाऽपि ग्राह्या। तत्र सूरेः सस्तारककृते भूमित्रय विलोकनीय निर्वाता प्रवाता निर्वातप्रवाता च। शेषसाधूनां पुनरेकैका, तत्र विस्तीर्णाया वसतौ पुष्पप्रकरवत् विकीर्णाः सस्तारकाः क्षेपणीयाः यथा सागारिकावकाशो न भवेत्। लघ्व्यां तु पात्रकाणि मध्ये विधाय मण्डल्याः पार्श्वतः सस्तारकाः कार्याः। प्रमाणोपेतायां तु तस्यामेकैकस्य साधोः सस्तारककृते हस्तत्रयमिता भूमिर्भवति। सा चैवमूर्णामये सस्तारके साधु' स्वाप विधत्ते स च हस्तप्रमाणा क्षोणीं रुणद्धि। सस्तारकाच्च विंशत्यगुलानि विहाय हस्तमिते पादपुञ्छने पात्राणि स्थाप्यते। तत्र पात्रमष्टांगुलानि रुणद्धि पात्राच्च विंशत्यगुलानि मुक्त्वा परतोऽपरोऽनगारः स्वपिति स्थापना २४। २०। ८। २०। एव च कृते साधोः साधोश्च द्वौ द्वौ हस्तावन्तर भवेत्। एव च कृते भुक्त भोगाऽभुक्तभोगयतिकृता दोषाः परिहृता भवेयुः। तत्र भुक्तभोगस्यासन्नतया स्वपतोऽन्ययतिकायसस्पर्शतः पूर्वक्रीडित स्मृतिरूपो दोष । अभुक्तभोगस्य पुनरन्यमुनिसुकुमारशरीरसस्पर्शतो वनिताविषय कुतुक भवेत्, तथा परस्पर पादादि स्पर्शजनित' कलहश्च। तथा स्वपद्भिः शिरो यत्र कुड्य ततो हस्तमितां भूमिं मुक्त्वा विधेयम्। पदातोऽपि गमनमार्गे च तावती भूमिरुपत्याज्या। एव च सूत्रोक्तविधिना शयन विधाय कायिक्यादिकृते यदोत्तिष्ठति तदा द्रव्याद्युपयोग विधत्ते। तत्र द्रव्यत' कोऽह यतिर्गृही वा। क्षेत्रतः किमुपरितलेऽन्यत्र वा। कालतः किं रात्रिर्दिवसो वा। भावतः किं कायिक्यादिना पीडितो न वेति। अथ चेन्निद्रामुद्रितनेत्रः स्यात्तदा निस्तास रुणद्धि। तथा द्वार च पश्यति तद्दत्वाऽ

सज्जेति भणन् द्वारं यावत् प्रतिलेखयन् याति। स्तेनभये तु द्वौ साधू निर्गच्छतस्तत्रैको द्वारे तिष्ठति द्वितीयस्तु व्युत्सृजति। श्वापदभये तु त्रयो निर्गच्छंति तत्रैको व्युत्सृजति द्वितीयस्तु रक्षां कुरुते तृतीयस्तु द्वारे तिष्ठति। अथ चेद् व्युत्सृजतः प्रभूतसमयातिक्रमः स्यात्तदा द्वारेऽपरमनगारं संस्थाप्य द्वारस्थस्तत्प्रतिजागरणं कुर्यात्। कायिकीव्युत्सर्गानंतरं त्वीर्या-पथिका प्रतिक्रम्योत्कर्षतो यावदधीतं सूत्रमनुप्रेक्षणीयं यतिना जघन्यतोऽपि गाथात्रयम्। यदि च गाथात्रयमपि गुणितुं न शक्नोति ततः स्वपित्युत्सर्गतोऽप्रावरणः। चेत्तथा न शक्नोति कर्तुं तदा प्रावृणोत्येकं कल्पम्। तथाप्यशक्तो द्वे त्रीन् वा। तथापि यदि शीतेन बाध्यते ततोऽप्रावृत एव बहिः कायोत्सर्गं कुर्य्यात्ततश्चात्यंतं शीताभिभूतोऽभ्यंतरे प्रविशति तत्र च निवातमिति मन्यते। ततश्चैकं द्वौ त्रीन् वा कल्पान् प्रावृणोति। ततश्च समाधानं जायते। अत्र गर्दभनिदर्शनं यथा हि खरः समारोपितमनुरूपं भारं यदा वोढुं नेच्छति तदा तस्मिँस्तत्पतिरधिकतरभारारोपणं विधत्ते स्वयं च समारोहति। ततश्चापारकष्टेन कियद्भूमिं गते तत्पतिस्तस्मादुत्तरति। ततश्च समुत्तरितो मे भार इति मन्यमानः खरः शीघ्रं याति। तदनु पुनस्तस्मिन् कियद्भूमिं गतेऽधिकभारेऽपनीते स शीघ्रतरं याति। एवं साधोरपि शीतविषया भावना विधेया। उक्तार्थ-संवादिन्यश्च श्रीमदोघनिर्युक्तिगाथास्तथाहि पोरिसिआपुच्छणया, सामाइय उभयकालपडिलेहा। साहणिअ दुवे पट्टे, पमज्ज भूमिं जओ पाए ॥ १ ॥ संथारगभूमितिगं, आयरियाणं तु सेसमाणेगा। रुंदाए पुप्फइन्ना, मंडलिया आवली इयरे ॥ २ ॥ तम्हा पमाणजुत्ता, इक्किक्कस्स तओ तिहच्छसंथारो। भायेण संथारंतरं, जह वीसं अंगुला हुंति ॥ ३ ॥ मज्जारसुसगाईय, वारए न वि य जाणुपदणया। दो हत्थे अ

अगाहा, नियमा साहुस्स साहू अ ॥ ४ ॥ मुत्तामुत्तसमुत्था, भडणदोसा य वज्जिया एव। सीसतेण व कुड्डु तु, हत्थ मुत्तूण ठायति ॥ ५ ॥ सकोए सडास, उव्वतते य कायपडिलेहा । दव्वाईउवओग, णिस्सासनिरुंभणालोय ॥ ६ ॥ दार जा पडिलेहे, तेणभए दोण्णि सावण तिण्णि। जइ य चिरतो दारे, अण्ण ठावेत्तु पडिअरइ ॥ ७ ॥ आगम्मपडिक्कतो, अणुपेहे जाव चोद्दस वि पुव्वे। परिहाणि जा तिगाहा, निद्दपमाओ जढो एव ॥ ८ ॥ अतरतो व निवज्जे, असथरतो व पाउणे एक्क। गद्दभदिट्ठतेण, दो तिण्णि बहू जहसमाही ॥ ९ ॥ इत्युक्ता स्थानत्रिकप्रतिलेखना।

अथोपकरणप्रतिलेखनास्वरूप किंचिदुच्यते। तथाहि उपकरणप्रतिलेखना द्विविधा वस्त्रविषया पात्रविषया च। तत्र प्रथम वस्त्रविषया प्रोच्यते। तथाहि ऊर्ध्वं स्थिरमत्वरित पूर्वं प्राक् सर्वं वस्त्र पूर्वापरभागयोश्चक्षुषा निरीक्षेत। तत्रोर्ध्वं द्विधा, वस्त्रोर्ध्वं कायोर्ध्वं च। अत्राह परश्चेदुभयथाप्यूर्ध्वमित्युक्त तर्हि ऊर्ध्वीभूय दर्शाते वस्त्रमादाय करोतु यतिः प्रत्युपेक्षणा; उच्यते नैत-देव, किंतूत्कुटकस्थितस्तिर्यग् वस्त्र प्रसार्य दृढ च गृहीत्वा चदनलिप्त इवाऽन्योन्यमगान्यऽलगयन्त्रिभागबुद्ध्या यद् यतिः प्रत्युपेक्षणा करोति तदुभयथाप्यूर्ध्वं प्रोच्यते। प्रतिलेखना कुर्वता च मुनिना वस्त्र वपुश्च न नर्तयितव्ये, तथा शरीर वस्त्र च न चलित कर्त्तव्यम्। तथा न निरतर प्रस्फोटनादि विधेयम्। तथा मुशलवदूर्ध्वमधस्तिर्यक् च वस्त्र न लगयितव्यम्। दृक्प्रति लेखनानतर च तिर्यक्कृत वस्त्र पूर्वापरभागयोस्त्रिस्त्रिः प्रस्फोटनीयम्। तथा नव खोटकाः सिद्धान्तप्रसिद्धप्रस्फोटनात्मकाः पाणेरुपरि कर्त्तव्याः। तथा हस्ते प्राणिनां कुथुप्रभृतीनां प्रस्फोटनत्रिकत्रिकांतरित च प्रमार्जनेन त्रिस्त्रिर्विशोधन विधेयम्।

इमां च प्रतिलेखनां कुर्वता यतिवरेणारभटा १ संमर्दा २ मोसला ३ प्रस्फोटना ४ विक्षिप्ता ५ वेदिका ६ रूपाः षट् दोषाः परिहरणीयाः। तत्र वितथकरणं त्वरितं वा यदन्यान्यवस्त्रग्रहणं तदारभटा कीर्त्यते। १ संमर्दनं संमर्दा रूढित्वात् स्त्रीलिंगता। सा च वस्त्रांतः कोणसंचलने उपधेर्वोपरि निषीदने भवेत् २। मोसला तु तिर्यगूर्ध्वमधो वा वस्त्रलगने स्यात् ३। रेणुगुंडितस्य वस्त्रस्य प्रकर्षेण धूननं प्रस्फोटनं यस्यां प्रतिलेखनायां क्रियते सा प्रस्फोटना ४। विक्षिप्ता तु प्रत्युपेक्षितस्य वस्त्रस्याप्रत्युपेक्षिते क्षेपणं प्रत्युपेक्ष्यमाणवस्त्रांचलानां चोर्ध्वं क्षेपणे भवति ५। वेदिका तु पंचप्रकारा ऊर्ध्ववेदिकादिका। तत्रोर्ध्ववेदिका जान्वोरुपरि करयोर्विधाने १, अधोवेदिका तु जान्वोरधःकरकरणे २, तिर्यग्वेदिका तु संदंशकांतःकरयोः क्षेपे ३, उभयवेदिका तु बाह्वोरंतरे जानुयुग्मनिर्मितौ ४, एकावेदिका चैकबाह्वंतरे एकजानुविधाने ५-६। तथा इमेऽपि वक्ष्यमाणा दोषाः प्रतिलेखनायां वर्जनीयास्ते च श्रीओघनिर्युक्तिगाथाभिर्लिख्यंते। तथाहि—पसिढिल पलंब लोला एगामोसा अणेगरूवधुणा। कुणइ पमाणापमायं, संकियगणणोवगं कुज्जा ॥ १ ॥ पसिढिलमघणं अतिरा—इयं च विसमगहणं व कोणं वा। भूमीकरलोलणया, कड्ढणगहणेक्कआमोसा ॥ २ ॥ धुणणा तिण्ह परेणं, बहूणि वा घेत्तु एक्कई धुणइ। खोडणपमज्जणासु अ, संकियगणणं करि पमाई ॥ ३ ॥ (व्याख्या) प्रशिथिलं दृढं न गृहीतं प्रलंबमानं चलं एकांते गृहीतं ततः प्रलंबतो भूमौ लोलते हस्ते वा पुनर्लोलयति। एगा० मध्ये गृहीत्वा वस्त्रं घसन् हस्ताभ्यां त्रिभागावशेषं करोति अथवा अंगुलिभिर्वस्त्रं गृहीतव्यं तदेकांगुल्या गृह्णाति। णेगामोसत्ति पाठे तु अनेकामर्शा अनेके स्पर्शाः। अणेगरूवधुणत्ति अनेकप्रकारं कंपयति। अथवाऽनेकानि वस्त्राण्येकत्र कृत्वा धुनाति। तथा प्रमाणे प्रमादं करोति पुरिसादीन्न्यूनाधि-

कान् करोति । शकिते सति गणनामुपगच्छतीति शङ्कितगणनोपगातां करोति पुरिमादीन् गणयन्नित्यर्थः । द्वारगाथेय । ततो भाष्यकृदेनां प्रतिपद व्याख्याति । १ प्रशिथिलमघनमदृढ गृह्णाति । अनिरायतमतटित वा प्रशिथिलमुच्यते । विषम ग्रहणे सति लबकोण वस्त्र भवति भूमौ करे वा लोलयति प्रत्युपेक्षमाण । एगा० मध्ये वस्त्र गृहीत्वा तावदाकर्षण करोति यावत्त्रिभागशेषे ग्रहण जातम्, इयमेगामोसा एका घर्षणमित्यर्थः । अथवा कर्षणे ग्रहणे वाऽनेके आमोसा अनेकानि स्पर्शनानि तद्वस्त्रमनेकधा स्पृशतीत्यर्थः २ । धुनना कपना त्रयाणा पुरिमाणामुपरि यत् करोति बहूनि वा वस्त्राण्येकीकृत्य धुनाति खोटकेषु नवसु प्रमार्जनासु नवसु च प्रमाद करोति शकिते सति गणना करोति प्रमादी ३ । इय च प्रतिलेखनाऽन्यूनाऽतिरिक्ताऽविपर्यासा च विधेया । अत्र त्रिभिः पदैरष्टौ भगाः स्थापना एतेषु प्रथम पद प्रशस्त शेषपदान्यप्रशस्तानि । तत्र खोटकप्रमार्जनावेलाना न्यूनाऽधिकताविधानेऽशुद्धत्व प्रति प्राक् लेखनायाः । तत्र खोटकप्रमार्जनयोः प्रमाण प्रतिपादित वेलाप्रमाण तु कैश्चित् पूर्वमावश्यक विधाय प्रभा स्फुटा- वेलायां प्रतिलेखना क्रियत इत्युच्यते कैश्चित्तु प्रभायां स्फुटितायां कैश्चित्तु परस्पर वदनानि यदा वीक्ष्यते तदेति कैश्चित्तु कररेखा यदा निरीक्ष्यत तदेति एते चत्वारोऽप्यनादेशाः । यतः प्रथमभगत्रयेऽधकारमेत्र तुरीयभगे तु सतमसि सदने प्रोद्गतेऽपि दिनपतौ पाणिलेखा न निरीक्षत इति । सूत्रादेशस्त्वय प्रतिक्रमणसमाप्त्यनतर मुखांशुक १ रजोहरण २ रजोहरणनिषद्याद्वय ३-४ चोल पट्टः ५ कल्पत्रयो ८ संस्तारक ९ उत्तरपट्टः १० प्रतिलेखनासमाप्तिमनतरमेव यथा सूर्यः समुद्गच्छति तथा प्रतिलेखना विधेया । इय च वेलाऽन्यूनाऽधिका कार्या, विपर्यये दोषः । विपर्यासस्तु पुरुषोपधिभेदाद् द्विविधः । तत्र प्रथममात्मीयो

| |
|---|
| १११ |
| ७११ |
| १७१ |
| ७७१ |
| ११७ |
| ७१७ |
| १७७ |
| ७७७ |

पधिं प्रतिलेखयति, पश्चाद् गुरुग्लानादीनामयं पुरुषविपर्यासः। उपधिविपर्यासस्तु यथोक्तक्रमातिक्रमेणोपधिप्रतिलेखने। अथवा पात्रप्रतिलेखनावेलायां वस्त्रप्रतिलेखनाया अर्वागेव पात्रप्रतिलेखने कारणे तु विपर्यासमपि कुर्यात्, यथा स्तेनादिभये प्रथमं पात्राणि प्रत्युपेक्ष्यंते पश्चात्तस्मिन्न पश्यति वस्त्राणीति। इयं च वसनप्रतिलेखना प्रतिपादिता।



अथ पात्रप्रतिलेखनास्वरूपं किंचिदुच्यते। तथाहि वस्त्रप्रतिलेखनानंतरं पादोनपौरुषीं यावत् स्वाध्यायं विधाय पश्चात्-पादोनपौरुष्यां श्रोत्रादींद्रियोपयुक्तस्वल्लेश्यः पात्रद्वयं प्रत्युपेक्षेत। यतः प्रतिलेखनासमये समतीते सूत्रे कल्याणप्रायश्चित्तं प्रतिपाद्यते। श्रोत्रादींद्रियोपयुक्तता चेयं श्रोत्रेण भृंगादिगुमगुमायमानमाकर्णयति, चक्षुषा मूषकोत्केरादिरजः समालोकयति, नासिकायामर्दितजीवादिगंधं, गंधपुद्गलैरधरे व्याप्ते रसनया रसं जानाति, स्पर्शनेन तु मध्यप्रविष्टमूषकादिनिःश्वासवातं वेत्ति। एवं पंचभिरिंद्रियैर्दत्तोपयोगस्तान् भृंगादीनपनीय पात्रप्रतिलेखनां कुर्यात्। तत्र प्रथमं मुखांशुकं प्रत्युपेक्ष्य तदनु मुखवसन-रजोहरणाभ्यां चक्षुःप्रेक्षणपूर्वं गोच्छकं प्रमार्जयति। तं च प्रत्युपेक्ष्यांगुलीभिर्गृहीत्वा पटलानि प्रमार्जयति। तानि च प्रत्युपेक्ष्य पात्रकेसरिकां प्रत्युपेक्षेत। तया च पात्रद्वयं यथासंप्रदायं तदनु रजस्त्राणद्वयं तदनु पात्रबंधनं तदनु पात्रस्थापनम्। इयं च पात्रविषया प्रतिलेखना पादप्रोंछने उपविश्य विधेया। अत्राह विनेयः पूर्वं वस्त्रप्रतिलेखनोत्कटुकासनेन विधेयतया प्रतिपादिता तेन तां तथा निर्माय तदनुपादप्रोंछने उपविश्यात्र प्रत्युपेक्षणा कर्तुमुचिता नैवम्, एवं हि कुर्वतः सूत्रार्थयोः पलिमंथो भवेद् वेलाविलंबेन इयं पूर्वाह्नप्रतिलेखना प्रोक्ता।



अथापराह्नप्रतिलेखनास्वरूपं किंचिदुच्यते तथाहि—प्रत्युपेक्षका द्विविधा भक्तार्थिका अभक्तार्थिकाश्च। अनयोर्द्वयोरपि

शैक्षादीनां चोपधिं प्रत्युपेक्ष्य पुनर्मुखवस्त्रिकां प्रतिलेखयित्वा गुर्वादेशपूर्वं पात्रमात्रकादिसकलोपधिं प्रत्युपेक्ष्य प्रान्ते चोलपट्टं प्रतिलेखयति। ये तु भुक्तवतस्ते प्रथमं चोलपट्टं प्रतिलेखयति, तदनु पात्रमात्रकसंबंधिनमुपधिं, ततो गुर्वादेशपूर्वं गुर्वादीना मुपधिं, तदनु शेषाणि गच्छे साधारणानि पात्राणि वस्त्राणि चापरं भोग्यानि प्रतिलेखयति। तदनु वदनवसनप्रतिलेखनपूर्वं गुर्वादेशमादाय सौवोपधिं रजोहरणं च प्रतिलेखयति। यस्य च साधोर्यदा प्रतिलेखना संपूर्णा भवति तदा स साधुर्नवीनं पठति पूर्वपठितं वा परावर्त्तयति। अन्यथा वैयावृत्त्यादिव्यापारं करोति, एष सूत्रोक्तो विधिः। यदुक्तं श्रीओघनिर्युक्तौ पडिलेहणा उ दुविहा, भत्तट्ठिय एयरा य नायव्वा। दोण्हंवि अ आइपडिलेहणा उ मुहणंतगसकाय ॥ १ ॥ तत्तो गुरू परिन्ना गिलाणसेहाति जे अभत्तट्ठी। संदिसह पायमत्ते, अप्पणो पट्टगं चरिमं ॥ २ ॥ पट्टगमत्तयसयमोग्गहो य गुरुमाइयामणुन्नवणा। तो सेसपायवत्थे, पाउछणयं च भत्तट्ठी॥ ३ ॥ जस्स जहा पडिलेहा, होइ कया सो तहा पढइ साहू। परियट्टेइ व पयओ, करेइ वा अन्नवावारं ॥ ४ ॥ गुरुसंप्रदायस्त्वेवं यदुपधिमुखपोतिकां प्रत्युपेक्ष्य तदनु स्वाध्यायं विधाय गुर्वादेशपूर्वमुपधिं प्रत्युपेक्षते इति। इमां च प्रतिलेखनां कुर्वता यतिवरेण चतुर्विधाऽपि कथा वर्जनीया। तथा वाचनादिक-पंचविधस्वाध्याय-सूत्राध्ययनाध्यापन-प्रत्याख्यानविधापनाद्य-नवद्यमपि न कर्त्तव्यम्। यतः प्रतिलेखना त्यक्तान्यनिखिलकृत्येन मुनिसत्तमेनाप्रमत्ततया विधेया। प्रतिलेखनाप्रमत्तस्तु यतिः षट्कायविराधको भवेत्। तथाहि कुम्भकारादिवसतिस्थः प्रतिलेखनाप्रमादी जलकलशादि प्रलोठयेत्, जलेन च पृथिव्यग्निबीजकुंथुप्रभृतीनां विराधना, यत्र च वह्निस्तत्र वातः, एवं षट्कायविराधना। अथवाऽम्भःकुम्भे प्रलोठिते

तद्गतास्त्रसा विराध्यंते वनस्पतिकायश्च, वस्त्रांतेन पुनरलाते संघट्टिते जातु प्रदीपनमपि संभवेत्, एवं षट्कायविराधना । आत्मसंयमोपघातावपि संभवतः । एवं द्रव्यतः षट्कायानपि विराधयेत् । भावतस्तु तद्विराधनाया असंभवेऽपि तेषां विराधकः । अप्रमत्तस्तु यतिर्विराधनासंभवेऽप्यविराधकः । उक्तं च श्रीओघनिर्युक्तौ पडिलेहणं करंतो, मिहो कहं कुणइ जणवयकहं वा । देइ व पच्चक्खाणं, वाएइ सयं पडिच्छइ वा ॥ १ ॥ पुढवीआउक्काए, तेऊवाऊवणस्सइतसाणं । पडिलेहणापमत्तो, छण्हंपि विराहओ होइ ॥ २ ॥ घडगाइपलोट्टणया, मट्टि अगणी अ बीअकुंथाई । उदगगया व तसेयर, ओमुय संघट्ट झावणया ॥ ३ ॥ इअ दव्वओ उ छण्हं विराहओ भावओ इहरावि । उवउत्तो पुण साहू, संपत्तीए अवहोओ ॥ ४ ॥ इति । अथ नूतननिवेशे जातु मूषकैरुक्खर उत्कीर्णः स्यात्तेन च पात्रं गुंडितं स्यात् तथा जातु स्निग्धायां भुवि हरतनुर्बिंदुः पात्रस्थापनकं भित्त्वा लग्नो भवेत् । कदाचिदुपधौ पात्रे वा भ्रमरीगृहं तदंडकादि वा लग्नं भवेत् । एतेषां तु यतना श्रीओघनिर्युक्तिगाथाभिर्लिख्यते । तथाहि नवसन्निवेसे दूराओ, उक्खिरो मूसएहिं उक्खित्ते । निद्धमहीहरतणुओ, ठाणं भित्तूण पविसिज्जा ॥ १ ॥ कुच्छलगारिअ घरगं, संविघणसंताणाइया व लग्गिज्जा । उक्खेरं सठाणे, हरतणु चिट्ठिज्ज जा मुक्को ॥ २ ॥ इयरेसु पोरसि तिगं, संविक्खावित्तु तत्तिय छिंदे । सव्वं वा विगिंचइ, पोराणं मट्टियं ताहे ॥ ३ ॥ एतद् व्याख्या नूतनसंनिवेशे मूषकैरुक्खर उत्कीर्णस्तेन रजसा पात्रकं गुंड्यते । स्निग्धायां भुवि हरतनुः सलिलबिंदव उन्मज्य लगंति पात्रस्थापनकं भित्वा प्रविशेत् संलग्नो भवेत्, अस्थाने उदककथनं पृथिवीघनसंतानयोस्तुल्ययतनाख्यापनार्थं १ कोच्छं भ्रमरीगृहम्, आदिशब्दादंडकादि, एषां

तृतीय-
लहर्यां
तृतीय-
स्तरङ्गः ।

उपकरण-
प्रति-
लेखना ।

यतनेय मूषकोत्केरः स्वस्थानमुच्यते २ भ्रमरीगृहादिषु प्रहरत्रय यावत् सचि० प्रतिपाल्य यदि तावत्यापि वेलया नापैति ततः प्रस्थापनादेस्तावत् मात्र छित्वा परित्यज्यते, अन्यसद्भावे सर्वमेव त्यज्यते, अत्र यदि तत् पुराणमृत्तिकया कृत ततः ताहेति तस्मिन् प्रतिलेखनाकालेऽपनीयते यदि तत्र कृमिका न तया प्रवेशिता ३ इत्युक्तमुपकरणप्रतिलेखनास्वरूपम् २ ।

अथाऽवष्टम्भप्रतिलेखनास्वरूप किंचिदुच्यते । तथाहि प्रत्युपेक्षिते प्रमार्जितेऽपि कुड्यादिप्रदेशे कुंथुपिपीलिकामत्कुणलूता प्रभृतयः सचरिष्णवस्त्रसाः प्राणाश्चतुर्षु दिक्षु समायांति निरतर तेन प्रतिलेखना न शुद्ध्यत्यवष्टम्भविषया अतो हेतोर्निरामयस्य तरुणस्यावष्टम्भो न कल्पते यतस्तस्मिन् विधीयमाने तेषां त्रसजतूनां विराधना सभवति । तथा जातु कुड्यादिराजिकायां स्थितोऽवष्टम्भे विधीयमाने सरीसृपवृश्चिकादिर्भक्षयति । तथोपरिस्थितगृहकोलिकादिक्षते दृशि निपतिते तदुपघातोऽपि भवेत् । तथाजातूद्देहिकादिभक्षितमूले स्तम्भादावष्टम्भ कुर्वतस्तस्य पतनमपि भवेत्तथा च सयमात्मविराधना । एव बहुदोषसभवाद वष्टम्भ उत्सर्गतो वर्जनीयः । अपवादपदे तु यस्य वृद्धग्लानादेः पार्श्वानि गाढ दुष्यति सोपवेष्टुमशक्नुवन्नवष्टम्भ गृह्णाति सयतपृष्ठौ पाषाणस्तम्भे सुधालिप्तकुड्यादौ उपधिवेटिकायां वा प्रत्युपेक्षणप्रमार्जनपूर्वं कियत्कालम् । इत्युक्ताऽवष्टम्भ-प्रतिलेखना ३ । इत्युक्त स्थानो१पकरण२वष्टम्भ३प्रतिलेखनात्रिकम् । एतद्विषये च प्रमादाऽप्रमादावाश्रित्य सोमिल मुनिनिदर्शनम् । तथाहि कैश्चिद्गुरुभिः कस्मिंश्चिद् ग्रामे गन्तुकामैर्मुनय उक्ता पद्याऽसपूर्णेऽपि प्रतिलेखनां पात्रविषयां कुरुतेति तदनु तै' श्रीगुरुवचनेन सा निर्मिता । अथ च केनचिन्निमित्तेन गुरवः स्थितास्तदनु पुनः श्रीगुरुवचसा तैः सा विहिता सोमिलस्तु न कुरुते गुरुभिरुक्तस्तु प्रतिवक्ति किं वृश्चिकाः कीटाः सर्पा वा प्रविष्टाः पात्रेषु यत्कृताऽपि तत्

अवष्टम्भ-प्रति-लेखना । तथा च तुर्य-समितिः।

प्रतिलेखना पुनः क्रियते । अथ च द्वितीयदिने पादोनपौरुष्यां पात्रप्रतिलेखनां कुर्वता तेन पन्नगो निरीक्षितः, दृष्ट्वा च स भीतो गुरुशरणं गतो देवतया चपेटां दत्त्वा भाषितः । तदा च गुरुभिरुक्तः सुशिष्यो नोल्लंठं भाष्यते यतः प्रतिलेखनया भूयसी कर्मनिर्जरा श्रेष्ठितनयस्येव । स हि चारित्रमादायाभिग्रहपूर्वं साधूनां प्रतिलिख्य दंडकग्रहणनिक्षेपणे कुर्वन्नष्टकर्म-निर्मूलनपूर्वमपुनर्भवंगतः । एतदाकर्ण्य सोमिलसाधुरपि प्रतिलेखनायामप्रमत्तः समभूत् । एवं च यथाऽनेन प्रतिलेखनायां प्रथमं प्रमादः कृतस्तथाऽन्यैर्न कार्यः । यथा च स पश्चात् प्रतिलेखनायामप्रमत्तः समभूत्तथाऽपरैरपि यतिवरैरप्रमत्तैर्भवित-व्यम् । इत्युक्तं किंचिदादाननिक्षेपासमितिस्वरूपम् ४ ।

अथ पारिष्ठापनिकासमितिस्वरूपं किंचिदुच्यते । तथाहि उच्चारं प्रश्रवणं मुखनिर्गतश्लेष्मरूपं खेलं नक्रनिर्गतमलरूपं सिंघाणं देहमलमधिकाहारमधिकोपधिं जीवविप्रमुक्तदेहमशुद्धाहारोपधी अन्यद्वा कारणेन गृहीतं परिष्ठापनार्हमनापाता-संलोके१ऽनुपघातिके२समे३ऽशुषिरे४ऽचिरकालकृते५विस्तीर्णे६दूरमनगाढे७ऽनासन्ने८बिलविवर्जिते ९ त्रसप्राणबीजादिस्थावर-जंतुविरहिते व्युत्सृजेत् पारिष्ठापनिकासमितः । तत्राऽनापाताऽसंलोकादिपदानां व्याख्या, तत्रापात आगमो यस्मिन्नस्ति मनुजप्रभृतीनां तदापातमविद्यमान आपातो यत्र तदनापातम्, अविद्यमानः संलोको यस्मिंस्तदसंलोकम्, अनापातं च तदसंलोकं चाऽनापातासंलोकम्, अयं प्रथमो भंगः १ । अनापातसंलोकमिति द्वितीयः २ । अपातासंलोकमिति तृतीयः ३ । आपातसंलोकमिति तुरीयः ४ । एतेषु भंगेषूत्सर्गतः प्रथमभंग एव ग्राह्यः । तत्रापातः स्वपक्षपरपक्षावाश्रित्य द्विविधः । स्वपक्षोऽपि संयतसंयती आश्रित्य द्विप्रभेदः । संयता अपि द्विविधाः संविग्ना असंविग्नाश्च । संविग्ना अपि द्विप्रकाराः

समनोज्ञाऽमनोज्ञाश्च । असविग्ना अपि द्विभेदा असविग्नपाक्षिकाः सविग्नपाक्षिकाश्च । परपक्षोऽपि द्विविधो मानुपतिर्यग्भेदात् । अनयोश्च प्रत्येक त्रैविध्य पुरुपस्त्रीनपुसकभेदत्त* । पुरुषा अपि दडिककौटुबिकप्राकृतिकभेदात् त्रिप्रकाराः । तत्र दडिको राजा, कौटुबिकः श्रेष्ठिप्रभृतिकः, प्राकृतिकः प्रकृतिमध्ये यः प्रधानः । एते च शौचवाद्यशौचवाद्यादिभेदात् द्विविधाः पुरुपवद् वनितानपुसकभेदा अपि वाच्याः । एते च मनुष्यभेदा यथा सामान्येनोक्तास्तथा परतीर्थकानप्याश्रित्य वाच्याः । तिर्यंचोऽपि द्विविधा दृप्ताऽदृप्तभेदात् । एते च प्रत्येक जघन्यमध्यमोत्कृष्टभेदेन त्रिविधाः । तत्र जघन्या एलकादयः, मध्यमा गवादय*, उत्कृष्टा* करटिप्रभृतयः । एते सर्वेऽपि स्त्रीपुनपुसकभेदेन त्रिविधाः । एतेऽपि जुगुप्सिताजुगुप्सितभेदेन द्विविधाः । एतेषां मध्ये मनोज्ञसयतानामापाते गतु कल्पते अमनोज्ञसयतानामापाते तु तेपामन्यसमाचारीं निरीक्ष्य विनेयानां स्वसमाचारीपक्षपातजः कलहो भवति । असविग्नापाते तु प्रचुरधावनशौचकरण दृष्ट्वा शैक्षकाणामन्यथाभावो भवतिः यदेते शुचयो न त्वस्मद्गुरव इत्यतो हेतोस्तन्मध्ये ते यांति । सयत्यापाते तु शकादिबहुदोपसभवः । नरनार्यापाते तु नराणामेव शका सभवति यत्र वय याम आत्मानुचिताहेतवे यत्र चाऽस्मद् योपिद्वर्गो याति तदर्थं तत्रैव यदेते यांति तन्नूनमेतेऽस्मद्वनिताः कामयन्ते ताभिः सह विहितसकेता वा । तथा जातु जलस्याऽल्पतायां कालुष्येऽभावे वा प्रवचनाऽवर्णवादो वा भवेत् । अमात्यादिर्वा जातु तत्तथाविध स्वरूप निरीक्ष्य जनगृहे भिक्षार्थं प्रवेशमपि निपेधयति । अभिनवश्रावकस्य वा मनो विपरिणामः स्यात् । योपिन्नपुंसकापाते तु जनाना शका स्यात् । जातु वनितानपुंसकाभ्यां च बलाद् गृहीतस्य यतेराकर्पणो ड्डाहादयो दोपाः सभवेयु , एते मनुष्यापाते दोपा उक्ताः । दृप्ततिर्यगापाते तु आहननादयो दोपाः । गर्हितगर्दभ्याद्यापाते

तु शंकादयो दोषाः। एवं यथाऽऽपाते दोषा उक्तास्तथा संलोकेऽपि वाच्या नवरं मनुष्याणां न तु तिरश्चां संलोके। एवं द्वितीय-स्थंडिले संलोकदोषः, तृतीयस्थंडिले त्वापातदोषः, तुरीयं स्थंडिले त्वापातसंलोकदोषः। प्रथमस्थंडिलं तु निर्दूषणम्। तत्र च गच्छतां यतीनामियं मर्यादा तथाहि एका काले संज्ञा द्वितीया वाऽकाले। तत्र प्रथमा तृतीयपौरुष्यां तृतीयपौरुषीवर्जशेष-काले च द्वितीया सा चेत् प्रथमपौरुष्यां स्यात्तदा पृच्छा क्रियते यास्यति कश्चिद् यतिर्बहिर्भुवमिति तदनु तदनुरूपं पानीय-मानीयते द्विचत्वारिंशद्दोषपोषविरहितम्। तच्चेत्कांजिकमपुष्पिकं तदा तद् विहृत्यान्यया दिशा बहिर्भुवं गम्यते, यथा गृहस्थैरेवं विज्ञायते यदेतन्न शौचकृते गृहीतं यतिभिः किंत्वन्यस्मिन् कार्यं इति पानकं चातिरिक्तं गृह्यते कदाचिदन्यमुनेरपि तत्कार्यं स्यात्। सागारिके च पश्यति उच्छोलना वा विहिता विलोक्यते। तच्च पानीयं श्रीगुरोः पुरत आलोच्य तत्पृच्छा-पूर्वं बहिर्भुवं गम्यते। इयमकालसंज्ञाविधिः। कालसंज्ञां तु भुक्तोत्तरकालं भवेत्। तस्याश्चायं विधिः यद्भोजनानंतरं पात्र-काणि कल्पयित्वा त्रिसाधुयोग्यं जलमादाय द्वाभ्यां २ गंतव्यं न त्वेककेन। गच्छतां चायं विधिः असमश्रेणिस्थैरत्वरितैर्विकथा विरहितैरीर्याशोधनपरैरनगारैर्गन्तव्यं बहिर्भुवि। तस्यां च गच्छद्भिः प्रथमं निषीदयित्वाऽपानपुंछनार्थं डगलकानि ग्राह्याणि। कीटकादित्रसजंतुपातनार्थं च तेषां प्रस्फोटनं विधेयं श्लथं कठिनं चोच्चारं विज्ञाय तदनुरूपानि तानि समादेयानि। तदन्व-नापातासंलोके स्थंडिले गंतव्यम्। इत्यनापातासंलोकमिति पदं सप्रसंगं व्याख्यातम् ॥ १ ॥

अथाऽनुपघातिकपदं व्याख्यायते। तत्रोपघात आत्म१प्रवचन२संयमो३पघातभेदात्त्रिविधः। तत्रारामादौ व्युत्सर्जने आत्मोपघातस्तद्धनिकैः पिट्टनात् १। बहुपुरीषप्रदेशे च व्युत्सर्जनेऽशुचयोऽमी मुनय इति न किंचिदेषां शासनमिति

प्रवचननिंदया प्रवचनोपघातः २। अगारदहनभूम्यादौ तु व्युत्सर्जने संयमोपघातः, अंगारदहनादिकार्याणां जनैरन्यभुवि विधानात् ३। अथ च त्रिविधोपघातो यत्र न भवेत्तदनुपघातिकम् २।

-अथ सममितिपदं विव्रियते। तथाहि समस्थंडिलं तद् विज्ञेयं यत्र भूमिर्विषमा न भवेत्, विषमभूमौ तु जातु यतेर्लुठनादात्मविराधना पुरीषप्रश्रवणयोस्तु लुठने षट्कायोपमर्दनात् संयमविराधना ३।

अथ शुषिरपदव्याख्या। तृणपर्णादिच्छन्नो भूभागः शुषिरमुच्यते। तत्र च जातु वृश्चिकादिना भक्षणे आत्मविराधना। मूत्रोच्चाराभ्यां तद्गतत्रसादिजंतुजातोपघातेन संयमविराधना ४।

अथाचिरकृतपदविवरणम्। यत् स्थंडिलं यस्मिन् ऋतौ हुतवहादिभिरचित्तीकृतं तस्मिन्नेवापरस्मिन् ऋतौ चिरकृतमित्युच्यतेऽयोग्यत्वात्तद्विपरीतं त्वचिरकृतम्। यत्र वर्षाकालग्राम उषितस्तत् स्थंडिलं द्वादशवत्सरान् यावदचित्तत्वादचिरकृतम् ५।

अथ विस्तीर्णपदव्याख्या। जघन्यतोऽपि यत् स्थंडिलमेकहस्तविस्तारमुत्कर्षतस्तु द्वादशयोजनव्याप्तं तद् विस्तीर्णमुच्यते ६।

अथ दूरमवगाढं व्याख्यायते। यत् स्थंडिलं चत्वार्यंगुलान्यधस्तादचित्तीभूतं तज्जघन्यतो दूरमवगाढं मध्यमोत्कृष्टे तु ते चतुर्णामंगुलानामधस्तादवसेये ७।

अथाऽनासन्नपदव्याख्या। आसन्नं द्विविधं द्रव्यभावभेदतः। तद्विपरीतं त्वनासन्नम्। तत्र द्रव्यतश्चैत्यारामगेहानामा-

सन्नम् । तत्र च व्युत्सृजतः कर्मकरादिभिस्तद्धनिकेनोच्चारपरित्याजने सचित्तोदकेन पाणिप्रक्षालनात् संयमविराधना । तद्धनिकश्चेद् रुष्टः ताडयति तदात्मविराधना । गाढप्रश्रवणपुरीषवेगस्तु भावासन्नम् । तत्र चात्मसंयमप्रवचनविराधनाः स्वयमेव व्याख्येयाः ८ ।

स्थण्डिल-
स्वरूपम् ।

अथ विलवर्जितपदव्याख्या । यत्र कीटिकानगरादि न स्यात्तद् विलवर्जितम् । विलोपरित्युत्सर्जने हि संयमात्मविराधने ९ । दशमपदमुत्तानार्थं तत्रापि संयमात्मविराधने १० । एतेषां पदानामेकद्विव्यादिसंयोगभेदाच्चतुर्विंशतिसहस्राणि भवंति । तेषु प्रत्येकपदप्रोक्तदोषतः सविशेषता दोषाणां वाच्या । एवं सर्वदोषविवर्जिते यथोक्ते स्थंडिले गत्वाऽवग्रहमनुज्ञाप्य प्रत्युपेक्षणपूर्वं त्रिः प्रमृज्य रजोहरणाद्युपकरणं वामे ऊरुणि पानीयपात्रं तु प्रदक्षिणपाणौ स्थापयित्वा डगलकानि तु तत्रान्यत्र वा स्थापयित्वा व्युत्सृजेदुच्चारादि । तदवसरे चोत्तरपूर्वगोर्दिशोः समीरस्य ग्रामस्य सहस्रांशोश्च पृष्ठं वर्जनीयम् । यत् उत्तरपूर्वे पूज्यतया विश्रुते । पवनस्य पृष्ठदाने तु घ्राणार्शांसि भवेयुः । ग्रामसहस्रधाम्नोस्तु पृष्ठदाने जनेऽवर्णवादः । यस्य तु पुरीषं कृमिसंसक्तं स च्छायायां सृजतां । तदभावे चांतर्मुहूर्त्तं तिष्ठति तेषां स्ववपुषा छायां कुर्वन् । यथा ते स्वयमेव परिणमंते । एवं व्युत्सर्गं विधायादूरप्रदेश एवावग्रहमनुज्ञाप्य त्रिभिश्चुलुकैराचमनं कुर्यात् । तदनु डगलकसंज्ञादिव्युत्सृष्टमिति त्रिः पठेत् । एवमनापातासंलोकस्थंडिलस्य समनोज्ञसंविग्नापातरूपस्थंडिलस्य च सर्वथाऽभावेऽमनोज्ञसंविग्नापातस्थंडिले गंतव्यम् । तस्याप्यभावे संविग्नपाक्षिकाणामसंविग्नानामापाते । तस्याप्यसंपत्तावसंविग्नपाक्षिकाणां तेषामापाते । तस्याप्यभावे गृहस्थालोके । तस्याप्यभावेऽशौचवादिपुरुषाणामापाते । तदभावे स्त्रीनपुंसकालोके गंतव्यम् । नवरं गृहस्थालोके

प्रत्येक प्रत्येक पानीयपात्राणि विलोकयन्ते प्रचुरवारिणा च कुरुकुचाचरणक्षालनादिका कार्या। स्त्रीनपुंसकालोके तु सा पराङ्मुखतया विधेया। स्त्रीनपुंसकालोकस्य स्थण्डिलस्य त्वभावे तिरश्चां पुरुषाणामापाते गम्यते। तस्याप्यऽभावे तिर्यङ्नपुंसकवनितानामापाते। नवरं जुगुप्सितदृप्ततिर्यगापातं तु वर्जयेत्। तिर्यग्नपुंसकवनितापातस्थण्डिलाभावे त्वशौचवादिदण्डिककौटुम्बिकप्राकृतिकस्त्रीनपुंसकापातेऽपि गम्यते। अत्राह विनेयः, ननु शक्रादयः प्रागुक्तदोषास्तदवस्था एवैतेषु स्थण्डिलेषु गच्छताम्। सत्यं परं यदि निर्दूषणस्थण्डिलाप्राप्त्या गच्छत्येतेषु तदा शक्रानिशुचिकृते काशनादि कुर्वंति, अन्योन्यं जल्पतः सभूय च गच्छति कुरुकुचां च पादप्रक्षालनादिकां कुर्वंति। उक्तं च श्रीओघनिर्युक्तौ पढमासइ अमणुन्ने, पराणगिहिआण वावि। आलोए पत्ते य सत्तकुरुकुअ, दव च पउरं गिहत्थेसु ॥ १ ॥ तेण परं पुरिसाण, असोअवाईण वच्च आवाय। इत्थिनपुंसालोए, परम्मुहो कुरुकुआसाओ ॥ २ ॥ तेण परं आवाय, पुरिसे अरइत्थिआण तिरिआण। तत्थवि अ परिहरिज्जा, दुगुंछिए दित्तचित्ते अ ॥ ३ ॥ तत्तो इत्थिनपुंसा तिविहा, तत्थ वि असोअवाईसु। तहिअं तु सरकरण-आउलगमण कुरुकुआओ ॥ ४ ॥ एवं यथोच्चारस्य परिष्ठापनविधिः प्रोक्तस्तथा प्रश्रवणादीनामपि स परिज्ञेयः। इति सामान्यतः पारिष्ठापनिकास्वरूपं किंचिदुक्तम्।

अथ विशेषतो जाताजातपारिष्ठापनिकास्वरूपं किंचित् कथ्यते। तत्र मूलगुणैरुत्तरगुणैश्चाशुद्धा लोभातिरेकगृहीताऽभियोगकृता विषकृता च जाता, तद्विपरीता त्वजाता। तत्र मूलगुणाः प्राणातिपातादयः। उत्तरगुणा आधाकर्मप्रभृतयः। अभियोगो विद्यामन्त्रयोगादिभिर्वशीकरणम्। अत्र विद्यायां निदर्शनं यथा काचिदगारी भर्तुरनिष्टा तद्वशीकरणोपाय

प्रश्रयामास कांचित् परिव्राजिकाम् । तया चाभिमंत्रितुं दत्तस्तस्याः समर्पितस्तत्कृते । तदनु साऽगारी स्वपतिमृतिशंकया तं त्यक्तवत्यचकरे । अथ च तं भक्षयित्वा तस्यामनुरक्तः स खरस्तस्या द्वारं कुट्टयामास । तदा च पतिपृष्टया तया यथास्थिते कथिते प्रातस्तेन दंडापिता सा परिव्राजिका । एवमभिमंत्रिते पिंडे गृहीते यतेरपि रागादिदोषोत्पत्तिर्जायते । तेन स त्यज्यते ।

अथ योगविषये दृष्टांतः काचिद्दविरतिका कस्मिंश्चित्सुरूपे भिक्षावनुरक्ता । स च तां नेच्छति । तदनु तया तस्य योगपिंडो दत्तः । तस्मिंश्च गृहीते तस्य मनस्तस्या अभिमुखमभूत् । तदा च स शंकितो गोचरान्निवृत्तो गुरोरग्रे तं निमुच्य कायिकां व्युत्सर्जयामास । अथ च तस्मिन् योगपिंडे पाणौ गृहीते गुरोरप्यशुभभावः । अथ च शिष्येण तस्मिन्नशुभभावे आलोचिते गुरुणोक्तं ममाप्यशुभ–भावस्तन्नूनं तया योगपिंडो दत्तः; तदयं परिष्ठापनार्हः । इति गुरुभिरुक्ते स पिंडः शिष्येण यथोचिते स्थंडिले परिष्ठापितः । एवं योगपिंडे गृहीते नीरागस्यापि रोगोत्पत्त्यादिदूषणं संभवेत्तस्मात् स विधिना परिष्ठापनीयः एवं विषपिंडोऽपि गंधादिना परिज्ञातः परिष्ठाप्यते विधिना । विधिश्चायं एकांतेऽनापातेऽचित्ते गुरूपदिष्टे स्थंडिले भूम्या मिश्रीकृत्य तथा परिष्ठापनीयो विद्यायोगविषपिंडो यथारण्यकादिजंतूनां नोपघातादिदोषः संभवेत् । परिष्ठापयद्भिश्च यतिभिर्वारत्रयं श्रावणं करणीयं येन दोषेण स पिंडो दुष्टो भवति तस्य । एवं मूलोत्तरगुणाशुद्धे लोभातिरेक-गृहीते च पिंडो त्रिः श्रावणं कर्त्तव्यम् । नवरं मूलगुणाशुद्धे एकपुंजः कार्यः । उत्तरगुणाशुद्धे लोभातिरेकगृहीते च पिंडे पुंजद्वयं कार्यम् । एवमेतान् पिंडान् परिष्ठाप्य व्युत्सृष्टमिति वारत्रयम् । एवमशुद्धाहारपरिष्ठापना जाता प्रोक्ता तद्विपरीता त्वजाता । नन्वजाता परिष्ठापना कथं संभवति । यतः शुद्धाहारोऽपि प्रमाणोपेत एव गृह्यते प्रमाणोपेते च गृहीते कथं

परिष्ठापना । उच्यते आचार्यग्लानप्राघूर्णकदुर्लभद्रव्यसहसादानैरजाताऽपि परिष्ठापनिका संभवति । तथाहि कुत्रचित् क्षेत्रे आचार्यादिप्रायोग्यद्रव्यं दुर्लभं भवेचत् च सर्वेऽपि संघाटका आचार्यादियोग्यं द्रव्यं गृह्णति ततश्च शुद्धाहारेऽधिके गृहिते परिष्ठापनं संभवति । तथा सहसा प्रचुराहारे दत्तेऽधिकतया परिष्ठापनं संभवति । अत्र च केचिदाहुः-यद्यसावाचार्यस्तरुणो निरुपहतेंद्रियश्च तदाऽसौ मण्डल्यामेव सर्वैः समं सममेव भुंक्ते । अथाऽसहस्तदैतस्य कृते पृथक् तद्योग्यद्रव्यग्रहणम् । एवं प्राघूर्णकेऽपि । केचिचैव वदति यदुत समर्थस्याप्याचार्यस्य कृते तद्योग्यं द्रव्यं पृथग्ग्राह्यम् । यत एते गुणाः आचार्यस्य मनोज्ञाहारेण सूत्रार्थयोः स्थिरीकरणं विनयगुरुपूजे च कृते भवत शिष्यस्य गुरुं प्रति बहुमानो दर्शितो भवति दातुश्च श्रद्धावृद्धिः कृता स्यात् गुरोर्बुद्धिबलयोर्वर्द्धनं च कृतं भवति । एवं च गुरुभक्तौ कृतायां गच्छस्य तीर्थस्य च भक्तिः कृता स्यात्तस्माल्लभे सति द्रव्यक्षेत्रकालभावैरुत्कृष्टमेव वस्तु समादेयमाचार्यस्य कृते । तत्र पयसा सह कलमशाल्योदनं द्रव्योत्कृष्टम् । तदप्राप्तौ हान्या तावद् वाच्यं यावज्जलेन सह राद्धं कोद्रवौदनं तदपि च मृदुबहुस्नेहसहितं च क्षेत्रकालावाश्रित्य तु यद् यस्मिन् क्षेत्रकाले चोत्कृष्टं तदेव सूरेः समुचितम् । भावे तु यद् यस्य सूरेरनुकूलं तत्तस्य समानेयम् । एतच्च द्रव्याद्युत्कृष्टं सति लाभे एक एव संघाटको गृह्णाति । अन्यथा तु सर्वेऽपि गुरुयोग्यं गृह्णति । एवं च सर्वैः संघाटकैर्जातु गुरोराग्मनश्च पर्याप्त्या ग्रहणेऽधिकतया भवेदशनादिना परिष्ठापने । तथा ग्लानस्य कृते नियमेन योग्यं ग्राह्यम् । नवरं तत्कृते प्रार्थितमपि तद् ग्राह्यम् । तत्र यत् प्रार्थितं तच्चेदधिकं तदा परिष्ठापनार्हम् । अप्रार्थितं तु शेषं यतिभिर्भोक्तव्यम्, तथा दुर्लभद्रव्ये च घृतादिके भुक्ते शेषं परिष्ठापनार्हं स्यात् । तथा परिमितमेव दास्यामि लास्यामीति चिंतयतोर्गृहिव्रतिनोः सहसैव

पात्रे भृते परिष्ठापनार्हं भवेत् । एवमेतैराचार्यादिभिर्निमित्तभूतैर्जातु शुद्धाहारेऽप्यधिके गृहीतेऽजाता पारिष्ठापनिका संभवति । एवमेभिः कारणैः शुद्धाहारोऽप्यधिकतया लोके पुंजत्रयं कृत्वा परिष्ठापनीयः । एवं जाताजातपारिष्ठापनिकाकृते निर्गतस्य जातु संज्ञा भवेदथवाऽऽहारे कृतेऽप्यनीहारः स्यादिति तद्विधिः प्रागुक्त एव ज्ञेयः। उक्तशेषश्च कथ्यते तथाहि—अतीवसंज्ञया बाधितश्चेत् प्रथमं स्थंडिले गंतुं न शक्नोति यतिस्तदा द्वितीयेऽप्यऽनापातसंलोकस्थंडिले गच्छेत् । तदशक्तौ तृतीये आपातासंलोके । तदशक्तौ तुर्ये आपातसंलोकेऽपि । तदशक्तौ ग्रामद्वारे । तदशक्तौ रथ्यायाम् । तदशक्तौ गृहपंक्तेरग्रतस्तदशक्तावग्रद्वारे तथाप्यशक्तावुपाश्रय एवं मात्रके तथाप्यशक्तावतिपीडायां मंडलीपार्श्वेऽपि कुर्यादुत्सर्गविधिम् । अत्र कथा अपुत्रे भिषग्वरे परासुतां प्राप्तेऽधीतवैद्यकां तत्तनयां नृपो भणति ' अधीतं त्वया किंचिद् वैद्यक ? 'मिति पृष्टे सा प्राह ' अधीत '-मिति । एवं च तस्या वदंत्या अकस्माद् वातप्रवृत्तिरभूत्तदा चापरवैद्यैर्हास्ये कृते सा तेषां राज्ञश्च कथयामास राजस्त्रीणि शल्यान्यस्मिन् देहे प्रतिष्ठितानि वातमूत्रोच्चारलक्षणानि । तानि च वेगप्राप्तानि नैव धारयेत् । एतच्च तैः सर्वैरपि मानितम् । अयमेवार्थः समर्थितः श्रीमदोघनिर्युक्तिगाथाहि जदि पढमं न तरेज्जा, तो बितियं तस्स असईए तइअं । तस्स असई चउत्थे, गामे दारे अ रत्थाए ॥ १ ॥ साही पुरोहडे वा, उवस्सए मत्तगम्मि वा णिसिरे । अच्चुक्कडम्मि वेगे, मंडलिपासम्मि वोसिरइ ॥ २॥ राया विज्जम्मि मए, विज्जसुयं भणइ किं च ते अहीयं। अहियंति वायकम्मे, विज्जे हसणा य परिकहणा ॥ ३ ॥ तिण्णि सल्ला महाराय, अस्सिं देहे पइट्ठिया। वायमुत्तपुरीसाणं, पत्तवेगं न धारए ॥ ४॥ एवं यथा जाताऽजाता च परिष्ठापनिकाऽऽहारविषया प्रोक्ता । तथा वस्त्रपात्रविषयाऽपि वाच्या । एकेंद्रियनो-

एकेंद्रियपरिष्ठापनविधिस्तु श्रीमदावश्यकनिर्युक्तेरवसेयः, बहुविस्तरत्वाच्च नात्र प्रतन्यते। तत्रैकेंद्रियाः पृथिव्यादयो नोएकेंद्रियास्त्रसादयः। स्थंडिले उच्चारादि व्युत्सृजति यतिस्तत्र प्रतिलेखनाप्रमार्जने कर्तव्ये। अत्र चतुर्भंगी प्रतिलेखयति दृष्ट्वा प्रमार्जयति च रजोहरणादिना तदा स्थावरास्त्रसाश्च रक्षिता' १। प्रतिलेखयति न तु प्रमार्जयति तथा स्थावरा रक्षिता न तु त्रसाः २। न प्रतिलेखयति किंतु प्रमार्जयति तदा त्रसा रक्षिता न तु स्थावराः ३'। उभयमपि न विधत्ते तदा द्वयेऽपि न रक्षिता. ४। एवं डगलकग्रहणेऽपि चतुर्भंगी वाच्या। अत्र च पारिष्ठापनिकासमितौ सुव्रताचार्यक्षुल्लनिदर्शनम्। स हि सन्ध्यासमये मुनिभिरुक्तो 'भो.! क्षुल्ल! स्थंडिलानि प्रतिलेखय' इति तदा च स प्रतिवक्ति 'किं करभ उपविश्य स्थितोऽस्ति, यत् प्रतिदिनं स्थंडिलशोधनं विधीयते?' अथ च स यामिनीसमये कायिकीपरिष्ठापनकृते समुत्थितो देवतया दीर्घग्रीवरूपं विधाय भापितः। तदा च गुरुभिरुक्तो 'भोः! शिष्य! अप्रतिलेखिते स्थंडिले नोच्चारप्रश्रवणादिव्युत्सर्गो विधीयते, यतोऽप्रतिलेखिते स्थंडिले यः कायिक्यादिपरिष्ठापनं न करोति तस्य मुनिचंद्रस्येव देवता सान्निध्यं विदधाति' इति गुरुभिरुक्ते स प्रश्नयामास 'भगवन्! कोऽसौ मुनिचंद्रः? किं च तस्य देवतया साहाय्यं कृतं?'मिति तेन पृष्टे गुरुरूचे 'अस्मिन्नेव गच्छे पुरा मुनिचंद्रनामा मुनिरभूदप्रमत्तो यतिक्रियायाम्। तस्य चान्यदा साधुसमुचितक्रियाव्यग्रस्य विस्मृतिमगमत् स्थंडिलनिरीक्षणम्। अथ च निशि स कायिकया बाधितोऽपि स्थंडिलाशोधनाच्चा न चकार। तदा च देवतया बाढं त तत्पीडितं विज्ञायोद्द्योतः कृतः। कृते च तस्मिन् स तां स्थंडिले परिष्ठापयामास। परिष्ठापितायां च तस्यां पुनरन्धकारे जाते तमुद्द्योतं देवताविहितं विज्ञाय पश्चात्तापपुरस्सरं तमपराधमालोच्य सम्यक् चरिताराधनं निर्माय निखिलकर्मनिर्मूलन

पूर्वमपुनर्भवं गतः ।' एवं श्रीगुरूक्तं दृष्टांतमाकर्ण्य क्षुल्लोऽपि पारिष्ठापनिकासमितावुद्युक्तः समभूत् । यथाऽनेन क्षुल्लेन प्रथमं पंचमसमितौ प्रमादः कृतस्तथाऽन्यैर्न विधेयः । यथा च पश्चादनेन पंचमसमितिः सम्यगाराधिता तथान्यैरपि मुनिपुंगवैः सा सम्यगाराधनीया । इत्युक्तं किंचित् पारिष्ठापनिकासमितिस्वरूपम् । तदुक्तौ च प्रपंचिताः किंचित् पंचसमितयः ॥ ५ ॥

अथ गुप्तित्रितयस्वरूपं किंचिदुच्यते । तथाहि चेतोवचनतनुगुप्तिलक्षणास्तिस्रो गुप्तयो भवंति तत्र सत्या१ऽसत्या २ सत्यामृषा३ऽसत्यामृषा ४ भेदेन चतुर्द्धा मनोगुप्तिः । तत्र जीवं जीवमित्यादि चिंतयतः सत्यमनोयोगस्तद्विषया गुप्तिरपि सत्या । अजीवं जीवमित्यादि चिंतयतस्त्वसत्यमनोयोगस्तद्विषया गुप्तिरप्यसत्या । एवं सत्यामृषाऽसत्यामृषे अपि मनोगुप्ती सत्यामृषाऽसत्यामृषामनोयोगविषये विज्ञेये । सत्यासत्यादिस्वरूपं तु प्राक् प्रतिपादितम् । अयं च चतुर्विधोऽपि मनोयोगो मनोद्रव्यविषयः । तच्च मनोद्रव्यं संरंभसमारंभारंभेषु प्रवर्त्तमानं निवर्त्तयति मनोगुप्तिविधानाम् । तत्र संरंभः संकल्पः । स च तथाहं ध्यास्यामि यथाऽसौ मरिष्यतीत्येवं रूपः । समारंभस्तु परपीडोच्चाटनादिकदुर्ध्यानम् । आरंभस्तु परप्राणापहारकारकमशुभध्यानम् । एतेषु त्रिष्वपि न प्रवर्त्तनीयं सर्वथैव निजं मनः । यतोऽकुशलमनसो निरोधः कुशलमनसश्चोदीरणं तथैकत्वं मनोगुप्तिरुच्यते । यदुक्तं श्रीपुष्पमालायां अकुसलमणो निरोहो, कुशलस्स उईरणं तहेगत्तं । इअ निविअमणपसरा, मणगुत्तिं बिंति महरिसिणो ॥ १ ॥ यतो गुप्तित्रितयेऽपि मनोगुप्तिरेव दुष्करा । उक्तं च अक्खाण रसणा ॥ १ ॥ तथा अवि जलही वि निरुंभइ, पवणो वि खलिज्जए उवाएण । मन्ने न निम्मिओ च्चि अ, कोवि उवाओ मणनिरोहे ॥ १ ॥ चिंतइ अचिंतणिज्जं, वच्चइ दूरं वि लंघइ गुरुं पि । गुरुआण वि जेण

मणो, भसइ दुरायारमहिलव्व ॥ २ ॥ मुक्तिश्च मनःशुद्धिं विना नैव जातु भवेत् । यदुक्तं श्रीयोगशास्त्रे चतुर्थप्रकाशे, 'मनः क्षपाचरो भ्राम्यन्नपशङ्कं निरङ्कुशः । प्रपातयति संसारा-वर्तगर्ते जगत्त्रयम् ॥ ३५ ॥ तप्यमानो-स्तपो मुक्तौ, गन्तुकामान् शरीरिणः । वात्येव तरलं चेतः, क्षिपत्यन्यत्र कुत्रचित् ॥ ३६ ॥ अनिरुद्धमनस्कः सन्, योगश्रद्धां दधाति यः । पद्भ्यां जिगमिषुर्ग्रामं, स पङ्गुरिव हस्यते ॥ ३७ ॥ मनोरोधे निरुध्यन्ते, कर्माण्यपि समन्ततः ॥ अनिरुद्धमनस्कस्य, प्रसरन्ति हितान्यपि ॥ ३८ ॥ मनःकपिरयं विश्व-परिभ्रमण लम्पटः । नियन्त्रणीयो यत्नेन, मुक्तिमिच्छुभिरात्मनः ॥ ३९ ॥ दीपिका खल्वनिर्वाणा, निर्वाणपथदर्शिनी । एकैव मनसः शुद्धिः, समानीता मनीषिभिः ॥ ४० ॥ सत्यां हि मनसः शुद्धौ, सन्त्यसन्तोऽपि यद्गुणाः । सन्तोऽप्यसत्यां नो सन्ति, सैव कार्या बुधैस्ततः ॥ ४१ ॥ मनःशुद्धिमबिभ्राणा, ये तपस्यन्ति मुक्तये । त्यक्त्वा नावं भुजाभ्यां ते, तितीर्षन्ति महार्णवम् ॥ ४२ ॥ तपस्विनो मनःशुद्धि-विना भूतस्य सर्वथा । ध्यानं खलु मुधा चक्षु-र्विकलस्येव दर्पणः ॥ ४३ ॥ तदवश्यं मनःशुद्धिः, कर्तव्या शुद्धिमिच्छता । तपः-श्रुतयमप्रायैः, किमन्यैः कायदण्डनैः ? ॥ ४४ ॥' इत्यादिर्भावनाभिरविश्रान्तमित्यादिश्लोकांतोऽधिकारो वाच्यः ।, तथाऽत्र भवभावना कथान्विता वाच्या । तस्माद्धर्मशुक्लध्यान विधानसावधानेन मुनिप्रधानेनार्त्तरौद्रध्यानविषये प्रवर्त्तमानं मनः सर्वथैव निवारणीयं यत आर्त्तध्यानं तिर्यग्गतिनिदानं रौद्रध्यानं तु निरयगतिहेतुः । उक्तं च अट्टेण य तिरिअगई, रुद्दज्झाणेण गम्मए नरए । अस्यां च मनोगुप्तौ विपर्ययेऽविपर्यये च कौंकणश्रमणो निदर्शनम् । तथाहि कौंकणग्राम्यो

कोऽपि वणिग्नरः समभूत्। स च प्रतिवर्षं कृषिकर्म निर्माय पांथान् भोजयन् जनपदनाम्नैव विश्रुतः समभूत् कौंकण इति। स चान्यदा यत्यंतिके समाकर्ण्य धर्मं कुटुंबमोहं विहाय वार्द्धके व्रतं जग्राह कर्मदाहहेतवे। अन्येद्युः प्रावृट्समये स कायिकीं व्युत्सृज्येर्यापथिकाप्रतिक्रमणसमये तस्थौ तनूत्सर्गेण। अथ च प्रभूतसमयातिक्रमे तेन तनूत्सर्गे पारिते गुरुभिरुक्तं 'भो यते! त्वया किं ध्यातमियंतं समयम्?' तेनोक्तं 'कृपा ध्याता' गुरुभिरुक्तं 'कथं?' स प्राह 'यदा वयमवसाम सदने, तदा ग्रीष्मात्यये सर्वत्र क्षेत्रे द्रुमानुन्मूल्य दवानलं प्रज्वालयामो लताश्च मञ्जयामस्ततश्च वारिदे वर्षति धान्यवापं कुर्मस्तदनु प्रभूतानि धान्यानि निष्पद्यंते स्म। सांप्रतं च मयि श्रामण्यं प्रतिपन्ने मत्पुत्राः कृषिकर्मण्यप्रवीणा निश्चिततयोपविश्य स्थिता भविष्यंति। तेऽपि चेदेवं विदधति तदा वरम्। अन्यथा ते वराकाः क्षुत्क्षामत्कुक्षयो मरिष्यंतीत्येवं मया जीवदया ध्याता' इति तेनोक्ते श्रीगुरुः प्राह 'भद्र! त्वयैवं दुश्चिंतितम्। यतो जंतुजातसंहारं विना नैवं भवेत् कृषिकर्म। तस्मादेतद्दुश्चिंतितविषये मिथ्या मे दुःकृतं दीयताम्' इति गुरुभिरुदीरिते श्रीगुरुसमक्षं तद्दुरितनिदानं निर्माय तत्-कर्मशुद्धये स पुनस्तस्थौ कायोत्सर्गे। तत्र च स्थितः स तद्दुश्चिंतितनिंदनपरः क्षपकश्रेणिं समारूढः केवलावबोधमवाप। यथा चानेन महात्मना प्रथमं मनो न निरुद्धं तथाऽन्यैर्न विधेयम्। यथा वाऽनेन पश्चात्तन्निरोधः कृतस्तथाऽपरैरप्यनगारैः कार्यः। इति निगदितं किंचिन्मनोगुप्तिस्वरूपम् ॥ ६ ॥

अथ वाग्गुप्तिस्वरूपं किंचिदुच्यते। तथाहि—सत्याऽसत्यादिभेदैश्चतुर्द्धा वचनगुप्तिस्तत्र सत्यवचनविषया सत्यावचनगुप्तिरऽसत्यवादविषयाऽसत्या सत्यामृषावाग्विषया सत्यामृषाऽसत्यामृषावाग्विषयाऽसत्यामृषा। इयं च चतूरूपाऽपि

वाग्गुप्तिर्वचनविषया । तच्च वचनं सरम्भसमारम्भारम्भेषु न प्रवर्त्तनीयमनणीयःपुण्यार्थिना । तत्र सरम्भः परप्राणव्यपरोपण-क्षमक्षुद्रविद्यामन्त्रादिपरावर्त्तनासंकल्पसूचको ध्वनिरेव संकल्पशब्दवाच्यः सन् समारम्भस्तु परपरितापकरमन्त्रादिपरावर्त्तनम् । आरम्भस्तु परप्राणप्रयाणकारिमन्त्रादिजपनम् । 'एतेषु त्रिष्वपि निजवचो नैव प्रवर्त्तितव्यं यतिपुंगवेन । यतोऽकुशलवचन निरोध' कुशलवचसस्तूदीरणमेकत्वं च वचनगुप्तिरुच्यते। यदुक्तं अकुसलवयणनिरोहो, कुसलस्स उईरणं तहेगत्तं ।। इअ निविअवयपसरा, वयगुत्तिं विंति महरिसिणो ॥ १ ॥ किं चाऽसंवृतात्मनां वाग्गुप्तिर्दुष्करा यदुक्तं दम्मति तुरगा वि हु, कुसलेहिं गया वि संजमिज्जंति । वयघाधि संजमिउं, निउणाण वि दुक्करं मन्ने ॥ १ ॥ इयं वचनगुप्तिं 'सूत्रार्थकोविदैः कैश्चिदेव सम्यक् समाराध्यते गुणदत्तयतिवत् । तत्कथा चेयं–श्रीपुरनगरे धनदेवनामा इभ्यः समभूत् । तस्य धनवती दयिता तयोस्तनूजन्मा गुणदत्तनामा । स च गुरुसमीपे धर्मं समाकर्ण्य प्रव्रज्यां जग्राह बद्धाग्रहः कर्मनिर्मथने । स च विधिवद् गुरुसविधेऽधीतसूत्रार्थो गीतार्थः सन् सांसारिकनर्गवदापनीयः श्रीगुर्वादेशं समादाय श्रीपुरं प्रति प्रस्थित एककः । स च तत्र गच्छन्नन्तरा परमोपिभिर्धृत्वा समानीतः पल्लीपतिसमीपे । अथ च कियत्समयातिक्रमे पल्लीशं प्रति प्रोवाच वाचयमः ' अकिंचनोऽहं केन हेतुना भवद्भिरत्र स्थापितः, चेन्मम सिचयैः किंचिद् युष्माकं प्रयोजनं तदा तान्यपि समादाय मोचनीयोऽहं यतोऽरण्येऽस्माकं प्रासुकाहारस्य प्राप्तिर्न स्यात् । आहारं विना च तनुः कथं धर्त्तुं शक्यते ' इति यतिनोदिते पल्लीपतिः प्राह ' न भवता भवद्वस्त्रैर्वा किंचिदस्माकं प्रयोजनम् । परमनेन वर्त्मना जन्य-यात्रा समेष्यति, तल्लुटनकृतेऽस्माभिर्मार्गो विद्धोऽस्ति यदि च त्वां मुञ्चामस्तदैतदस्मच्चिन्तितं न स्यात् यतोऽध्वान बद्ध

वचन-गुप्तिः ।

मुनिः प्राह ' तर्हि हे पल्लीश ! मां मुंच यतोऽयमस्माकमाचारः शुभाऽशु-
विज्ञाय साऽन्यमार्गेण याति ' इति पल्लीपतिनोक्ते मुनिः प्राह ' तर्हि हे पल्लीश ! मां मुंच यतोऽयमस्माकमाचारः शुभाऽशु- वचोऽस्तीत्युदीर्य स पल्लीशेन मुक्तो
भावार्त्ता न विधीयते । किंतु पृच्छत्यपि जनैर्मौनमेव क्रियते ' इति यतिनोक्तेऽत्रार्थे तन वचोऽस्तीत्युदीर्य स पल्लीशेन मुक्तो
जगाम श्रीपुरनगरे । तत्र च गतः स स्वजनैर्वंदित्वा भणितः यत् प्रस्तावेभूय समायाताः तेनाऽस्माभिः सममेव समेतव्यं
युष्मल्लघुबांधवजन्ययात्रायां युष्माभिः । एवं तैरतीव निर्बंधे कृते तैः सममेव स चचाल तेनैवाऽध्वनेन, एवं च स
सार्थो व्रजन् यावच्चौरस्थानमागतः ताव ' द्धंत हंत गृह्णीत गृह्णीते 'ति जल्पंतस्ते तस्करा दधाविरे तल्लुंटनाय । एवं दिशो-
दिशं नश्यत्सु जनेषु :लुंटाकेषु च लुंटत्सु स मुनिर्निराशंकः क्षितिनिहितपात्रक एकांते तस्थौ तनूत्सर्गेण । अथ च स
मुनिस्तेन पल्लीशेन वनं भ्रमता निरीक्षितः, निरीक्ष्य च भक्त्या पुनः पुनस्तं नमस्कृत्य स पल्लीपतिः स्वसेवकानाकारया-
मास, आकार्य च कथितवान् सोऽयं सत्यवादी महामुनिः । तेऽपि च तं सम्यगुपलक्ष्य भक्त्यतिशयात् पुनः पुनः प्रणेमुः ।
अथ च मुनिमाता तान् मिलितान् वीक्ष्य चित्ते चिंतयामास नूनममीभिः संभूय मुनिः कदर्थ्यमानोऽस्ति तदहं गत्वा
निवारयाम्येतान् मुनिखेदनतत्परान् । इति निश्चित्य सुतमोहमोहिता सा यावत्तत्रागता तावत्तान् मुनिवंदनस्तवनपरायणा-
न्निरीक्ष्य सा साधिक्षेपमेवमुक्तवती ' किं भो ! भवतां भनदाचारनिरुद्धमेतन्मुनिनंदनस्तवनादिकम् ' इति तयोक्ते
परिमोषिपतिः प्रोक्तवान् ' जननि ! किमिति त्वं ब्रूपे ? यत एतद्वरिवस्यानमस्यादिभिरस्माकमाजन्मसमर्जितं दुरितं दूरतो
याति । यतो महात्मनां सेवा सर्वदुष्कृतांतकारिणी । महात्मा त्वयमेव यत एतस्मिन् सत्यं सप्रत्ययं दृश्यते । ' एवं तं
पल्लीपतिं यतिस्तुतिपरं निरीक्ष्य साऽवोचत् ' कथं युष्माभिरेतस्मिन् सत्यवादित्वमवगतम् ? ' इति तयोक्ते स प्रोक्तवान्

'ह्यस्तने दिने वचः समादाय मोचनात्' इति तेनोक्ते सा प्रोक्तवती 'यद्यनेन यूय ज्ञात्वाऽपि न कथितास्तदर्पयेनां शस्त्रीं यद्दारयामि स्वीयकुक्षिं यत्राय पापात्मा तस्थौ। यतोऽनेन जानताऽपि निजकुटुम्बमीदृग्विधे सकटे पातित तर्हि किमस्य सत्योक्त्या मौनेन वा ?' इत्यादिवादिनीं खेदपरा तां निरीक्ष्य तस्करपतिः प्रोक्तवान् 'मातः किमय तव तनयः ?' इति तेनोक्ते मुनिमाताऽवदत् 'अय मम ज्येष्ठस्तनूजन्मा। यः परिणयनार्थं गच्छन्नस्ति स कनिष्ठः' इति तया निगदिते पल्लीनाथ कथितवान् 'चेदेव तर्हि वनितासु त्वमेव धन्या यत्कुक्षौ मूर्तिमान् सत्यधर्म इवाय तनयः समवततार। तदनेन कुल पवित्रीकृतम्। अनेन च मेदिनी श्रपिवती। अतोऽय देवानामपि पर्युपासनीय। अन्यच्च चेदत्रभवती भवती पतेरेतस्य जननी तर्हि ममापि जनन्येवे'त्याद्युदित्वा स तत्पदोरनमत्। नत्वा च यद् येन लुटितमभूत् तत्सर्वमपि पश्चादर्पयामास। अर्पयित्वा च प्रोक्तवान् 'यदत्र युष्माभि सर्वदा निर्भयैर्गन्तव्यमागतव्य च।' अस्मिंश्च समये स मुनिः कायोत्सर्गं पारयामास। पारयित्वा च तेषा सर्वेषां पुरतः सुकृतमार्गं प्ररूपयामास। त च निशम्य तैर्यथायोग स आदृतः, ते च मुनिस्वजना निष्प्रत्यूह पाणिग्रहणमह निर्माय जग्मुर्यथागतम्। मुनिरपि च श्रीगुरुसमीपे गत्वा सम्यक्चारित्रमाराधयामास। यथा चाऽनेन गुणदत्तेन महात्मना तादृग्विधप्रस्तावेऽपि वचनगुप्तिर्न खण्डिता तथाऽन्यैरपि न खण्डनीया। इत्युक्त किंचिद् वचनगुप्तिस्वरूपम् ॥ ७ ॥

अथ कायगुप्तिस्वरूप किंचिदुच्यते। तथाहि ऊर्ध्वस्थाननिषीदनशयन तथाविधप्रयोजनगर्ताद्युल्लङ्घनगमनेन्द्रियव्यापारादिके काययोगे प्रवर्तमाने सरभसमारभारभत्रिक वर्जनीयम् तत्र सरभोऽभिघाताय मुष्ट्याद्युत्पादनमेत्राभिघातसकल्पसूचक-

संरंभः परपरितापकरमुच्याद्यभिघातः। आरंभस्तु मुष्ट्यादिना वाऽस्त्रेण वा पर-
मुपचारात् संकल्पशब्दवाच्यम्। सन् समारंभस्तु 'परपरितापकरमुष्ट्याद्यभिघातः। आरंभस्तु मुष्ट्यादिना वाऽस्त्रेण वा पर-
प्राणव्यपरोपणम्। एतेषु त्रिष्वपि तनुयोगं न प्रवर्त्तयेद् यतिः कायगुप्तः। यतोऽयं कायो मत्तमतंगज इवाऽनुचितकर्मणि
प्रवर्त्तते, तं च यः सम्यग्ज्ञानांकुशेन तत्र प्रवर्त्तमानं निवारयति स तनुगुप्तिमानुच्यते। यदुक्तं जो दुट्ठगइंदो इव, देहो
असमंजसेसु वट्टंतो। नाणंकुसेण रुंभइ, भन्नइ स कायगुत्तोत्ति ॥ १ ॥ अत एव साधवो निष्प्रयोजनं
हस्तपादाद्यपि न चालयंति। यदापि प्रयोजने समुत्पन्ने चालयंति तदापि प्रत्युपेक्षणप्रमार्जनपूर्वमेव। तथा कूर्मवत् सर्वदा
साधवो गुप्तेंद्रिया एव तिष्ठंति। यदुक्तं हत्थे पाए न खिवे, कायं चालिज्जंतंपि कज्जेणं। कुम्मुव्व सए अंगे, अंगो-
वंगाणि गोविज्जा ॥ १ ॥ गुप्तेंद्रियत्वं च श्रोत्रादिकरणानां शब्दादिस्वस्वविषयेभ्यो व्यावृत्त्या प्राप्तेष्वपि तेषु शुभेतरेषु
रागद्वेषयोरकरणतो वा विज्ञेयम्। एतस्यां च कायगुप्तौ विपर्ययेऽविपर्यये चारिहन्नकमुनिनिदर्शनं तथाहि, कस्यचिदा-
चार्यस्यारिहन्नकनामा विनेयः समभूत्। स चान्यदा स्वगुरुणा समं मार्गे गच्छन् पश्चात् पतितः। अस्मिन् समये नाति-
वितते वाहकः समाययौ। तं चैकं चरणं वारिणि विधाय गीतार्था अलंघयन्। अरिहन्तकस्तु वारिविराधना भविष्यतीति
धिया वेगेनोत्फल्य तं लंघयितुमुपचक्रमे। अस्मिन्नवसरे च काचित् मिथ्यादृग् देवता तच्चरणमछिन्नत्तदैव चाऽपरा काचित्
सम्यग्दृष्टिसुरी समीपस्था तं संदधौ। प्रादुर्भूय च प्रोक्तवती सा शासनसुरी 'हे! साधो! इत्थं नोत्प्लुत्य गम्यते।
यतश्छलयंति छलप्रेक्षिणो मिथ्यादृष्टिदेवताः। तव पादो मिथ्यादृग्देवतया छिन्नोऽभून्मया च संरोहितस्तेन पुनरेवं
माकार्षी 'रित्युक्त्वा सा तिरोबभूव। तदनु तनुगुप्तावुद्युक्तः स समभूत् श्रीगुरुसमीपे तत्प्रमादपदालोचनपुरस्सरम्।

यथाऽनेन साधुना प्रथमं तनुगुप्तिः खण्डिता तथाऽन्यैर्न खण्डनीया । यथा चाऽनेन सा पश्चात् सम्यगाराधिता तथाऽपरैरप्याराधनीया । इत्युक्तं किंचित् कायगुप्तिस्वरूपम् ॥ ८ ॥

एतास्वष्टप्रवचनजननीषु पञ्चसमितयश्चरितक्रियायाः प्रवर्त्तने विज्ञेयाः । गुप्तयस्तु सर्वेभ्योऽप्यशुभमनोयोगादिभ्यो निवर्त्तने शुभयोगानां च प्रवर्त्तने शैलेश्यवस्थायां तु तेभ्योऽपि निवर्त्तनेऽवसेयाः । अयमेव च भेदः समितीनां गुप्तीनां च । यत् समितयः प्रवीचारात्मिका गुप्तयस्तु प्रवीचाराऽप्रवीचारात्मिकाः ॥ उक्तं च समिओ निअमा गुत्तो, गुत्तो समिअत्तणम्मि भइअव्वो । कुसलवयमुदीरंतो, जं य गुत्तो वि समिओ वि ॥ १ ॥ एता अष्टावपि प्रवचनजनन्यः साधुना श्रामण्यप्रतिपत्तिसमनन्तरं चरमसमयं यावदखण्डिततया पालनीयाः । श्राद्धेनापि श्राद्धधर्मप्रतिपत्त्यनन्तरमहर्निशं यथाशक्ति तत्पालने प्रयत्नो विधेयः । यतो यान्येव प्राणातिपातविरमणादीनि यतीनां महाव्रतानि तान्येव श्रमणोपासकानामणुव्रतानि देशतः प्राणातिपातविरमणादिरूपाणि । ततः श्राद्धानामपि सर्वशक्त्या देशतो वसु(८)मितप्रवचनजनन्याराधने यत्नः कृतो विलोकयत एव । कृतसामायिकपौषधव्रतेन तु श्राद्धेन मुनिवदेता अष्टावपि प्रवचनमातरः सम्यगाराधनीयाः । यतः सामायिके कृते श्रमणोपासकोऽपि श्रमणप्रतिम एव प्रोच्यते । यदुक्तं सामाइअम्मि उ कए, समणो इव सावओ हवइ जम्हा । एएण कारणेणं, बहुसो सामाइअं कुज्जा ॥ १ ॥ येन च श्रमणेन श्रमणोपासकेन वा एता अष्टप्रवचनमातरः सम्यगाराधितास्तेन सर्वमपि समाराधितं श्रीमदर्हद्भाषितम् । यत एतासु मातः समस्तमपि प्रवचनम् । तथाहि ईर्यायां प्रथमव्रतं समवतरति, तद्वृत्तिरूपाणि च शेषव्रतानि तत्रैवान्तर्भवन्ति । तेषु च यन्नास्ति वस्तु

दोसो रागदोसाणं ॥ १२४ ॥ तस्मादेतद्वशंवदैर्न भवितव्यं यदुक्तं तो बहु गुणनासाणं, सम्मत्तचरित्तगुण-विणासाणं । न हु वसमागंतव्वं, रागदोसाण पावाणं ॥ १२५ ॥ तथा तदमित्रमपि न विधत्ते यद् रागद्वेषाभ्यां विधीयते । यदुक्तं न वि तं कुणइ अमित्तो, सट्ठुवि वसुविराहिओ समत्थो वि । जं दोऽवि अणिग्गहिया, करंति रागो अ दोसो अ ॥ १२६ ॥ तथा इह लोए आयासं, अजसं च करेंति गुणविणासं च । पसवंति अ परलोए, सारीरमणोगए दुक्खे ॥ १२७ ॥ धिद्धी अहो अकज्जं, जं जाणंतोऽवि रागदोसेहिं । फलमउलं कडु-अरसं, तं चेव निसेवए जीवो ॥ १२८ ॥ को दुक्खं पाविज्जा, कस्स व सुक्खेहिं विम्हओ हुज्जा । को व न लगिज्ज मुक्खं, रागदोसा जइ न हुज्जा ॥ १२९ ॥ तथा श्रामण्यस्य सारं समतैव, यदुक्तं न वि मुंडिएण समणो, न ओंकारेण बंभणो । न मुणी रण्णवासेणं, कुसचीरेण न तावसो ॥ १ ॥ समयाए समणो होइ, बंभचेरेण बंभणो । नाणेण अ मुणी होइ, तवेणं होई तावसो ॥ २ ॥ तथा चारित्रं च सामायिकरूपं तच्च समतयैव भवेत् यदुक्तं जो समो सव्वभूएसु, तसेसु थावरेसु अ । तस्स सामाइअं होइ, एअं केवलिभासिअं ॥ १ ॥ समता च रागद्वेषपरिहारेणैव, तस्मात्तौ निराकरणीयौ । तथा रागद्वेषाकुलितचेतोवृत्तेर्ज्ञानमपि न प्रधानम् । उक्तं च तज्ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगणः । तमसः कुतोऽवकाशो, दिनकरकिरणाग्रतः स्थातुम् ? ॥ १ ॥ ज्ञानदर्शनयोश्च साहचर्याज्ज्ञानस्य विनाशे दर्शनस्यापि विनाशः । तथा रागद्वेषपराभूतस्वांतवृत्तेस्तपोऽपि न सार्थकम् । यदुक्तं रागद्वेषौ यदि स्यातां, तपसा किं प्रयोजनम् ? । तावेव यदि न स्यातां, तपसा किं प्रयोजनम् ? ॥ १ ॥

तृतीय-
लहर्यां
चतुर्थ-
स्तरङ्गः ।

असंयमः,
रागद्वेषौ ।

एव ज्ञानदर्शनचारित्रतपांसि रागद्वेषद्विपदभिभूतस्य न सार्थकानि भवेयुः। तस्मात्' ज्ञानदर्शनचारित्रतपसां कैवल्यलक्षण फलमभिलषता सर्वथा रागद्वेषौ वर्जनीयावेव ॥ २ ॥

तथा दण्ड्यते जतुरेभिः चारित्रैश्वर्यापहारत इति दण्डास्ते च दुष्प्रयुक्तचेतोवचनतनुलक्षणास्ते च नियन्त्रणीया अनणीयः-शमार्थिना। यतस्तद् वैरिणापि कण्ठच्छेदिना कर्तुं न शक्यते यदेभिस्त्रिभिर्दुष्प्रयुक्तैरात्मन एवात्मा विधत्ते। यदुक्त श्रीउत्तराध्ययनेन, न अरि क न छित्ता करेइ, ज से करे अप्पणिआ दुरप्पया। से नाहिई मच्चुमुहं तु पत्ते, पच्छाणुतावेण दयाविहुणा ॥ १ ॥ तस्मादात्महितमिच्छता यतिपुगवेन दण्डत्रयमिद निराकरणीयम्।

तथा गुप्तित्रय सम्यक् पालनीयम्। यतो मनोगुप्त्या शुक्लैकतानचित्तता भवेत्तया च सम्यक्सयमाराधना। वचनगुप्त-तया च विकथाद्यात्मकवाग्विकाराऽभाव जनयति सर्वथानिरुद्धवाक्प्रसरश्च चित्तैकाग्र्य भजते। नहि विशिष्टवाग्गुप्तिरहितस्य चित्तैकाग्र्य स्यादिति। कायगुप्त्या च सवर जनयत्यशुभकाययोगनिरोधरूपम्। सवरेण चाभ्यस्यमानेन सर्वथा निरुद्धतनु व्यापार' सन् पापाश्रवनिरोध करोति। एतदर्थसवादक च श्रीसम्यक्त्वपराक्रमाध्ययनालापकत्रय तथाहि मणगुत्तयाए ण भते जीवे किं जणयइ? मणगुत्तयाए ण एगग्ग जणयइ एगग्गचित्तेण जीवे मणगुत्ते सजमाराहए भवइ। वयगुत्तयाए ण भते जीवे किं जणयइ? वयगुत्तयाए ण निव्विकार जणयइ निव्विकारेण जीवे वयगुत्ते अज्झप्पजोगसाहणजुत्ते आवि भवइ (अज्झप्पेत्यादि पद्-व्याख्या-अध्यात्म मनस्तस्य योगा व्यापारा धर्मध्याना दयस्तेषां साधनान्येकाग्रतादीनि तैर्युक्तो भवति) कायगुत्तयाए ण भते! जीवे किं जणयइ? कायगुत्तयाए ण

संवरं जणयइ संवरेणं कायगुत्ते पुणो पावासवा निरोहं करेइ । तस्माद् गुप्तित्रितयं निरतिचारतया पालनीयम् ।

तथा शल्यत्रयं दूरान्निराकरणीयम् । तत्र प्रथमं मायाशल्यं यद्-गुरोः पुरतः सम्यगतिचारानालोचनम् । एतच्च परिहार्यमेव यतो लज्जागारवबहुश्रुतताभिमानादिभिः सम्यग् ये नालोचयंति निजदुश्चरितं श्रीगुरोः पुरतस्ते नैवाराधका भवन्ति । यदुक्तं लज्जाइ गारवेण य, बहुस्सुअमएण वावि दुच्चरिअं । जे न कहंति गुरूणं, न हु ते आराहगा हुंति ॥ १ ॥ तथा अप्पं पि भावसल्लं, अणुद्धरिअं रायवणिअतणएहिं । जायं कडुअविवागं, किं पुण बहुआइं पावाइं ? ॥ २ ॥ विषमपदव्याख्या, अल्पमपि-पूर्वभवप्रव्रज्यानंतरं स्वजायासाध्वीसानुरागावलोकनमात्रत्वेन- स्तोकमपि, राजवणिक्तनयाभ्यां यथाक्रममार्द्रकुमारेणेलापुत्रेण च, जातं कटुकविपाकं दारुणायतिफलं तयोरेव सख्यक्संयमासन्नीकृतमोक्षयोरपि धर्मविच्युतिनीचकुलागमनादिना । एवं सति यद् विधेयं तद् गाथाद्वयेनोच्यते, तथाहि ता सहसत्ताणेण व, भिएण व पिल्लिएण च । परेणं वसणेण पमाएण व, मूढेण व रागदोसेणं ॥ १ ॥ जं किंचि कज्जं न हु तं, लज्जा पुणो समायरिओ । तं तहपडिक्कमिअव्वं, न हु तं हिअएण वोढव्वं ॥ २ ॥ न हु नैव तदकृत्यं लज्जाभयादिभिर्हृदयेन वोढव्यं किं तु तत्कालमेवालोचनीयमिति । एवं च को गुणः ? इत्युच्यते-कयपावो वि मणुस्सो, आलोइअनिंदिओ गुरुसमासे । होइ अइरेगलहुओ, ओहरिअभरुव्व भारवहो ॥ ३ ॥ अतः सर्वाण्यपि पापानि निर्मायतयाऽऽलोचनीयानि शुद्ध्यर्थिना । यतो मायाविनः कृताऽपि शुद्धिर्न भवतीत्युच्यते कहेहि सव्वं जो वुत्तो, जाणमाणो निगूहई । न तस्स दिंति पच्छित्तं, बिंति अन्नत्थ सोहि य ॥ ४ ॥ अथ योऽस्मृत्या नालोचयति तस्य किमित्युच्यते

तृतीय-लहर्यां चतुर्थ-स्तरङ्गः ।

दण्ड-गुप्ति-शल्यत्रय-स्वरूपम् ।

न सभरेइ जे दोसे, सुब्भावा न य मायओ । पचक्खी सहि य तेओ, माइणो ड न साहए ॥ ५ ॥ प्रत्यक्षी प्रत्यक्षज्ञानी अतिशयज्ञानी । अथ मायाविनो दोषविशेषः प्रोच्यते पाव काऊण सय, अप्पाण सुद्धमेव वाहरइ । दुगुण करेइ पाव, बीअ बालस्स मदत्त ॥ ६ ॥ ततः किं कुर्यादुच्यते मायाइ दोसरहिओ, पई समय वड्ढमाणसवेगो । आलोइज्ज अकज्ज, न पुणो काहित्ति निच्छइओ ॥ ७ ॥ अथ यो मायां विमुच्य सम्यगालोचयति तस्य फलमुच्यते निट्ठविअ पावकम्मा, सम्म आलोइओ गुरुसमासे । पत्ता अणतसत्ता, सासयसुक्ख अणाबाह ॥ ८ ॥ तस्मात् मायाशल्य विहाय सम्यक् सकलातिचारजालमालोचनीयम् १ । तथा निदानशल्यमपि परिहार्यमहार्यसुखेच्छुभिः । यतो निदानविधानतो दुर्लभबोधिता भवेत्तया च ससारकांतारपरिभ्रमणम् । तच्च निदान नवविध सूत्रालापकैरेव गम्यते तथाहि निग्गथो वा निग्गंथी वा निआण करेइ जहा सक्क न मे देवा देवलोगा वा दिट्ठा तो इमे चेव महिड्ढिआ रायाणो देवा तो जइ इमस्स तवनिअमबभचेरस्स फलमिच्छता अहमवि आगमिस्साए राया हुज्जा तओ चुअस्स निआणाणुरूवलद्धट्ठाणस्स धम्म सुणमाणस्स दुल्लहा बोही ॥ १ ॥ केइ अणगारे परीसहपराइए चिंतेइ राया बहुचिंते बहु वारभइ तो जे इमे उग्गाइपुत्ता विभवसपन्ना ते पासित्ता तयट्ठ निवारण करेइ ॥ २ ॥ केइ अण० पुम बहुवावारो सगामाइदुक्खकारी अल मे पुरिसभावेण अन्नभवे इत्थिआ भविज्जा तओ० ॥ ३ ॥ केइ० इच्छीण असमत्था सव्वपरिभूता सव्वकाल परिहीणा य अओह अन्नजम्मे उग्गाइपुत्तेन विज्जा तओ० ॥ ४ ॥ केइ० इमे माणुस्सगा कामभोगा

मुत्तपुरीसगा साहुदेवभोगा तो अहमवि तेसु भवामि तओ० ॥ ६ ॥ केइ० निविन्नदिव्वमणुअकामभोगो निआणं करेइ जइ इमस्स तव० तो जत्थ नोपरिआरणा तत्थाहं भविज्जामि तओ० नो देसविरइ पडिवज्जइ सुलहबोहिए हवइ ॥ ७ ॥ केइ अणगारे निव्वि० चिंतेइ इमे उग्गाइपुत्ता अणुव्वयगुणव्वयट्ठिआ साहवो पडिलाभाणा विहरंति एअं साहु तओ० आगारधम्मं पडिवज्जइ नो अणगारधम्मं ॥ ८ ॥ केइ० निव्विन्न० जइ इमस्स तवनि० अम० तोहं दलिद्दकुले उववज्जिज्जामि एवं मे अप्पा सुनीहरए भवइ तओ० धम्मं सुचा पव्वज्जए नो सिज्झइ एवं नचा अनिआणेण भविअव्वंत्ति। तथा मिथ्यादर्शनशल्यमपि परिहरणीयम्। यतस्तत्र क्षानुतो हि हालाहलादिभिर्विधीयते यत् मिथ्यात्वेन विधीयते जंतोरहितं यदुक्तं न वि तं करेइ अग्गी, नेव विसं नेव किण्हसप्पो अ। जं कुणइ महादोसं, तिव्वं जीवस्स मिच्छत्तं ॥ १ ॥ तथा कठं करेसि अप्पं, दमेसि अत्थं चएसि धम्मत्थं। इक्कं न चयसि मिच्छत्तं, तिसलवं तेण बुड्डहिसि ॥ २॥ तस्मादनंतसंसारनिबंधनं मिथ्यादर्शनं वर्जनीयमेव केवलदुःखनिकेतनम्। एवं मायानिदानमिथ्यादर्शनशल्यानि यो वर्जयति स आराधकः इतरस्तु विराधकः परिभ्रमति संसारारण्ये। यदुक्तं मरिउ ससल्लमरणं, संसारम्मि महाकडिल्लम्मि। सुइरं भमंति जीवा, अणोरपारम्मि संसारे ॥ १ ॥ तथा तपोऽपि शल्यरहितस्यैव सफलं नेतरस्य यदुक्तं ससल्लो जह वि कट्ठग्गं, घोरं वीरं तवं चरे। दिव्वं वाससहस्सं तु, तओ वि तं तस्स निप्फलं ॥ २ ॥ तथाऽनुद्धृतं शल्यं यदनर्थजातं तनोति तद् विषशस्त्रादिभिरपि न कर्तुं शक्यते यदुक्तं न वि तं सत्थं व विसं च, दुप्पउत्तुव्व कुणइ वेआलो। जं तं च

दुप्पउत्त, सप्पुव्वए माइणो कुव्वो ॥ ३ ॥ ज कुणइ भावसल्ल, अणुद्धिरअ इत्थ सव्वदुहमूल । दुल्लहबोही अत्त, अणतससारिअत्त च ॥ ४ ॥ अतः कारणाद् गौरवत्रय विहाय शल्यत्रितयमुद्धरणीयमेव विवेकिभिरनतभवसतति-निदानम् । उक्त च तो उद्धरति गारव-रहिआ मूलयाण च । मिच्छादसणसल्ल, मायासल्ल निआण च ॥ ५॥

तथा गौरवत्रिक हेय यतिना । तत्रात्मनोऽशुभभावेन गुरुता गौरव तच्च ऋद्धिरससातागौरवभेदात्रिविधम् । तत्र ऋद्धिगौरव नृपतेन्द्रताद्यरिताद्यभिलापरूपम् । प्राप्तायां वा तदृद्धावहकारविकारः । रसगौरव तु सरसाहारेच्छाऽरसविरसाहारानिच्छारूपम् । सातागौरव तु यथा तनुसुखविहरण एतद्गौरवत्रय यथा विधीयते यतिभिः प्रमादपकनिमग्नैस्तथा श्रीउपदेशमालागाथाभिर्लिख्यते तथाहि जह जह बहुस्सुओ स-म्मओ अ सीसगणसपरिवुडो अ । अविणिच्छिओ अ समए, तह तह सिद्धतपडिणीओ ॥ ३२३ ॥ पवराइ वत्थपाया-सणोवगरणाईं एस विभवो मे । अविय महाजणनेया, अहति अह इड्डिगारविओ ॥ ३२४ ॥ अरस विरस लूह, जहोववन्न च निच्छए भुत्तु । निद्धाणि पेसलाणि य, मग्गइ रसगारवे गिद्धो ॥ ३२५ ॥ सुस्सूसई सरीर, सयणासणवाहणापसगपरो । सायागारवगुरुओ, दुक्खस्स न देइ अप्पाण ॥ ३२६ ॥ तथा तिहिं गारवेहिं मज्जइ त जाणाही अहाछद इति वचनाद् गौरवत्रय कुर्वाणो यतिर्यथाछदत्वमवाप्नोति । ततो हेतोस्तद्वर्जनीयमेव भवांतमिच्छुभिर्मुमुक्षुभिः ।

तथा विराधनात्रय त्यजनीयम् । तत्र प्रथमा ज्ञानविराधना, सा च प्रत्यनीकतागुरुनिह्नवतद्भक्तपानाद्यतरायविधानतत्प्रद्वेषाकालस्वाध्यायकरणादिज्ञानातिचारसमाचरणादिभिरवसेया । द्वितीया दर्शनविराधना सा च क्षायिकसम्यग्-

गौरव-
विराधना-
त्रयम् ।
कषाय-
संज्ञा-
चतुष्टयम् ।

दृष्टयोऽपि श्रेणिकादयो नरकं गता इत्यादिर्निंदनादिभिः । तृतीया चारित्रविराधना सा च महाव्रतादिखंडनतः । एतास्तिस्रोऽपि विराधना वर्जनीया एव । यतो रत्नत्रयविराधकोऽनंतसंसारी स्यादिति ।

तथा कषायाश्चत्वारोऽपि क्रोधमानमायालोभलक्षणाः क्षांतिमार्दवार्जवमुक्तिभिरभिभवनीयाः । यतः क्रोधादधोगतिः, मानेन चाधमा गतिः, मायया च गतेः प्रतिघातः, लोभतश्च लोकद्वयभयम् । उक्तं च श्रीउत्तराध्ययने अहे वयइ कोहेणं, माणेणं अहमागई । मायागइपडिग्घाओ, लोभाओ दुहओ भयं ॥ १ ॥ तथा कषायवशंवदो जंतुः प्रभूतसमयोपार्जितमपि तपःसंयमसमुदयं दहति । यदुक्तं जह वणदवो वणं, दवस्स जलिओ खणेण निद्दहइ । एवं कसायपरिणओ, जीवो तवसंजमं दहइ ॥ १३२ ॥ तथास्तोकस्यापि कषायस्य विश्वासो न विधेयः । यतः कषायाः प्रथमं स्तोका अपि पश्चाद् वर्द्धमाना अनंतभवसंततिनिदानं संपनीपद्यंते । यदुक्तं अणथोवं वणथोवं, कसायथोवं च अग्गिथोवं च । न हु भे वीससिअव्वं, थोवंपि से बहुं होइ ॥ १ ॥ दासत्तं देइ रिणं० ॥ २ ॥ तस्मात्तद् वस्तु परिहार्यं यतः कषायाग्निर्दीप्तिं भजते, तच्च समादेयं यतः कषायोपशांतिः स्यात् । उक्तं च तं वत्थुं मुत्तव्वं, जं पइ उप्पज्जए कसायग्गी । तं वत्थुं घित्तव्वं, जत्थोवसमो कसायाणं ॥ १ ॥

तथा संज्ञाचतुष्टयं वर्जनीयम् । तत्र प्रथमाऽऽहारसंज्ञा । सा च चतुर्भिरेभिः प्रकारैः संभवेत्तथाहि अवमकोष्ठतया १ क्षुद्वेदनीयकर्मोदयेन वा २ आहारदर्शनश्रवणादिना वा ३ तच्चिंतनेन वा ४ । उक्तं च ओमकोट्ठयाए १ छुहावेअणिज्जस्स कम्मस्स उदएण २ मईए ३ तदट्ठोवओगेणं ४ । द्वितीया भयसंज्ञा । साऽपि चतुर्भिः स्थानैः समुत्पद्यते । तथाहि

तृतीय-
लहर्यां
चतुर्थ-
स्तरङ्गः ।

हीनसत्त्वतया १ भयमोहनीयकर्मोदयेन वा २ भयहेतुदर्शनश्रवणादिना वा ३ सतत भयचिंतया वा ४। उक्त च हीण सत्तयाए १ भयमोहणिज्जोदएण २ मईए ३ तदट्ठोवओगेण ४। तृतीया मैथुनसञ्ज्ञा। साऽपि चतुर्भिः प्रकारैः सञ्जायते। तथाहि चित्तमांसशोणिततया १ वेदोदयेन वा २ मैथुनदर्शनश्रवणादिना वा ३ सतत मैथुनचिंतनेन वा ४। उक्त च चिअमससोणिअयाए १ वेअमोहणिज्जोदएण २ मईए ३ तदट्ठोवओगेण ४। तुरीया परिग्रहसञ्ज्ञा। साऽपि चतुर्भिः स्थानैर्भवतीति। तथाहि अविमुक्ततया १ लोभमोहनीयोदयेन २ परिग्रहदर्शनश्रवणादिना ३ सतत परिग्रहचिंतया वा ४। उक्त च अविमुत्तयाए १ चारित्तमोहणिज्जोदएण २ मईए ३ तदट्ठोवओगेण ४। एताश्चतस्रोऽपि सञ्ज्ञा असातवेदनीयमोहनीयकर्मोदयजन्यचैतन्यविशेषरूपाः परिहरणीया एव तत्तत्कर्मसमुच्चयनिमित्ततया।

तथा प्रागुक्तस्वरूपाश्चतस्रोऽपि विकथा विवर्जनीया एव कर्तुः श्रोतृणां वाऽनतभवसततिनिदानदुष्कर्मबंधनिबंधनत्वात्। तथा ध्यानचतुष्कमध्यात्तिर्यग्निरयगतिनिदानभूते आर्त्तरौद्रध्याने न विधेये स्वर्गापवर्गहेतुभूते धर्मशुक्लध्याने वाऽहर्निशं ध्येये। यतः शुभाशुभकर्मबंधनिबंधनभूत ध्यानमेव। तत्र प्रथमे दुष्कर्मबंधस्य हेतुभूते, अपरे तु शुभकर्मबंधस्य।

अथ ध्यानस्वरूपमुच्यते। यत् स्थिरमध्यवसान तद्ध्यानम्। यत्तु चल तच्चित्तम्। तच्चभावनारूपमनुपेक्षारूप चिंतारूप वा भवेत्। तत्र भावना ध्यानाभ्यासक्रिया। अनुप्रेक्षा त्वनु पश्चाद् भावे प्रेक्षण प्रेक्षा, सा च स्मृतिध्यानाद् भ्रष्टस्य चित्तचेष्टेत्यर्थः। एतदुक्तप्रकारद्वयरहिता चित्ता मनश्चेष्टा या सा चिंता। इति ध्यानलक्षण प्रतिपाद्य तत् काल-स्वामिस्वरूपमुच्यते। तथाहि छद्मस्थानामेकस्मिन् वस्तुनि चित्तावस्थानलक्षण ध्यानमतर्मुहूर्त्त यावद् भवति, ततः पर

चिंता । ध्यानांतरं वा भवेत् । बहुवस्तुसंक्रमे तु ध्यानसंतानः प्रभूतसमयमपि संभवेत् । अयं भावो बहूनि वस्तून्यात्मगतानि मनःप्रभृतीनि परगतानि द्रव्यादीनि तेषु संक्रमेण चिरेणापि ध्यानप्रवाहः स्यादिति । योगनिरोध एव केवलिनां ध्यानं न तु चित्तावस्थानं तद्व्यापारस्याभावात् ।

इत्थं सामान्येन ध्यानलक्षणमभिधाय तद्विशेषस्वरूपं प्रतिपाद्यते । तथाहि तत्रार्त्तध्यानं चतुर्विधम् । तत्र प्रथमभेदो विभाव्यते । तथाहि अमनोज्ञा ये इंद्रियविषयास्तदाधारभूतानि च यानि वस्तूनि रासभादीनि तेषां प्राप्तानां सतामत्यर्थं वियोगचिंतनं कथं तु ममैभिर्वियोगः स्यादिति वर्त्तमानकालविषयं द्वेषपोषतो वियोगचिंतनम् । वियोगे च सति संप्रयोगाभावानुस्मरणं कथं ममैभिः समं सदैव संप्रयोगो न भवेदित्यनागतकालविषयं द्वेषाद् वियोगचिंतनम् । तथा पूर्वकाले ममाऽमुकः संयुज्य वियुक्त आदित एव वा न संयुक्तस्तद् वरमभूदिति वियुक्ताऽसंयुक्तविषयाऽतीतानुमोदनया द्वेषविशेषादतीतकालविषयमार्त्तध्यानम् । एवं यद्द्वेषात्त्रिकालविषयमार्त्तध्यानं स प्रथमो भेदः प्रथमध्यानस्य १ । अथैतस्य द्वितीयभेदो विभाव्यते । तथाहि शूलशिरोरोगादिवेदनाया अत्यर्थं यद्वियोगविषयदृढाध्यवसायस्तत्प्रतीकाराकुलितचेतसो वर्त्तमानसमयविषयः । कथंचित्तदभावे सति कथं ममानयायत्यां संयोगो न भवेदिति तदसंप्रयोगचिंतनमनागतसमयविषयम् । तथावरमियान् समयः समतिक्रांतः पाश्चात्यो यत्रेयमेवंविधा वेदना न प्रादुरासीदित्यतीतकालविषयरोगादिवेदनाभावानुमोदनविषयमार्त्तध्यानमयमार्त्तध्यानस्य द्वितीयो भेदः २ । अथैतस्य तृतीयभेदो दर्श्यते । तथाहि इष्टानां शब्दादिविषयानां तदाधारभूतानां च गायनवनितादीनामवियोगचिंतनं रागाकुलितचेतोवृत्तेर्वर्त्तमानकालविषयम् । तथाऽनागत-

विकथा—ध्यान-चतुष्टय-स्वरूपम् ।

कालविषयमुत्तरकालेऽप्यर्थे तत्संयोगचिंतनम्। अतीतकालविषयं तु प्राक्प्रवृत्ततत्संयोगानुमोदनतः। अयमार्त्तध्यानस्य तृतीयो भेदः ३। अथैतस्य तुरीयभेदः प्रदर्श्यते। तथाहि देवतासार्वभौमादिपदवीप्रार्थनारूपमत्यतमज्ञानानुगतं निदानं चिंतनमार्त्तध्यानस्य तुर्यो भेदः। न ह्यज्ञानिनं विहायान्यः कोऽपि शिवसुखसाधकं तपःकष्टानुष्ठानादि सांसारिकसौख्यकृते विफलीकरोति। एवंचतुर्विधमप्यार्त्तध्यानं रागद्वेषमोहमलिनीकृतस्य जतोः संसृतिवर्द्धनमोघतो विशेषतस्तु तिर्यग्गतिमूलम्। ननु मुनेरपि शूलादिरोगाभिभूतस्यासमाधौ तत्प्रतीकारकरणे च तदुविप्रयोगप्रणिध्यानापत्तेस्तथा तपःसंयमरमासेवने च भवसंभवदुःखवियोगप्रणिधानादार्त्तध्यानं संभवेत् ? अत्रोच्यते रागद्वेषवशवर्त्तिनः स्यादेव न पुनरन्यस्य, तथाहि स्वकर्मपरिणामजनितमेतच्छूलादीति स्वजीवानुशासनपूर्वं सम्यक्सहमानस्य पुष्टालंबने चाऽनवद्यमल्पसावद्यं वा तत् प्रतीकारं कुर्वतोऽपि तथा निदानरहिततपःसंयमरूपसांसारिकदुःखप्रतीकारं कुर्वाणस्य किंतु प्रत्युतैतद्धर्मध्यानमेवाऽवसेयम्। अथार्त्तध्यानस्य संसारवृद्धिहेतुता भाव्यते। तथाहि रागद्वेषमोहाः संसृतिहेतवः कीर्त्यंते सूत्रे। ते च त्रयोऽप्यार्त्तध्याने। तेन तत् संसारशिखरिमूलम्। अथार्त्तध्यायिनो लेश्यास्वरूपं भाव्यते। कृष्णनीलकापोताख्यास्तिस्रो लेश्याः स्युरार्त्तध्यायिनो रौद्रध्यानापेक्षया नाऽतिसंक्लिष्टपरिणामास्ताश्च कर्मपरिणामजनिता विज्ञेयाः। अथैतद्ध्यायिनो लिंगानि कीर्त्यंते तथाहि आक्रंदनं १ शोचनं २ परिदेवनं ३ ताडनं ४ स्वरूपाणि चत्वारि लिंगानि भवेयुरिष्टवियोगाऽनिष्टसंयोगवेदनाजनितानि। तत्राऽऽक्रंदनं महता शब्देन रोदनम्, शोचनं त्वश्रुपूर्णनयनस्य दीनता, परिदेवनं तु क्लिष्टभाषणम्, ताडनं उरःशिरःकुट्टनकेशलुंचनादि। तथार्त्तध्यायी निजजनितान्यन्यफलानि विफलानि च शिल्पकलावाणिज्यादीनि निंदति। तथा सकौतुकः प्रशंसति

परविभूतीः प्रार्थयते च तदर्जनपरायणश्च स्यात् । प्राप्तासु च तासु तद्रक्षणप्रवणश्च भवेत् तथा शब्दादिपंचविषयगृद्धः सद्धर्मः पराङ्मुखः प्रमादपरः श्रीमदागमानपेक्षी च भवेत् । अथैतद् यत्र स्यान्न स्याच्च तद्व्यक्तिर्दर्श्यते तथाहि अविरतेषु सम्यग्दृष्टिमिथ्यादृष्टिरूपेषु तथा देशविरतेषु प्रमत्तसंयतेषु च संभवेन्न पुनरप्रमत्तसंयतेषु । तस्मात् सकलप्रमादमूलमेतदार्त्त-ध्यानं वर्जनीयमेव यतिभिर्यत्युपासकैश्च । इत्युक्तं किंचिदार्त्तध्यानस्वरूपम् ॥ १ ॥

अथ रौद्रध्यानस्वरूपं किंचिदुच्यते । तथाहि हिंसानुबंध्यादिभेदेन चतुर्विधं रौद्रध्यानम् । तत्र प्रथमं क्रोधादिग्रह-ग्रासतया जंतूनां कशलतादिभिर्वधविषये । तथा मारादिभिर्वधनविषये । तथा रज्जुभिर्बंधविषये । तथोल्मुकादिभिर्दहन-विषये । तथाऽङ्कने मारणे च यद्दृढाध्यवसायविधानं वधबंधाद्यकुर्वतोऽपि । स रौद्रध्यानस्य प्रथमो भेदः १ । अथैतस्य द्वितीयो भेदो दर्श्यते । तथाहि–मायाविनो वाणिजादेस्तथा परवंचनप्रवृत्तस्य । तथा प्रच्छन्नपापस्य । पिशुनासभ्यासद्भूत-भूतघाताविवचनेषु प्रवृत्तिमकुर्वतोऽपि यत्तद्विषये दृढाध्यवसानं स रौद्रध्यानस्य द्वितीयो भेदः । तत्र पिशुनमनिष्टसूचकवचनम-सभ्यं यकारादि । असद्भूतं तु त्रिधाऽभूतोद्भावनं १ भूतनिह्नवोऽर्थान्तराभिधान ३ मिति । तत्र प्रथमं सर्वगत आत्मेत्यादि । द्वितीयं तु नास्त्येवात्मेत्यादि । तृतीयं गां तुरगमित्यादिवदतः । भूतघातादिवचनं तु छिंद्धि भिंद्धि व्यापादयेत्यादिकम् । अथैतस्य तृतीयभेदो विभाव्यते । तथाहि तीव्रक्रोधलोभाकुलस्य जंतोः परलोकापायनिरपेक्षो भूतोपघातपरद्रव्यापहारविषये यश्चित्ताध्यवसायः स रौद्रध्यानस्य तृतीयो भेदः ३ । अथैतस्य तुरीयभेदो भाव्यते । तथाहि शब्दादिपंचविषयसाधनधन-संरक्षणपरायणस्तथा सतामनिष्टस्तथा सर्वेपामभिशंकनेन विमः कं किं करिष्यंतीत्यादिलक्षणेन सर्वोपघातचिंतनपरं कषाय-

कलुषमेवविध यच्चित्त स रौद्रध्यानस्य तुरीयो भेदः ४ । एतच्च चतुर्विधमपि रौद्रध्यान करणकारणानुमतिविषय वर्जनीयमेव । एतच्च वेद(४)मितभेदमपि रौद्रध्यान सम्यग्दृष्टिमिथ्यादृष्टिरूपेष्वविरतेषु देशविरतेषु च सभवति, न तु सयतेषु प्रमत्ताप्रमत्त गुणस्थानसस्थितेषु । ननु प्रसन्नचद्रराजर्षिस्तदा तत् कथमभूदुच्यते यदाऽनेन महात्मना रौद्रध्यानाधिरूढेन मनसैव सपराय कुर्वता सप्तमनिरययोग्य दुष्कर्म समुपार्जित 'तदैतस्मिन् द्रव्यतो यतित्वमभून्न तु भावत'। यतो भावयति' प्रमत्तगुणस्थान स्थितोऽपि देवायुरेव बध्नाति न त्वन्यदायुस्त्रितयम् । एतच्चतुर्विधमपि रौद्रध्यान रागद्वेषमोहमोहितमातरोघतः ससारपरिवर्द्धन विशेषतस्तु निरयगतिमूलम् । लेश्यास्तु रौद्रध्यानध्यायिनः कर्मपरिणामजनिता अतिसक्लिष्टा आद्या एव तिस्रो न त्वप्रेतनाः । लिंगानि त्वेतद्ध्यानध्यायिन उत्सन्नदोषबहुलदोषनानाविधदोषामरणदोषरूपाणि चत्वारि भवति । तत्र हिंसानुबधिप्रभृतिरौद्र-ध्यानानामन्यतरस्मिन् प्रवर्तमान उत्सन्नमनुपरत बाहुल्येन प्रवर्त्तत इत्युत्सन्नदोषः १ । सर्वेष्वपि चैव प्रवर्त्तत इति बहुलदोषः २ । नानाविधेषु त्वक्तक्षणनयनोत्खननादिषु हिंसाद्युपायेष्वसकृदप्येव प्रवर्त्तत इति नानाविधदोषः ३ । आत्मनाऽमहदाप द्रुतोऽपि महदापद्गतोऽपि वाऽन्यस्मिन्नामरणादसजातानुताप इत्यामरणदोष. । एतानि लिंगानि रौद्रध्यानोपगतस्य भवति । एतद्ध्यानोपगतश्च परव्यसन बहु मन्यते निर्दय कृतेऽपि पातके निरनुताप एहिकामुत्रिकापायनिरपेक्षश्च भवेत्, पाप च निर्माय चित्ते प्रमोद विधत्ते । इत्युक्त किंचिद् रौद्रध्यान ॥ २ ॥

अथ धर्मध्यानमुच्यते । तथाहि भावनादेशकालाशनविशेषाऽऽलबनक्रमध्यातव्यध्यायकानुप्रेक्षालेश्यालिंगफलानि विज्ञाय धर्मध्यान विधेयम् । तत्र पूर्वं भावनाभिः कृताभ्यासो धर्मध्यानस्य योग्यतामुपैति यतिः । ताश्च चतस्रो ज्ञानदर्शन-

चारित्रवैराग्यजनिताः । तत्र श्रुतज्ञाने कृताभ्यासः करोति मनोधारणम् । तथा सूत्रार्थयोः शुद्धिर्भवनिर्वेदं च । तथा ज्ञाने तत्त्वे निश्चलमतिर्ध्यायेत धर्मध्यानम् । इति प्रथमा ज्ञानभावना १ । अथ द्वितीया दर्शनभावना । शंकादिदूषणपंचकविकलः प्रशमधैर्यादिगुणगणगरिष्ठस्तत्त्वान्तरेऽसंभ्रांतचित्तो दर्शनशुद्धिभावनया भावितो ध्यायेत सुकृतध्यानम् २ । अथ तृतीया चारित्रभावना । सर्वसावद्ययोगनिवृत्तिरूपक्रियाभ्यासतः प्राक्तनकर्मनिर्जरणे नवीनपापकर्माऽनादानेन च चारित्रभावनया भावितः प्राप्नोति सुकृतध्यानम् ३ । अथ तुरीया वैराग्यभावना सुविदितजगत्स्वभावो निस्संगो निर्भय एहिकामुत्रिकाशंसाविप्रमुक्तस्तथाविषक्रोधादिकषायविरहितो वैराग्यभावनाभावितो ध्यायेत धर्मध्यानम् ४ । अथ धर्मध्यानदेशस्वरूपं किंचिद् भाण्यते । तथाहि नित्यमेव युवतिपशुपंडकद्यूतकरादिकुशीलवर्जितं विजनं स्थानमुक्तं यतिजनस्य । विशेषस्तु धर्मध्यानसमये तु संहननधृतिभ्यां बलवंतोऽभ्यस्तभावनादिव्यापारास्तेषां ग्रामे जनाकीर्णे शून्येऽरण्ये वा न विशेषः । ततः कारणाद् यत्र मनोवचनतनूनां समाधानं स्यात्स देशो धर्मध्यानस्य । वचनतनुसमाधानमत्र कोपयुज्यते ? उच्यते तत्समाधानं मनोयोगोपकारकमतस्तत्समाधानमपि ध्यानमुच्यते । यदुक्तं एवंविहा गिरा मे, वत्तव्वा एरिसा न वत्तव्वा, इअ वेआलिअवक्कस्स भासओ वाइअं झाणं ॥ १ ॥ सुसमाहिअकरपायस्स अकज्जे कारणम्मि जयणाए । किरिआकरणं जं तं, काइअझाणं भवे जइणो ॥ २ ॥ कालस्तु स एव यत्रोत्तमयोगसमाधानं लभते, न तु दिननिशावेलानियमो धर्मध्यानविषये । आसनमपि तदेव यत्र स्थितस्य धर्मध्यानं वर्द्धमानं भवेत् । तच्चोर्ध्वस्थितस्य कायोत्सर्गरूपं निषण्णस्य पर्यंकासनादिशयितस्य असंडायितांह्रिकं किं बहुना या काचिद्देहचेष्टा धर्मध्यानोपरोधिनी स्यात्तया

स्थेयम् । न तु धर्मध्याने देशकालासनाना नियम , कुतो हेतोः ? उच्यते यत' सर्वेष्वपि देशकालासनविशेषेषु वर्त्तमाना अनता' प्राणिनः प्राप्ता अपुनर्भव केवलश्रिय समासाद्य । अतो हेतोस्तेषामनियमः । अथालबनान्युच्यन्ते । तथाहि–वाचना प्रच्छनापरावर्त्तनानुप्रेक्षारूपाणि श्रुतधर्मानुगतान्यालबनानि । चारित्रधर्मानुगतानि तु सामायिकप्रत्युपेक्षणाद्यवश्यकरणीयरूपाणि । यथा गृहीतदृढद्रव्यालबन' पुमान् विषमस्थाने समारोहति, एव कृतवाचनाद्यालबनो धर्मध्यानेऽपि । ध्यानप्रतिपत्तिक्रमस्तु यथा मन स्वस्थता भवेत्तथा मनोवचनतनुनियत्रणरूपोऽभ्यसेय. । अथ ध्यातव्यमुच्यते तथाहि–आज्ञाऽपायविपाकसस्थानविचयभेदाद्ध्यातव्य चतुर्द्धा । तत्र सूक्ष्मद्रव्याद्युपदर्शकत्वात् सुनिपुणा, द्रव्यार्थनयादेशादनादिनिधना, ' सवे जीवा न हतव्वे ' त्यादिवचनै' सर्वभूतहिता, भूत सत्य भाव्यतेऽनयेति भूतभावनामनेकांतपरिच्छेदात्मिकामिति यावत्तथाऽनर्घ्याममितार्थां, शेषकुप्रावचनिकैरजिता, पूर्वापराविरोधित्वादनुयोगद्वारात्मकत्वात्तथागर्भत्वाच्च महार्थामचिंत्यशक्तिसमेतत्वाच्च महानुभावा, सर्वद्रव्यादिविषयत्वाच्च महाविषया, निरवद्यामनिपुणजनदुर्ज्ञेया, नयभगप्रमाणगमगहनां, श्रीजिनाज्ञां भावयेत् । तत्र च मतिदुर्बलतया तद्विधकथकाचार्यवियोगेन धर्मास्तिकायादिज्ञेयगहनतया ज्ञानावरणकर्मोदयेन च कस्मिश्चित् पदार्थे हेतुदृष्टातासभवेऽपि सम्यगवबोधश्चेन्न स्यात्तथापि श्रीसर्वज्ञमतमवितथमेवेति विचिंतयेत् मतिमान् । यतोऽनुपकृतेऽपि परानुग्रहपरा जगत्प्रवरास्तीर्थंकरा निर्जितरागद्वेषमोहा नान्यथावादिनो भवेयुरित्युक्त प्रथम ध्यातव्यम् १ । अथ द्वितीयमुच्यते । तथाहि–रागद्वेषकषायाश्रवाविक्रियासु वर्त्तमानानां प्राणिनामैहिकामुत्रिकापायान् विचिंतयेदप्रमत्ततया सावद्यपरिवर्जकः २ । अथ तृतीयमुच्यते तथाहि–मिथ्यात्वाविरतिकषाययोगजनित शुभमशुभ च प्रकृतिस्थित्यनुभागप्रदेशभेदतश्चतुर्विध कर्म

विपाकं ध्यायेद्धर्मध्यानं ध्याता ३। अथ तुरीयमुच्यते तथाहि श्रीजिनप्रज्ञप्तानि धर्मास्तिकायादिद्रव्याणां गमनस्वभावादीनि लक्षणानि, तथालोकक्षेत्रापेक्षया धर्माधर्मयोः संस्थानानि, पुद्गलापेक्षयापेक्षया उपरिमंडलादीनि, जीवशरीरापेक्षया तु समचतुरस्रादीनि, तथा तेषामेव द्रव्याणामाधारभूतानि लोकाकाशादीनि, तथा 'धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायस्स पदेसे' इत्यादीनि तेषामेवं विधानानि, तथा तेषामेवात्मीयान्यतरीयानि प्रमाणानि, ध्यायेद्धर्मध्यानविधेयात्तथा तेषामेवोत्पत्तिविपत्तिस्थित्यादिपर्यायाश्च, तत्र धर्मास्तिकायो विवक्षितसमयसंबंधिरूपापेक्षयोत्पद्यते, तदनंतरातीतसमयसंबंधिरूपापेक्षया तु विनश्यति, द्रव्यात्मना तु नित्यः, एवमधर्मास्तिकायादिष्वपि भावना विधेया, तथा पंचास्तिकायमयमनाद्यं अनंतं जिनोदितं नामे ठवणा दविए, खित्ते काले भवे अ भावे अ। पज्जवलोए अ तहा, अट्ठविहो लोगनिक्खेवो ॥ १ ॥ इति गाथोक्तनामादिभेदभिन्नं, क्षेत्रलोकापेक्षया त्वधोलोकादिभेदत्रयभिन्नं लोकं चिंतयेत्, तथा क्षेत्रलोक एव घर्माद्या ईषत्प्राग्भारांता वसु(८)मिता भूमीश्चिंतयेत्, तथा घनोदधिघनवाततनुवातरूपाणि सप्तपृथिवीपरिक्षेपरूपीणि स्थितान्येकविंशतिवलयानि, तथाऽसंख्येयान् द्वीपोदधींस्तथा सीमंतकादीनप्रतिष्ठानांतान्निरयावासकाँस्तथाज्योतिष्कवैमानिकसंबंधीनि विमानानि, तथा भवनपतिसंबंधीनि भवनानि, तथा व्यंतरनगराणि एतेषां च चिंतनं संस्थानमानसंख्यादिचिंतनतोऽवसेयं, तथाऽऽकाशादिकप्रतिष्ठितशाश्वतलोकस्थितिस्वरूपं चिंतयेत्, तथोपयोगलक्षणमनादिनिधनं शरीरात् पृथग्भूतं शुभाशुभकर्मकर्त्तारं, तद्भोक्तारममूर्त्तं च जीवं ध्यायेद्धर्मध्यानविधाता। तस्य च जंतोः स्वकर्मजनितं जननजरानिधननीरपरिपूर्णं, कषायपातालकलशसंकुलं, व्यसनशतश्वापदसमाकीर्णं, मोहमहावर्त्तमज्ञानपवनप्रेरितं, संयोगवियोगमहोर्मिमालासमाकुलं, महाभीमकापारा-

वारससारपारावार, विचिंतयेत्तस्य च समारसागरस्य तारणे समर्थं, सम्यग्दर्शन, सुबंधनमनघं, ज्ञानमयनिर्यामक, सवरकृत निश्छिद्रभाव, तपःपवमानविहितवेग, वैराग्यमार्गे समापतितमपध्यानोर्मिमालाऽक्षोभ्य, चारित्रमयमहायान विचिंतयेत्, य चानर्घ्यपृथिवीकायारभपरित्यागादिशीलागरत्ननिकरपरिपूर्ण समारुह्य सुश्रमणवणिजो यथा निर्वाणनगर निरपाय त्वरयैव व्रजति, यथा–तत्र गतानां रत्नत्रयोपार्जितमनतमप्रतिममेकातभाविसौख्य भवेत्तथा ध्यायेत् । किं बहुना ? सर्वमेव जीवादि पदार्थविस्तरोपेतसर्वनयसमूहात्मकसमयसद्भाव, ध्यायेद्धर्मध्यानध्याता। अथ धर्मध्यानध्यातृस्वरूपमुच्यते। तथाहि अप्रमादिन उपशांतमोहा क्षीणमोहाश्च धर्मध्यानस्य ध्यातारः। अथाऽनुप्रेक्षास्वरूप किंचित् प्ररूप्यते। तथाहि–यः पूर्वं धर्मध्यानेन भावि तचित्तः स्यात् स धर्मध्यानोपरमेऽप्यनित्यताऽशरणतैकतासंसारासारताचिंतनरूपाश्चतस्रोऽनुप्रेक्षा भावयेत्। अथ लेश्या उच्यते। तथाहि आगमोपदेशाज्ञानिसर्गतो यज्जिनप्रणीतभावानां सम्यक्श्रद्धान तद्धर्मध्यानस्य लिङ्ग, तथा यो जिनमुनिगुणोत्कीर्तन दानविनयसपन्नः श्रुतशीलसंयमरतश्च स्यात्सोऽप्येवविधैर्लिंगैर्धर्मध्यानवानवसेयः । अथ फलमुच्यते । तथाहि–धर्मध्यानस्य पुण्याश्रवरूपः शुभाश्रवस्तथाऽशुभकर्मागमनिरोधरूपः सवरस्तथा कर्मक्षयरूपा निर्जरा तथा सुकुलप्रत्यागमनपुनर्बोधिलाभ-भोगप्रव्रज्याऽप्रव्रज्याऽपवर्गानुबंधित्वाच्छुभानुबंधीनि नरामरसुखानि फलानि भवेयुरित्युक्त द्वादशभिर्द्वारैर्धर्मध्यान ॥ २ ॥

अथ शुक्लध्यानस्य स्वरूप किंचिदुच्यते । तथाहि–शुक्लस्यापि भावनादीनि द्वादशद्वाराणि स्युस्तेषु भावनादेशकालासन विशेषेषु न विशेष इत्यालबनादीनि द्वारद्वाराण्युच्यते । तथाहि–क्षांतिमार्दवार्जवमुक्तयः श्रीमदर्हत्प्रवचनरहस्यभूता आलंब नानि भवति शुक्लध्यानस्य । यतस्तदालबन एव पुमान् शुक्लध्यानमधिरोहति । क्रमस्तु शुक्लध्यानयोराद्ययोर्द्वयोर्धर्मे

ध्यानवत् विशेषः । पुनरेष त्रिजगद्विषयं मनः क्रमेण संक्षिप्य परमाणुविषये स्थापयित्वा ध्यायति सुनिष्प्रकंपः संश्छद्मस्थः शुक्लध्यानम् । ततोऽपि प्रयत्नविशेषान् मनोऽपनीयाऽमना जिनः स्याच्चरमयोर्द्वयोर्ध्याता । तत्राप्याद्यस्यांतर्मुहूर्त्तेन शैलशीम-प्राप्तस्तस्यां च द्वितीयस्य, अत एव शुक्लध्यानाद्यभेदद्वयं ध्यात्वाऽतिक्रांतस्य पंचमावबोधप्राप्तिः केवली च शुक्ललेश्योऽध्यानी च यावत् शैलेश्या अर्वागंतर्मुहूर्त्तम् । तत्र च सूक्ष्मक्रियानिवृत्तिरूपं तृतीयो ध्यानभेदः । शैलेश्यां च व्युच्छिन्नक्रियानिवृत्ति-रूपस्तुर्यो भेदः । अत्राह विनेयः कथं छद्मस्थस्त्रैलोक्यचरणशीलं चेतः संक्षिप्य परमाणौ स्थापयति ? कथं वा ततोऽप्यप-नयति पंचमावबोधी । उच्यते यथा सर्ववपुर्विषयं विषं मंत्रबलेन निरुध्य मंत्रवादी डंक एव स्थापयति, तदनुप्रधानतरमंत्र-बलेन च ततोऽप्यपनयति, तथा त्रिभुवनविषयं मनो जिनवचनध्यानबलेन परमाणौ धारयति, तदनु जिनमंत्रवादी विशिष्ट-तरध्यानमंत्रबलेन ततोऽप्यपनयति । अत्रैवार्थे दृष्टांतांतरमुच्यते । तथाहि यथा अपसारितेंधनभरः स्तोकेंधनावशेषे वह्निर्वह्नि-मात्रमेव स्यात्ततोऽप्यपनीतश्च यथा वा स निर्वाति, तथा मनोहुताशोऽपि । यथा वा नालिकायां तप्तायसभाजनोदरे वा स्थितं तोयं क्रमेण हीयमानं सन्निरवशेषतयाऽपैति तथा मनोजलमपि । एवं यथा विषादिभिर्निर्मनोयोगं निरुणद्धि पंचमाव-बोधी । तथा वाग्योगं, तथैव च क्रमात् काययोगं योगत्रयं च रुद्धशैलेशवत् स्थिरः शैलेशी केवली भवति । इत्युक्तः शुक्ल-ध्यानस्य क्रमः । अथ ध्यातव्यमुच्यते । तथाहि ध्यातव्यं पृथक्त्ववितर्कसवीचारादिभेदेन चतुर्विधम् । तत्र पृथक्त्वेन विस्तीर्णभावेन, वितर्को विचारणं, यस्मिंस्तत्पृथक्त्ववितर्कं, सविचारमर्थव्यंजन-योगांतरसंक्रमतः तत्राऽर्थाद्द्रव्यं व्यंजनं च शब्दोपयोगस्तु मनोयोगादिकः । अयं भावः उत्पत्ति-स्थिति-विपर्ययादि-पर्यायाणां यदेकस्मिन् द्रव्ये परमाणुजीवादिके

द्रव्यार्थिकपर्यायार्थिकादिनानानयैश्चितन सर्वगतश्रुतानुसारेण पूर्वविदां मरुदेव्यादीनां त्वन्यथा तत् प्रथम ध्यातव्यम् १। अथ द्वितीयमुच्यते। तथाहि द्वितीयमेकत्ववितर्कमविचारम्। तत्रैकत्वेनाऽभेदेन, वितर्को व्यजनरूपो वा, यत्र तत्तथा, अविचारस्त्वर्थव्यञ्जनयोगांतरसंक्रमाभावतः। अथ भावो निवातनिकेतनस्थितप्रदीपवदुत्पादस्थितिविनाशादिपर्यायाणामेकस्मिन् पर्याये यन्निश्चलं चेतस्तद् द्वितीयम् २। तृतीय तु निर्वाणगमनप्रत्यासन्नसमये केवलिनो वाङ्मनोयोगद्वयेन रुद्धे सत्यर्द्धनिरुद्धतनुयोगस्य सूक्ष्मक्रियानिवृत्तिसूक्ष्मक्रिय च तदनिवृत्ति च प्रवर्द्धमानांतरपरिणामात्र निवर्त्ततीत्यऽनिवृत्ति उच्छ्वासनिश्वासादिस्तोककायक्रियस्य ३। तुरीय तु शैलेशीगतस्य व्युच्छिन्नक्रियाऽप्रतिपातिनिरुद्धयोगत्रयस्यावसेय ४। एतेषु प्रथम मनोयोगादावेकस्मिन् योगे सर्वेषु वा तत्त्वगमिकश्रुतपाठिन द्वितीय त्वेकस्मिन्नेव योगांतरसंक्रमाभावात्। तृतीय तु काययोग एव। तुरीय त्वयोगिनि शैलेशीकेवलिनि। ननु ध्यै चिन्तायामिति धातुपाठाद्ध्यान मनःपरिणाम एव, शुक्लध्यानोपरितनभेदद्वय तु निरुद्धमनोयोगे केवलिनि प्रोक्त कथमेतत् सगतम्? उच्यते यथा छद्मस्थस्य मनः सुनिश्चल स ध्यानमुच्यते, तथा योगत्वाव्यभिचारात् केवलिनः काय एव सुनिश्चलः सन् ध्यानता निगद्यते। अत्र हेतवो दर्श्यते। तथाहि पूर्वप्रयोगात् १ कर्मनिर्जराहेतुत्वात् २ शब्दार्थबहुत्वात् ३ श्रीजिनागमप्रामाण्याच्च ४। यथा पूर्वप्रयोगात् कुलालचक्र भ्रमणकारणदण्डादिक्रियाभावेऽपि भ्रमति तथा केवलिनो मनःप्रभृतियोगनिरोधेऽपि जीवोपयोगसद्भावतो भावचित्तस्य सद्भावाद् भवस्थस्य ध्याने। एव शेषहेतवोऽपि योजनीयाः। विशेषस्तूच्यते यथा क्षपकश्रेण्या कर्मनिर्जरा तथाऽत्रापि भवोपग्राहिकर्मनिर्जरेति भाव.। शब्दार्थबहुत्वादिति यथा एकस्यैव हरिशब्दस्यादित्यदेवपतिप्रभृतयोऽनेकेऽर्था एव

ध्यानशब्दस्यापि ध्यै चिंतायां, ध्यै काययोगनिरोधे, ध्यै अयोगित्वे इत्यादि । यतो जिनागमस्य प्रमाणमत एव जिनागमोक्तत्वान्मनोयोगनिरोधेऽपि भवस्थस्य केवलिनः शुक्लध्याने । उक्तं ध्यातव्यम् ।

अथ ध्यातृस्वरूपमुच्यते । तथाहि प्रथमसंहननसंयुताः सर्वप्रमादविरहिता यतयः क्षीणोपशांतमोहाश्चतुर्दशपूर्वविदश्च तदुपयुक्ताः । आद्ययोः पृथक्त्ववितर्कसविचारैकत्ववितर्काविचारयोः शुक्लध्यानयोर्ध्यातारः । द्वयोश्चांतिमयोः क्रमतः सयोग्ययोगिकेवलिनः ।

उक्ता ध्यातारोऽथानुप्रेक्षाः प्रदर्श्यंते । तथाहि शुक्लध्यानभावितचित्तश्चरितगुणगरिष्ठो यतिर्मिथ्यात्वाविरत्याद्याश्रवद्वारविहिताऽनंतदुःखलक्षणापाय १ भवाऽशुभानुभावा २ ऽनंतभवसंतान ३ वस्तुविपरिणामलक्षणाः शुक्लध्यानाद्यभेदद्वयसंगताश्चतस्रोऽनुपेक्षाश्चिंतयेत् । उक्ताऽनुप्रेक्षाः ।

अथ लेश्या दर्श्यन्ते । तथाहि सामान्येन शुक्ललेश्यायामाद्ये शुक्लध्याने । तृतीयं परमशुक्ललेश्यायाम् । तुरीयं तु लेश्यातीतम्, इत्युक्ता लेश्याः ।



अथ लिंगान्युच्यंते । अवधाऽसंमोहविवेकव्युत्सर्गलक्षणानि चत्वारि लिंगानि भवंति शुक्लध्यानस्य । परीषहोपसर्गैर्न बिभेति ध्यानाच्च न तैश्चाल्यत इत्यवधलिङ्गम् १ । देवमाययाऽत्यंतगहनेष्वपि भावेषु न संमुह्यतीत्यसंमोहलिङ्गम् २ । देहविविक्तं पश्यत्यात्मानं तथा सर्वानपि च संयोगानिति विवेकलिंगम् ३ । देहोपधिव्युत्सर्गं निःसंगः सन् सर्वथा करोतीति व्युत्सर्गलिंगम् ४ । इत्युक्तानि लिंगानि ।

अथ फलमुच्यते । तथाहि यान्येव शुभाश्रवसंवरनिर्जरादीनि निगदितानि धर्मध्यानस्य फलानि तान्येव सविशेषानि शुक्लध्यानस्यापि । अनुत्तरसुरसौख्यानि च शुक्लस्यादिमयोर्भेदयोः फल चरमयोस्तु निर्वाणम् ।

अथ सामान्येनैव फलमुच्यते । तथाहि संवरनिर्ज्झरे अपवर्गस्य मार्गस्तयोश्चाऽयत तप'प्रधान च तपोऽग ध्यान तस्मात्तत् मुक्तिनिदानम् । अयमेवार्थः' स्पष्टीक्रियते–दृष्टांतैर्यथा सिचयकालायसवसुमतीना मलकलंककर्दमा' क्रमतः शोध्यतेऽपनीयते शोष्यते च सलिलाऽनलसूर्यैस्तथा ध्यानांबुवह्निसूरै' कर्मणामपि शोध्यादयो विधीयते । यथा ध्यानतो वाक्काययोगयोस्तापशोषभेदा भवति तथा कर्मणोऽपि ध्यानतस्ते भवेयुः । यथा वा रोगाणां शमन वमनविरेचनौषधादिभिः प्रकारैर्भवेत्तथा कर्मामयशगनमपि ध्यानानशनादिभिः प्रकारैः स्यात् । यथा वा चिरसंचितमिंधननिवह हुतभुक्पवनसमन्वितो ध्रुव दहति तथाऽमितमपि कर्मेन्धनसमूह ध्यानवह्निर्दहति तत्क्षणादेव । यथा वा जलदपटल प्रचडप्रभजनप्रेरित क्षणादेव विलीयते तथा ध्यानपवमानावधूत कर्मघनजालमपि ।

अथैतस्य शुभध्यानद्वयस्यैहलौकिक फलमुच्यते । तथाहि धर्मशुक्लध्यानाधिरूढचित्तो न बाध्यते शीतातपक्षुत्पिपासादिभि॰ शारीरिकैरसातैर्नापि च पीड्यते कषायसमुद्भूतैरीर्ष्याविषादादिभिर्दु खनिग्रहै', अतः कारणाद्याद्ये ध्याने अपहायांतिमे ध्याने नित्यमेव ध्येये । नन्वेव निरतर ध्यानविधाने शेषक्रियालोपः प्राप्नोति, नैव क्रियाविधानस्यापि तत्त्वतो ध्यानत्वाद् । यतः सा नास्ति काचिदपि क्रिया या श्रीमदागमानुसारेण विधीयमाना मुनीना ध्यानतया न संभवेत् । इत्युक्त ध्यानस्वरूपम् ।

तथा यतिभिः कायिक्याद्याः पचक्रिया॰ परिहरणीया॰ । तत्र प्रथमा कायिकी । सा च त्रेधा मिथ्यादृष्टेरविरतसम्यग्-

हष्टेः प्रमत्तसंयतस्य । तत्राऽऽद्ययोरुभयोरविरतकायिकी प्रमत्तसंयतस्य तु दुष्प्रणिहितकायिकी । अधिक्रियते जंतुर्नरकादिषु येन तदधिकरणं तेन निर्वृत्ताऽऽधिकरणिकी । सा च द्विप्रभेदा पशुवधादिप्रवर्त्तिनी खड्गादिनिर्वर्त्तिनी च । प्रद्वेषेण निर्वृत्ता प्राद्वेषिकी । सापि जीवविषयाऽजीवविषया चेति द्विविधा । परितापनं ताडनादिदुःखं तेन निर्वृत्ता पारितापनिका । साऽपि द्विधा स्वपरविषयेति । प्राणातिपातेन निर्वृत्ता प्राणातिपातिका । साऽपि स्वर्गाद्यर्थं पर्वतपतनादिना स्वप्राणघातं क्रोधमानादिना च परप्राणघातं कुर्वतो भवतीति द्विप्रभेदा । एषा पंचविधाऽपि क्रिया भवसंततिनिदानभूता यतिभिर्वर्जनीया नियमतः ।

तथा कामाः शब्दादयः पंचविषयास्तद्विषये रागद्वेषौ परिहरणीयौ यतिसत्तमैः । यतो मनोरमाः पंचापि गोचराः संसारिणां प्राणिनां रागनिबंधनभूताः । अमनोज्ञास्तु ते तेषां द्वेषपोषहेतुभूताः । यस्तु जितरागद्वेषो महामुनिः स तयोरिंद्रियविषयमनुप्राप्तयोः सममना एव तिष्ठति समचेतास्तु वीतरागतामनुप्राप्तो न चाल्यते चारित्रतस्तत्कृतसुखदुःखाभ्याम्, यदुक्तं श्रीमदुत्तराध्ययने 'सोअस्स सद्दं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु । तं दोसहेउं अमणुन्नमाहु, समो अ जो तेसु अ वीअरागो ॥ १ ॥ चक्खुस्स रूवं गहणं० ॥ २ ॥ घाणस्स गंधं गहणं ॥ ३ ॥ जिब्भाए रसं गहणं० ॥ ४ ॥ कायस्स फासं गहणं० ॥ ५ ॥' तथैते कामाः शल्यभूता विषभूता सर्पभूताः सर्वानर्थखनिभूताश्च निगद्यंते । यदुक्तं तत्रैव सल्लं कामा विसं कामा० ॥ १ ॥ खणमित्तसुक्खा बहुकालदुक्खा० ॥ २ ॥ तथा कामाणुगिद्धिप्पभवं खु दुक्खं, सव्वस्स लोगस्स सदेवगस्स । जं काइअं माणसिअं च किंचि, तस्संतगं गच्छइ वीअरागो ॥ ३ ॥ अतः कारणात् मनःसमाधानमिच्छता यतिसत्तमेन मनोज्ञामनोज्ञविषये रागद्वेष-

ध्यानम् ।
कामाः ।
पञ्चविधाः ।

परिहरणमेव विधेयम् । यदुक्तं तत्रैव जे इंदिआण विसया मणुन्ना, न तेसु भावनिसिरे कयाइ । न यामणुन्ने सु मण पिकुज्जा, समाहिकामे समणे तवस्सी ॥ १ ॥

तथा मुनिमतल्लिकाभिः प्राणातिपातविरमणप्रभृतीनि पंचमहाव्रतानि सम्यक्परिपालनीयानि । तत्र प्रथम प्राणातिपात विरमणव्रत चतुर्विध द्रव्यतः क्षेत्रत' कालतो भावतश्च । तत्र द्रव्यत' षड्जीवनिकाया मनोवाक्कायैः स्वय नातिपातनीया नाप्यन्यैरतिपातयितव्या नापि परे तान् स्वयमतिपातयन्तोऽनुज्ञाप्याः श्रमणशिरोमणिभिः । क्षेत्रतस्तु सर्वस्मिन्नपि लोके । कालतस्तु यावज्जीवम् । भावतस्तु रागतो द्वेषतो वा तेषामनतिपातनम् । यतः सर्वेऽपि जन्तवो जीवितुमेव वांछति न कोऽपि मर्त्तु नैरयिक विना । यदुक्त श्रीदशवैकालिके 'सव्वे जीवा वि इच्छति जीविउ न मरिज्जिउ । तम्हा पाणिवह घोर, निग्गथा वज्जयति ण ॥ १ ॥' एव मृषावादविरमणव्रतमपि चतुर्विध द्रव्यादिप्रकारैस्सूत्रम् । द्रव्यतः सर्वद्रव्यपर्यायविषय मृषावाक्य न वक्तव्यम्, एव भाषणानुज्ञेऽपि तद्विषये वर्जनीये । क्षेत्रतस्तु लोकालोकविषयम् । कालतस्तु यावज्जीव दिवसे निशायां वा । भावतस्तु रागाद् वा द्वेषाद् वा मृषावादपरिहार' । तत्र क्रोधमानौ द्वेषान्तर्गतौ मायालोभौ तु रागान्तर्भूतौ । यदुक्त 'मायालोभो रागो, कोहो माणो अ वन्निओ दोसो । निज्जिणसु इमे दुन्नि वि, जइ इच्छसि त पय पर परम ॥ १ ॥' एव चतुर्विधमप्यलीक क्रोधादिभिरुपलक्षणाद् हास्यभयादिभिश्च त्रिविधत्रिविधेन वर्जयेद् यतिरनन्तशमार्थी । उक्त च मुसावाओ अ लोगम्मि, सव्वसाहूहिँ गरहिओ । अविस्सासो अ भूआण, मोस तम्हा विवज्जए ॥ १ ॥ एवमदत्तादानविरमणप्रभृतीन्यपि चतुर्विधानि विज्ञेयानि । तत्रादत्तादान द्रव्यतः सचित्ताचित्तमिश्रवस्तुविषयम् । तत्रा

प्यल्पमूल्यं बहुमूल्यं च । प्रमाणतोऽणु महद् वा त्रिविधत्रिविधेन वर्जयेत् श्रमणशिरोमणिः । क्षेत्रतस्तु ग्रामे नगरेऽरण्ये क्षेत्रे खले वा । कालतस्तु यावज्जीवं दिवा रात्रौ वा । भावतस्तु रागद्वेषादिभिरथवा स्वाम्यदत्तजीवादत्ततीर्थकरादत्तगुर्वदत्तभेदाच्चतुष्प्रकारम् । तत्र स्वाम्यदत्तं यत्कस्यापि सत्कमविश्राणितं तृणाद्यपि, जीवादत्तं तु तद् यद् परप्राणव्यपरोपणम्, तीर्थकरादत्तं तु तद् यत्तीर्थकरनिषिद्धासेवनम्, गुर्वदत्तं तु तद् यद् गुरुभिरननुज्ञातस्याशनादेर्वस्त्रपात्रादेर्वा ग्रहणम् । मैथुनविरमणं तु द्रव्यतो रूपेषु रूपसहगतेषु वा । तत्र रूपाणि निर्जीवप्रतिमारूपाणि, रूपसहगतानि तु सजीवपुरुषस्त्रीरूपाणि । अथवा भूषणविकलानि रूपाणि भूषणसहितानि तु रूपसहगतानि । क्षेत्रतस्तु मेरुवनचूलिकास्वर्लोकादिरूपे ऊर्ध्वलोके, अधोलौकिकग्रामव्यंतरनगरभवनपतिभवनरूपेऽधोलोके वा, द्वीपसमुद्रादिरूपे तिर्यग्लोके वा । कालतस्तु दिवसे निशायां वा । भावतस्तु रागतो द्वेषतो वा मैथुनेऽप्रवर्त्तनम् । एतच्च चतुर्विधमपि मैथुनं महाप्रमादरूपत्वादधर्ममूलत्वाच्च वर्जनीयमेव चैकांतैकांतेन । यतः सूत्रे सर्वत्राप्युत्सर्गापवादौ प्रोक्तौ न तु ग्राम्यधर्मे, यतः स रागद्वेषौ विना नैव संभवेज्जातुचिदपि । यदुक्तम् उत्सर्गापवादसेवधिभूते श्रीनिशीथभाष्ये ' कामं सव्वपदेसु, वि उस्सग्गववायधम्मता जुत्ता । मुत्तुं मेहुणभावं, न तं विणा रागदोसेहिं ॥ १ ॥ एतस्य च मैथुनस्य महाप्रमादरूपताऽधर्ममूलता च श्रीदशवैकालिकेऽप्युक्ता, तथाहि अबंभचरिअं घोरं, पमायदुरहिट्ठिअं । नायरंति मुणी लोए, भेयाययणवज्जिणो ॥ १ ॥ मूलमेअमहम्मस्स, महादोससमुस्सयं । तम्हा मेहुणसंसग्गिं, निग्गंथा वज्जयंति णं ॥ २ ॥ तथाऽतिदुष्करमपि कष्टं कुर्वन्नब्रह्मवान्नैव प्रशस्यते उक्तं च श्रीउपदेशमालायां जइ ठाणा जइ मोणी० ॥ १ ॥ पुष्पमालायामप्युक्तं धरउ वयं चरउ तवं, सहउ दुहं वसउ

वणनिकुंजेसु। बंभव्वयमधरतो, बभावि हु देइ महहास ॥ १ ॥ तथा ज किंचि दुह लोए, इह परलो उभय च अइदुस्सह। त सव्व चिअ जीवो, अणुभुजइ मेहुणासत्तो ॥ २ ॥ शील तु महाभरणभूत रूपभूत पांडित्यभूत निरुपमधर्मभूतम्। यदुक्त सील कुलआहरण, सील रूव च उत्तम होइ। सील चिअ पडिच्च सील चिअ निरुवम धम्म ॥ १ ॥ यस्मिंश्च ब्रह्मव्रते भग्ने सर्वोऽपि तपःशीलनियमप्रभृतिगुणसमूहो भग्नो भवेत्, यस्मिंश्चाराधिते सर्वेऽपि शीलयमनियमप्रभृतयो गुणाः समाराधिता भवति। उक्त च श्रीप्रश्नव्याकरणांगे जम्मि अ भग्गम्मि होइ, सहसा सव्वसभग्गमद्दिअमहिअचुण्णिअकुसलिअपल्लट्टपडिअखडिअपरिसडिअविणासिअविणयसीलतव निअमगुणसमूहजम्मिअआराहिअम्मि अराहिअ वयमिण सव्व सील तवो विणओ अ सजमो अ खत्ती मुत्ती गुत्ती तहेव इहलोइअपारलोइअजसो अकित्ती अ पवओ तम्हा निहुएण बंभचेर चरिअव्व सव्वओ विसुद्ध जावज्जीवाए जाव से अट्ठिसजउत्ति एव वय भणिअ भगवया त च इम पचमहव्वय-सुव्वयमूल समणमणाइलसाहुसुचिण्ण वेरविरमणपज्जवसाण सव्वसमुद्दमहोदहितित्थं ॥ २ ॥ देव नरिंदनमसिअपूअ, सव्वजगुत्तममगलमग्ग ॥ दुद्धरिस गुणनायगमेग मुक्खपहस्स वडिंसगभूअ ॥ ३ ॥ जेण सुद्धचरिएण भवइ सुबभणो तु समणो सुसाहू स इसीस मुणीस सजए स एव भिक्खू जो सुद्ध चरइ बंभचेर तस्मादप्रमत्ततया यतिभि पालनीयमेवेद तुरीय महाव्रतम्। परिग्रहविरमणव्रत तु द्रव्यतो व्योम-समय-प्रभृतिसर्वद्रव्यविषय यतः सर्वेष्वपि द्रव्येषु ममीकारकरणतः परिग्रहता भवेत्, यदाह पाक्षिकसूत्रचूर्णिकारः गाम-

घरंगणाइसु ममीकारकरणाओ आगासदव्वपरिग्गहो चंकमणपएसु ममीकार० धम्मदव्वपरिग्गहो ठाणनिसीअतुअट्टणपएसु ममी० अधम्मदव्वपरिग्गहो भज्जाइसु ममी० जीवदव्वपरिग्गहो हिरन्नसुवन्नाइसु ममी० पुग्गलदव्वपरिग्गहो सीउन्हवरिसाकालेसु मुच्छिअस्स कालदव्वपरिग्गहो दिनराज्यभिलाषात् क्षेत्रतस्तु सर्वलोकाकाशविषयं, कालतस्तु यावज्जीवविषयं, भावतस्तु रागद्वेषाभ्यां परिग्रहे विषयम्, एवं चतुर्विधमपि परिग्रहविरमणव्रतनिरतिचारतयाऽखंडितं विधेयं साधुपुंगवैः। यत्तु साधुसाध्वीनामोघोपधेरौपग्रहिकोपधेश्च ग्रहणं तन्न मूर्च्छापरित्यागेन संयमयात्रायै यदुक्तं श्रीप्रश्नव्याकरणांगे जंपि अ समणस्स सुविहिअस्सओ पडिग्गहधारिस्स भवइ भायणभंडोवहिउवगहणं पडिग्गहो पायबंधणं पायकेसरिआ पायठवणं च पडलाइं तिन्नि च रयत्ताणं च गुच्छओ तिन्नि अ पच्छायगा रउहरणा चोलपट्टग मुहणंतगमाइअं एअंपि अ संजमस्स उववूहणट्ठयाए वायायवदंसमसगसीअपरिक्खणट्ठयाए उवगरणं रागदोसरहिअं परिहरिअव्वं श्रीदशवैकालिकेऽप्युक्तं जंपि वत्थं च पायं वा० १ न सो परिग्गहो वुत्तो० २ सव्वत्थुवहिणावुद्धा० ३ ।

अथौघौपग्रहिकोपधिस्वरूपं किंचित्श्रीमदोघनिर्युक्त्यनुसारेण प्ररूप्यते। तथाहि–यस्तु नित्यमेव गृह्यते स ओघोपधिर्यस्तु कारणे स औपग्रहिकोपधिः। तत्र प्रथमं जिनकल्पिकानामोघोपधिस्वरूपं कथ्यते। तथाहि पात्रं पात्रबंधनं पात्रप्रतिलेखनं मुखपोतिका पटलकानि रजस्त्राणं गुच्छकश्चैतानि सप्तोपकरणानि पात्रपरिकरभूतानि, एक और्णिको द्वौ च कार्पासिकाविति कल्पत्रितयं रजोहरणं मुखपोतिका चेति द्वादशविध ओघोपधिः पात्रभाजां जिनकल्पिकानामुत्कर्षकतः। एतेषामेव च कल्पत्रयं

विना नवोपकरणानि, एकस्मिन् कल्पे दश, कल्पद्वये पुनरेकादश, कल्पत्रये तु द्वादश एव चत्वारो भेदा भवति । पतद्ग्रहधारिणामुपकरणविषये । ये तु जिनकल्पिका. पाणिपात्रास्तेषा जघन्यतो रजोहरणमुखपोतिके इत्युपकरणे द्वे, एककल्पधरणे तु तानि त्रीणि, कल्पद्वयधरणे तु चत्वारि, कल्पत्रयधरणे तु पच, एव चत्वारो भेदा भवन्त्युपकरणविषये पाणिभोजिनाम् । उभयमीलने त्वष्टभेदा भवेयुर्जिनकल्पिकानामुपकरणविधौ । एतान्येव द्वादश मात्रकचोलपट्टसहितानि चतुर्दशोपकरणानि भवति स्थविरकल्पिकानाम् । एतेषा मध्ये प्रमाणापेक्षयोत्कृष्टानि चत्वार्युपकरणानि कल्पत्रयपतद्ग्रहरूपाणि, पटलकरजस्त्राणपात्रबधनचोलपट्टरजोहरणमात्रकरूपाणि षण्मध्यमानि, गुच्छकपात्रप्रस्थापनमुखपोतिकाद्वयरूपाणि चत्वारि जघन्यानि । आर्यिकाणां त्वोघोपधौ पचविंशत्युपकरणानि । तेषु द्वादश प्रागुक्तानि, त्रयोदश तु मात्रक, चतुर्दशस्तु कमठकः, साध्व्यो हि तुच्छस्वभावतया कमठके भुजते, अन्यानि चैकादशोपकरणानि भवति साध्वीना तानि चेमानि श्रीओघनिर्युक्तिगाथाभिरवसेयानि, तथाहि–उग्गहणतग १ पट्टो २ अद्धोरुअ ३ चलणिआ य बोधव्वा ४ । अब्भिंतर ५ बाहिरिय सणिय ६ तह कचुगे चेव ७ ॥ १ ॥ उक्कच्छिय ८ वेकच्छी ९, सघाडी चेव १० खधकरणी ११ य । ओहोवहिम्मि एए, अज्जाण पन्नवीस तु ॥ २ ॥ नावानिभो उग्गहण–तगो उ सो गुज्झदेसरक्खट्ठा । सो उ पमाणे णेगो, घणमसिणो देहमासज्जा ॥ ३ ॥ पट्टो वि होइ एक्को, देहपमाणेण सो उ भइअव्वो । छायतोग्गहणत, कडियधो मल्लकच्छा वा ॥ ४ ॥ अद्धोरुगो उ ते दो वि, गिण्हिउ छायए कडिविभाग । जाणुपमाणा चलणी, असीविया लखियाइ व्व ॥ ५ ॥ अतो नियसणी पुण, लीणतरा जाव अद्धजघाओ ।

बाहिरखालुपमाणा, कडी य दोरेण पडिबद्धा ॥ ६ ॥ छाएइ अणुक्कमइ, उरोरुहे कंचुओ य असीव्विओ। एमेव य ओकच्छिय, सा नवरं दाहिणे पासे ॥ ७ ॥ वेकच्छिया उ पट्टो कंचुयमुक्कच्छियं व छाएइ। संघाडीओ चउरो तत्थ दुहत्था उवसयम्मि ॥ ८ ॥ दोण्णि तिहत्था यामा, भिक्खट्ठा एग एग उच्चारे। ओसरणा चउहत्था, णिसन्नपच्छायणिमसिणा ॥ ९ ॥ खंधकरणी य चउहत्थ-वित्थडा वायविहुयर-क्खट्ठा। खुज्जकरणी उ कीरइ, रूववईणं कुडहहेउं ॥ १० ॥ अथासां गाथानां विषमपदव्याख्या तथाहि—घन आर्त्त-बीजरक्षार्थं, मसृणः कर्कशस्पर्शत्यागार्थम् ३, पढश्चतुरंगुलपृथुः कटीमानेनायतः, पृथुरुव्या आयतः, कृशरुव्यास्तनुरित्यर्थः, अध ऊरुकार्द्धं भजत इत्यर्द्धोरुकः स च मल्लचलणाकृतिः परमूर्वोरंतरे ऊरुद्वयेव कसाबद्धः, लंखिका वंशोपरि नर्त्तकी तत्परिधानवत् ४–५, उपरि कटीभागाद् बहिर्निवसनी गुल्फौ यावदित्यधः षड्विधमुपकरणम् ६, अणु स्वल्पं कंचुकाभ्यंतरे ससंचारावुरोरुहैः छादयति कंचुकः सार्द्धत्रिहस्तपृथुः स्वदेहमाननिष्पन्नो वा पार्श्वद्वयेऽपि च कसाबद्धः, एवमेव कंचुकव-द्दक्षिणपार्श्वे कक्षासमीपाच्छादिकोपकक्षिका सार्द्धहस्तमिता चतुरस्रा च ७, च कक्षिका वामपार्श्वे संघाटिकाः प्रच्छादिकाः दैर्घ्येण सार्द्धत्रिहस्ता चतुर्हस्ता वा ८। अथार्थिकाणां प्रमाणापेक्षयोत्कृष्टजघन्यमध्यमोपधिस्वरूपं प्ररूप्यते। तथाहि—पात्रं चतस्रः संघाटिकाः स्कंधकरणी अंतर्निवसनी बहिर्निवसनी चेत्युत्कृष्टोपधिरष्टविधः। गुच्छरूपात्रप्रस्थापनमुखांशुकद्वयरूप-श्चतुर्विधो जघन्योपधिः। शेपस्तु त्रयोदशविधो मध्यमः।

अथोपकरणानां गणनाप्रमाणोपयोगादिस्वरूपं कीर्त्यते। तथाहि—एकं पात्रं जिनकल्पिकानां स्थविरकल्पिनां च द्वितीयं

मात्रकरूपपात्रम् एतद् गणनाप्रमाणम्। अथ प्रमाणमानमुच्यते। तथाहि–समचतुरस्र वृत्त पतद्ग्रहरूप पात्र दवरकेण तिर्यगूर्ध्वमधश्च मीयते स चेद् दवरको विहस्तित्रय चत्वारि चागुलानि भवति तदा तत्पात्र प्रमाणतो मध्यममत उक्तप्रमाणाद्धीन जघन्यमतिरिक्त तूत्कृष्टम्। अथवा कालोदरप्रमाणसिद्धमिदमन्यत् प्रमाणमुपदिष्टश्रीमदार्हतसमये, तथाहि ज्येष्ठाषाढमासयोर्गव्यूत द्वयादागतो यति कांजिकादिद्रव्योपेतभक्तेन चतुरगुलन्यूनतया भृत पात्रमेकस्थानोपविष्टो यद् भुक्ते तत् मध्यमप्रमाणम्, अत उक्तप्रमाणान् महत्तर पुनरन्यमुनिभ्यः सविभागविधानहेतवे भवति नदीभाजन तु महत्प्रमाण गुरुसमर्पितमात्मीय वा धारयति यतिर्वैयावृत्त्य विधित्सया। तस्य च कातारदुर्गेक्षपत्तनरोधादिषूपयोगो न तु सर्वकाल शेषसाधूनां तु जठरपिठरप्रमाणोपेतमेव पात्रम्। तथा पात्र लक्षणोपेतमेव धार्यं, यतः सलक्षणे गुणा निर्लक्षणे तु दोषाः। लक्षण चेद वर्तुल सर्वतः समचतुरस्र सुप्रतिष्ठान चिरस्थायि स्निग्धवर्णोपेत सलक्षणम्। क्वचिदुन्नततया क्वचिन्निम्नतया च हुडमकालशुष्क सकुचित वलिभृतमधोराजियुक्ततया सच्छिद्रतया वा भिन्नमलक्षणम्। अथ सलक्षणस्य गुणा उच्यते। तथाहि–वृत्ते समचतुरस्रे पात्रे लाभो भवति। सुप्रतिष्ठिते प्रतिष्ठा भवेत्। निर्व्रणे कीर्त्तिरारोग्य च स्निग्धवर्णोपेते तु ज्ञानसपत्। अथालक्षणस्य दोषा उच्यते। तथाहि–हुडे पात्रे चारित्रस्य विनाशः। शबले तु चित्तविप्लुतिः। कीलवद्दीर्घसस्थाने तु गणे चरणे वा नावस्थानम्। नाभौ तु पद्माकारेऽकुशलम्। सव्रणमतर्बहिश्च दग्धे दीर्घनिद्रा। अथ पात्रमुखलक्षणमुच्यते। तथाहि–पात्रमुख वृत्त चतुरस्र विस्तीर्णं च विधीयते यथा मध्ये प्रविशन् कर्णे हस्तो न लगति गृही च सुखेन ददाति। अयमेव चाऽर्थ. समर्थ्यते श्रीमदोघनिर्युक्तिगाथाभिस्तथाहि–वट्ट समचउरस, होइ थिर थावर च वण्ण च। हुड वायाइद्ध, भिन्न च अधारणिज्जाइ॥ १॥

संठियम्मि भवे लाभो, पतिट्ठा सुपतिट्ठिते । निव्वणे कित्तिमारोग्गं, वन्नड्ढे नाणसंपया ॥२॥ हुंडे चरित्तभेदो, सबलम्मि अ चित्तविब्भमं जाणे । दुप्पते खीलसंठाणे, गणे च चरणे च नो ठाणं ॥ ३ ॥ पउमुप्पले अकुसलं, सव्वणे वणमादिसे । अंतो बहिं च दड्ढंमि, मरणं तत्थ निद्दिसे ॥४॥ अकरडंगम्मि भाणे, हत्थो उड्ढं जहा न घट्टेइ । एयं जहन्नयमुहं, वत्थुं पप्पा विसालं तु ॥५॥ अथ पात्र–ग्रहण–कारणान्युच्यंते । तथाहि–पात्रं विना षट्काय-वधो भवतीति पात्रग्रहणम् । तथा गुरुग्लानबालवृद्धाऽसहादीनां पात्रे आहारे गृहीतेऽनुकंपा कर्तुं शक्यते । इति पात्रादानम् । पात्रबंधनमानं तु पात्रप्रमाणेन विधेयं यथा ग्रंथौ दत्ते कोणौ चतुरंगुलौ भवतः। पात्रप्रस्थापनगुच्छकपात्रप्रतिलेखनिकामानं तु चतुरंगुलाधिकावितस्तिः रजःप्रभृतिरक्षणार्थं पात्रस्थापनं भाजनवस्त्रप्रमार्जनार्थं च गुच्छक इमे द्वे उपकरणे ऊर्णामये, पात्र-प्रतिलेखनिका तु पात्रप्रमार्जनार्थस्य च । पात्रे पात्रे एकैका यैस्त्रिभिरेकीकृतैरंतरितसारणिर्नेक्ष्यते तादृशानि कदलीगर्भोपमानि श्लक्षानि पटलकानि विधेयानि सार्द्धद्विहस्तायतानि षट्त्रिंशदंगुलपृथूनि तानि चेद् दृढतया मसृणतया चोत्कृष्टानि भवंति, तदा ग्रीष्मे त्रीणि हेमंते चत्वारि वर्षासु च पंच, चेन्मध्यमानि तदा ग्रीष्मे चत्वारि हेमंते पंच वर्षासु षट्, चेज्जघन्यानि तदा ग्रीष्मे पंच हेमंते षड् वर्षासु सप्त । अस्थापिते पात्रे पुष्पं पतति तथा फलं जलबिंदुर्धूलिः सचित्तरजः पक्षिपुरीषम्, अतः कारणात् पटलकैः पात्राणि छाद्यंते । तथा लिंगसंवरणं च कृतं स्यादेभिरतः पटलकग्रहणं रजस्त्राणप्रमाणं तु पात्रप्रमाणेन प्रदक्षिणां कुर्वाणं सत्तिर्यग्नीयते तन्मध्ये च पृथुत्वेन यावता चत्वार्यंगुलानि क्रामति तावत् प्रमाणं क्रियते । एतच्च पात्रे पात्रे एकैकं क्रियते मूषकरजउत्केरावश्यायरजोरक्षणार्थं द्वौ कार्पासिकावेकस्त्वौर्णिक इति कल्पत्रयं विधेयं सार्द्धद्विहस्तविस्तारं दीर्घतया

चात्मप्रमाण तृणग्रहणवन्हिसेवनशीतनिवारणार्थं धर्मशुक्लध्यानरक्षार्थं ग्लानसमाधिकृते मृतस्थगनकृते च कल्पग्रहणम्। रजोहरण तु दडपर्यंते निविड दशिकापार्श्वे तु मृदुकवलीखडकवदशिकत्वादेकांगिकमशुषिरमगुष्टपर्वलग्नप्रदेशिन्यायच्छिद्र स्यात्तद् यथा धाह्यनिषद्याद्वयरहितेन सदडकेन तेनापूर्यंते तावन्मितबाहल्य बहिर्दवरकेण वारत्रयवेष्टित हस्तप्रमाणदडमष्टा-गुलदशिकायुतमन्यतरस्य हीनाधिकतायामपि द्वात्रिंशदगुलदीर्घ विधेयमेकामेव गणनया। अथ प्रयोजन स्थाननिषीदन शयनसदशकादिप्रमार्जनकृते लिंगकृते च रजोहरणधरणम्। वदनवसनप्रमाण तु चतुरगुलसमधिकावितस्तिर्यथा वा वसतिप्रमार्जनादौ वदन प्रछाद्य कृकाटिकापृष्टौ ग्रथिर्दातु शक्यते तावत्प्रमाण विधेयम्। एतत् प्रयोजन तु सपातिमादि-प्राणिरक्षा सचित्तरजःप्रमार्जन वसतिप्रमार्जने रजःप्रवेशनिषेधार्थं नासामुखबधन च मात्रकप्रमाण तु 'दो असई उ पसई, दोहिं पसईहिं सेइआ होइ। चउ सेइउ अ कुडओ, चउकुडओ पत्थओ होइ ॥ १ ॥' एतद्गाथोक्त प्रमाणमागधकप्रस्थात् किंचिदतिरिक्तता, अनेन च वर्षाऋतुबद्धकालयोर्गुरुप्रायोग्य द्रव्य गृह्यते। अथ मात्रकस्य द्वितीय प्रमाण यद् गव्यूतद्वयादागतो यति' सूपौदनपरिपूर्ण्य मात्रकमेकत्रोपविष्टो भुक्ते तद् विज्ञेयम्। लघुनि च मात्रके इमे दोषा यदाच्छादनमुत्क्षिप्यते तदा शुषिरेण त्रसप्राणा रजश्च प्रविशति। तथा तक्रादीना परिगलने च पृथिव्यादीना वध'। अनेनाल्पतयैतावद् गृहीतमिति जने निंदा च स्यात्। यत्र च क्षेत्रेऽध्रुवलभस्तत्र मात्रके सोंऽपि सघाटका गुरुयोग्य गृह्णति। ध्रुवलभे तु मात्रके गुरुप्रायोग्यमेक एव सघाटको गृह्णाति, शेषसघाटकास्तु पतद्ग्रहे भक्त मात्रके तु पान गृह्णति समक्तादिदोषशकित वा भक्तम्। चोलपट्टस्तु यूना स्थूलो हस्तचतुष्कप्रमाणः स्थविराणा तु श्लक्ष्णो द्विहस्तमानश्च कस्यापि

मेहनं विकृतं स्यात् कस्यापि वातेनोच्छूनं वा कोऽपि लज्जावान् वा भवेत्, कस्यापि स्वभावेन वा तद्बृहद्भवेदिति तेषामनुग्रहार्थं चोलपट्टः, तथा वनितादर्शनेन मुनिर्वेदोदयः स्यात्तस्या वा तद् दृष्ट्वेति तदनुग्रहार्थं च । इत्युक्त ओघोपधिः ।

अथौपग्रहिकोपधिरुच्यते सार्थभाष्यगाथाभिस्तथाहि 'पीढगणिसिज्जं दंडग–पमज्जणी घट्टपडगलमादी । पिप्पलगसूइणहरणि सोधणगदुगं जहन्नो अ ॥ १ ॥ वासत्ताणे पणगं, चिलिमिणिपणगं दुगं च संथारे । दंडादीपणगं पुण, मत्तगेतिग पादलेहणिआ ॥ २ ॥ चम्मतिगं पट्टदुगं, णातव्वो मज्झिमो उवधि एसो । अज्जाणवारए पुण, मज्झिमए होति अतिरित्तो ॥ ३ ॥ अक्खा संथारो या, एगमणेगंगिओ अ उक्कोसो । पोत्थगपणगं फलगं, बितिअपदे होति उक्कोसो ॥ ४ ॥ निषिद्याद्वयं तु क्षौमिकौर्णिकरूपं, रजोहरणोपरिस्थितं दंडकप्रमार्जनीशब्देन दंडासनकमुच्यते, संस्तारकद्विकं तु संस्तारोत्तरपदरूपं, मात्रकत्रिकं तु प्रश्रवणोच्चारखेलमात्रकरूपम्, एतानि पुनर्वक्ष्यमाणानि गुरोरेव न शेषस्य साधूनां तथाहि–चर्मनखभेदिन्यादिस्थानरूपश्चर्मकोशश्चर्मच्छेदनं पिप्पलगपर्यायं पट्टो योगपट्टरूपो जवनिका च यथान्यदपि तपःसंयमसाधकमोघोपधेरतिरिक्तमुपकरणतदौपग्रहिकम् । उक्तं च श्रीओघनिर्युक्तौ जं चण्ण एवमादी, तवसंजमसाहगं जइजणस्स । ओहाइरेगगहिअं, ओवग्गहिअं वियाणाहि ॥ १ ॥ जं जुज्जइ उवकरणे, उवगरणं तं सि होइ उवगरणं । अतिरेगं अहिगरणं अजतो अजयं परिहरंतो ॥ १ ॥ यतोऽयत्नवतोऽयतनया प्रतिसेवमानस्य । दंडकस्तु दुष्टपशुश्वानश्वापदादिरक्षार्थं कर्दमोदकविषमभूमिगमने चोपयुज्यते । उक्तं च श्रीद्रव्यनिर्युक्तौ दुट्ठपसुसाणसावय–विज्जलविसमेसु उदयगब्भेसु । लट्ठी सरीररक्खा, तवसंजमसाहणा

भणिआ ॥ १ ॥ दडकस्तु नवपर्वाणि यावद् विषमपर्ववानेव सलक्षणो न तु समपर्वा दशपर्वणि तु तस्मिन् सर्वसंपदः लक्षणानेव च स ग्राह्यो न त्वन्यः । उक्तं च तस्यामेव चक्राकीडक्लइआ चित्तलयापुल्लडायदव्वपलटीओ । उज्झमुक्खायज्जेअव्वा पयत्तेण ॥ १ ॥ विसमेसु अ पव्वेसु अनिष्पन्नासु अच्छिसु । फुडिआ परुसवन्ना य, निस्सारा य निंदिआ ॥ २ ॥ तणुई पव्वमज्झेसु, थूरापोरेसु गठिला । अथिरा असारजरटा, साणघाया य निंदिआ ॥ ३ ॥ घणवद्धमाणपव्वा, निद्धवन्नेण एगवन्ना य । घणमसिणवट्टपोरा, लट्ठि पसत्था जइजणस्स ॥ ४ ॥ अनिष्पन्नेष्वक्षिषु बीजप्रदेशस्थानेषु अथ० श्वपादसदृशा घनानि मसृणानि वृत्तानि वर्तुलानि पर्वाणि यस्याः सा इत्युक्तप्रसंगागतमोघौपग्रहिकोपकरणस्वरूपम् । एवममूर्छिततया यदौघोपग्रहोपधिधारणं तत्र परिग्रहस्तद्व्यतिरिक्तस्तु वर्जनीयः परिग्रह० परिग्रहविरमणव्रताराधकैर्मोक्षसाधकैर्मुमुक्षुभिः ।

तथा प्रागुक्तस्वरूपाः पंचसमितयः सम्यक्परिपालनीयाः यतः समितिगुप्तिपरिरक्षणेनैव चरणाराधनं चरणाराधने नैव चानंतसुखनिधानं महानंदपदप्राप्तिस्ततश्चरिताराधनमिच्छता यतिपुंगवेन समितयः सम्यगाराधनीयाः ।

तथा षड्जीवनिकाया यतिभिर्यत्नेन परिपालनीया यतः षट्कायपरिपालनेनैव श्रमणधर्मो यदुक्तं छज्जीवनिकायसंरक्खणयाए० छज्जीवनिकायदया० तस्मात् संयमसमाराधनमिच्छता मुनिपुंगवेन सर्वप्रयत्नेन परिपालनीया एव ऋतु(६)-विधजीवनिकायाः । तथा मुनिमतल्लिकाभिर्लेश्याषट्कमध्यादाद्याः कृष्णनीलकापोताख्या दुर्गतिगतिनिमित्तभूतास्तिस्रो लेश्याः परिहरणीयाः, अंतिमास्तु तिस्रस्तेजःपद्मशुक्लाभिधानाः सुगतिनिबंधनभूताः स्वीकर्तव्या लेश्या अलेश्यतामिच्छुभिः । अत्र

लेश्याषट्के पुरुषषट्कोदाहरणं, तथाहि-एको महान् जंबूनामा द्रुमः सुपक्कफलपटलावनतशाखाग्रो वीक्षांचक्रे षड्भिः पुरुषैः । तं च वीक्ष्य तत्मध्यादेकेनोक्तं मूलादेनमुन्मूल्य जंबूफलभक्षणं कुर्मः । द्वितीयेनोक्तं शाखां छित्त्वा, तृतीयेनोक्तं प्रशाखां छित्त्वा, तुरीयेन गुच्छम्, पंचमेन फलानि छित्वा, षष्ठेन निगदितं कोऽर्थः फलच्छेदेनापि पतितान्येव तान्यद्मः । एतेषु प्रथमः कृष्णलेश्यायां, द्वितीयस्तु नीलायामेवं तावद्वाच्यं यावत् षष्ठः शुक्लायाम् । तथान्ये केचन नराः षड् ग्रामघातार्थं निर्गतास्तन्मध्यादेकेन कथितं न कोऽपि शिशुरपि नरो नारी वा पशुर्वाऽस्माभिर्मोक्तव्यः सर्वोऽपि प्राणिगणो हंतव्यः । द्वितीयेनोक्तं मनुष्या एव हन्यंते न पशवो यतस्तैः किं हतैः ?। एवं तृतीयेनोक्तं नरा एव हन्यंते न तु नार्यः । तुरीयेनोक्तं सायुधी एव । पंचमेन तु युध्यमाना एव । षष्ठेन तु निगदितमेकं तावद्धनं परिगृह्यतेऽपरं च मारणमेतदसंगतमेव केवलं धनापहारमेव कुर्मो, न तु कस्यापि विश्रंसनम् । एतेषु प्रथमः कृष्णायां यावच्चरमः शुक्लायाम् । एतदर्थसंग्राहिका चेयं गाथा मूलं साहपसाहा गुच्छफलेछिंदपडिअभक्खणया । सव्वं माणुसपुरिसा साउहजुज्झंतधणहरणा ॥ १ ॥ एतासु कृष्णा कृष्णवर्णा, नीला नीलवर्णा, कापोता कपोतवर्णा, तेजोलेश्या तु रक्ता, पद्मा तु पीता, शुक्ला तु शुक्ला । गंधरसस्पर्शा अपि अप्रशस्तानामप्रशस्ताः प्रशस्तानां तु प्रशस्ताः । परिणामस्तु तासामुत्कृष्टमध्यमजघन्यादिभेदेन त्रिविधो नवविधः सप्तविंशतिविध एकाशीतिविधस्त्रिचत्वारिंशदधिकं द्विशतविधो वा विज्ञेयः । लक्षणानि तु कृष्णायाः पंचाश्रवप्रवृत्तिमनोवचनतन्वगुप्तिषड्जीवनिकायाविरतितीव्रारंभपरिणामादीन्यवसेयानि । यदुक्तं लेश्याध्ययने पंचासवप्पवत्तो तिहि-अगुत्तो छसु अविरओ अ । तिव्वारंभपरिणओ खुद्दो साहस्सिओ नरो ॥ १ ॥ निद्धंधसपरिणामो, निस्संसो अजिइंदिओ ।

एअजोअसमाउत्तो किण्हलेस तु परिणमे ॥ २ ॥ नीललेश्यायास्त्वीर्ष्यामर्षादीनि लक्षणानि, उक्त च तत्रैव ईसा अमरिस अतवो अविज्जमाया अहीरिआ। गिद्धिपओसे अ सढे, पमत्ते रसलोलुए ॥ १ ॥ सायगवेसए य आरभ अविरओ खुद्दो० एअ० नीललेस० ॥ २ ॥ कपोतलेश्यालक्षणानि तु वक्रता वक्रसमाचारादीनि उक्त च वक्के वकसमायारे निअडिल्ले अणुज्जुए। पलिउचगओवहिए मिच्छद्दिट्ठी अणारिए ॥ १ ॥ उप्फासगदुहवाई अ तेणे यावि अ मच्छरी एअ जोग० काऊलेस० ॥ २ ॥ प्रति–अचकः स्वदोषप्रच्छादकः उपधिश्छद्म तेन चरतीत्यौ पधिक', उत्प्रासक च यथा पर उत्प्रास्यते दुष्ट च रागादिदोषवद् यथास्यादने वदनशील उत्प्रायः। तेजोलेश्यालक्षणानि तु नीचैर्वृत्त्यचपलताऽमायितादीनि उक्त च निआवित्ती अचवले अमाई अ कुतूहले। विणीअविणए दते, जोगव उवहाणव ॥ १ ॥ पिअधम्मेऽदढधम्मे वज्जभीरु हिएसए। एअजोग० तेउलेस० ॥ २ ॥ पद्मलेश्यालक्षणानि तु प्रतनुक्रोधमानमायालोभतादीनि यदुक्त पयणुकोहमाणे अ मायालोभे अ पयणुए। पसतचित्ते दतप्पा जोगव उव हाणय ॥ १ ॥ तहा पयणुवाई अ उवसते जिइदिए। एअजोग० पम्हलेस तु० ॥ २ ॥ शुक्लेश्यालक्षणानि त्वार्त रौद्रपरिहारेण धर्मशुक्लध्यानादीनि ज्ञेयानि उक्त च अट्टरुद्दाणि वज्जित्ता धम्मसुक्काइ झायए। पसतचित्ते दतप्पा समिए गुत्ते अ गुत्तिसु ॥ १ ॥ सरागे वीयरागे वा उवसते जिइदिए। एअ० सुक्कलेस० ॥ २ ॥ प्रकर्षापकर्ष-कृतानि स्थानानि तु लेश्यानामसख्येयलोकाकाशप्रदेशप्रमाणानि। तत्राशुभाना सक्लिष्टानि शुभानां तु विशुद्धानि। सर्वास्वपि लेश्यासु प्रथमसमयपरिणतासु परलोकेन कस्यापि स्यादुपपातो नापि च चरमसमयपरिणतासु अतर्मुहूर्त्ते गतेऽतर्मुहूर्त्ते च शेषे

भवेदुपपातः परभवे । एवं लेश्यास्वरूपमवगत्याप्रशस्तलेश्यापरिहारपुरस्सरं प्रशस्तलेश्या अधितिष्ठेद् यतिः पंचमगतिमिच्छुः ।

तथेहलोकभयपरलोकभयादिभयं सप्तकं परिहरणीयं श्रमणेन धीरतामाश्रित्य । तत्रेहलोकभयं सजातीयमनुष्यादेः सकाशात् १ । परलोकभयं तु मनुष्यस्य विजातीयतिर्यगादेः सकाशात् २ । आदानं धनं तदर्थं चौरादिभ्यो भयमादानभयम् ३ । अकस्माद् बाह्यनिमित्तनिरपेक्षं रजन्यादौ भयमकस्माद्भयम् ४ । आजीविकाभयं तु निर्द्धनस्य दुर्भिक्षादौ ५ । मरणभयं तु प्रतीतमेव ६ । सप्तमं त्वयशोभयम् ७ । एतानि सप्तापि भयानि सत्त्वमवलंब्य निराकरणीयानि । यतः क्रियासिद्धिः सत्त्ववत एव न त्वितरस्य । तथा धैर्यवतस्तु स्थैर्यं न केनापि निराकर्तुं शक्यते । यदुक्तं कदर्थितस्यापि हि धैर्यवृत्ते-र्न शक्यते शुद्धगुणः प्रमार्ष्टुम् । अधोमुखस्यापि कृतस्य वह्ने-र्नाधः शिखा याति कथंचिदेव ॥ १ ॥ तस्माद् भयजयमिच्छता धीरताश्रयणीया ।

तथा मुमुक्षुकांक्षिणा संसृष्टाऽसंसृष्टाद्याः सप्तपिंडैषणाः सप्त च पानैषणाः सम्यगेषणीयाः । तत्स्वरूपं च श्रीप्रवचनसारोद्धारगाथाभिरेवं लिख्यते, तथाहिः-संसट्ठ १ मसंसट्ठा २ उद्धड ३ तह अप्पलेविआ ४ चेव । उग्गहिआ ५ पगाहिआ ६ उज्झिअधम्मा ७ च सत्तमिआ ॥ २ ॥ तम्मा संसट्ठाहत्थमत्तएहिं इमा पढमभिक्खा १ । तव्विवरीआ बीआ भिक्खा २ । गिण्हंतयस्स भवे २ निअजोएण भोअणजायउद्धरिअमुद्धमाभिक्खा ३ । सा अप्पलेविआ जातिल्लेवा वल्लचणगाई ४ ॥ ३ ॥ भोअणकाले निहिआ सरावपमुहेसु होइ उग्गाहिआ ५ । पगाहिआ जं दाऊं भुत्तुं व करेण असणाई ६ ॥ ४ ॥ भोअणजायजंछड्डणारिहं नेहयंति दुपयाई अद्धवत्तं



मयसप्तकं,
पिण्डपानै-
षणासप्तकं,
मदाष्टकम् ।

व सा उन्भिअधम्मा भवे भिक्खु ५ पाणेसणावि एव नवरि चउत्थीइ होइ नाणत्त सोवीरायामाईजमले-
वाडति सम उत्ता ६ ।

तथा मुनिगणैर्जाति १ कुल २ रूप ३ बल ४ श्रुत ५ तपो ६ लाभै ७ श्वर्यमद ८ रूपाण्यष्टौ मदस्थानानि सत्यपि जात्याद्युत्तमत्वे वर्जनीयानि । यदुक्त श्रीदशवैकालिके 'न बाहिर परिभवे अत्ताण न समुक्कसे । सुअलाभे न मज्जिज्जा, जच्चा तवस्सि बुद्धिए ॥ तथा न जाइमत्ते न य रूवमत्ते न लाभमत्ते न सुएण मत्ते मयाणि सव्वाणि विवज्जयतो धम्मज्झाणरए अ जे स भिक्खू ॥ २ ॥'

तथा साधुसिंहैः पापहेतुभूतानि नवनिदानानि त्याज्यानि । तत्स्वरूप च प्राक् प्रतिपादितम् । तथा निर्ग्रंथैः पृथिव्य १ऽप् २ तेजो ३ वात ४ वनस्पति ५ द्वि ६ त्रि ७ चतु ८ ष्पचेन्द्रियरूप ९ नवविधजीवरक्षण सम्यग्विधेयम् । यतो जीववहो अप्पवहो जीवदया अप्पणो दया चेव । ता सव्वजीवहिंसा, परिचत्ता अत्तकामेहिं ॥

तथा निर्ग्रंथैर्नवब्रह्मगुप्तयः सम्यक्पालनीयास्ताश्चेमाः—स्त्रीपशुपंडकसंसक्ता वसतिर्न सेवनीया। तथा वनिताभिः केवलाभिः सम कथा न विधेया तथा प्रागुक्तस्वरूपा जाति १ कुल २ रूप ३ नेपथ्य ४ भेदेन चतुष्प्रकाराऽपि स्त्रीकथा न कर्त्तव्या २ । तथा योषिन्निषद्या न सेवनीया, उत्थितायामपि तस्यां तत्र नोपवेष्टव्यम् ३ । तथा वनितानां नयनवदनादीन्यंगोपांगानि नालोकनीयानि ४ । तथा कुड्यांतरितसुरतसमयसमविकूजितादिध्वनिर्नाकर्णनीयः ५ । तथा पूर्वभुक्तभोगा न स्मरणीयाः ६ । तथा प्रणीताहाराभ्यवहाराः परिहार्य्याः ७ । तथा रूक्षस्याप्यतिमात्रस्याहारस्य ग्रहण न विधेयम् ८ । तथा वपुःपात्रवस्त्र-

विषया विभूषा न करणीया ९ । अत्र च श्रीमदुत्तराध्ययनगाथास्तथाहि जं वि चित्तमणाइन्नं रहिअं थीजणेण य । बंभचेरस्स रक्खट्ठा, आलयं तु निसेवए ॥ १ ॥ मणपल्हायजणणी, कामरागविवड्ढणी । बंभचेररओ भिक्खू, थीकहं तु विवज्जए ॥ २ ॥ समं च संथवं थीहि, सकहं च अभिक्खणं । बंभचेररओ भिक्खू, निच्चसो परिवज्जए ॥ ३ ॥ अंगुव्वंगसंठाणं, चारुल्लविअपेहिअं । बंभचेररओ भिक्खू चक्खुगिज्झं विवज्जए ॥ ४ ॥ कूइअं रुइअं गीअं, हसिअं थणिअं कंदिअं । बंभचेररओ भिक्खू, सोअगिज्झं विवज्जए ॥ ५ ॥ हासं किड्डं रइं दप्पं, सहसा वित्तासियाणि अ । बंभचेररओ थीणं, नाणुचिंते कयाइवि ॥ ६ ॥ पणीयं भत्तपाणं तु, खिप्पं मयविवड्ढणं । बंभचेररओ भिक्खू, निच्चसो परिवज्जए ॥ ७ ॥ धम्मलद्धं मिअं काले, जत्तत्थं पाणिहाणवं । नाइमत्तं तु भुंजिज्झा, बंभचेररओ सया ॥ ८ ॥ विभूसं परिवज्जिज्जा, सरीरपरिमंडणं । बंभचेररओ भिक्खू, सिंगारत्थं न धारए ॥ ९ ॥



तथा श्रमणशिरोमणिना क्षांत्यादिदशविधसाधुधर्माराधने सावधानेन भाव्यम् । तत्र क्षांतिः क्रोधजयः १ । मार्दवं मानपरिहारः २ । आर्जवं मायाजयः ३ । मुक्तिश्च लोभाऽभिभवः ४ । तपश्च पुरोवक्ष्यमाणद्वादशभेदम् ५ । संयमश्चाऽविरतित्यागः ६ । सत्यं तु वचनसत्यकरणसत्यादिकम् ७ । शौचसंयमं प्रतिनिरुपलिपता ८ । आकिंचन्यमकिंचनता ९ । ब्रह्मचर्यं शीलपालनं १० । अत्र सूत्रगाथा खंती अ मद्दवज्जवमुत्तीतवसंजमे अ योधव्वे । सच्चं सोअं आकिंचणं च, बंभं च जइधम्मे ॥ १ ॥ अन्ये त्वाचार्या एवं पठंति खंतीमुत्तीअज्जवमद्दव तह लाघवे । तवे चेव संजमचिआगकिंचण-

बोधव्वे बंभचेरे अ ॥ १ ॥ अत्र लाघवमप्रतिबद्धता त्यागस्तु साधूनामशनवसनादिवितरणरूप । अयमेव दशविधो धर्मो मुक्तिनिदानमयमेव च धर्मो मोक्षार्थिभिः सम्यगुपासनीयः । उक्तं च योगशास्त्रे स्वाख्यातः खलु धर्मोऽयं, भगवद्भिर्जिनोत्तमैः । यं समालम्बमानो हि, न मज्जेद् भवसागरे ॥ १ ॥ संयमः सूनृतं शौचमित्यादिकाः श्लोका अत्र वाच्याः, आरण्यकेऽप्ययमेव दशविधो धर्मो मुक्तिशर्मनिबंधनतया निगदितस्तथाहि सत्यं तपश्च संतोषः, क्षमा चारित्रमार्जवम् । श्रद्धा धृतिरहिंसा च, संवरश्च तथा परः ॥ १ ॥ ब्रह्माण्डपुराणेऽप्युक्तं इक्ष्वाकुकुलवंशोद्भवेन नाभिसुतेन मरुदेवानंदनेन महादेवेन ऋषभेण दशप्रकारो धर्मः स्वयमेवाचीर्णः, केवलज्ञानलंभाच्च ये परमेष्ठिनो वीतरागाः स्नातका नैर्ग्रंथा नैष्ठिकास्तेषां प्रवर्तितः स्वाख्यातः प्रणीतस्त्रेतायामादावित्यादि ।

तथा यतिभिरेकादशोपासकप्रतिमाः सम्यक् श्रद्धेयाः प्ररूपणीयाश्च । तत्र प्रथमप्रतिमायां मासं यावदुपशमादिपंचगुणगरिष्ठं शंकादिपंचदूषणकुग्रहादिरहितं सम्यग्दर्शनं पालनीयम् । अयं भावः कुग्रहशंकादिशल्यविकलस्य व्रतादिगुणरहितस्यापि सम्यग्दर्शनस्य मासं यावद् वा प्रतिपत्तिः सा प्रथमा सम्यग्दर्शनप्रतिमा । प्रतिमाप्रतिपत्तेः पूर्वमपि सम्यक्त्वमभूत् परमिह शंकादिपंचातिचारराजाभियोगाद्याकारषट्करहितत्वेन यथोक्तसमस्तदर्शनाचारविशेषप्रतिपालनाभ्युपगमेन च प्रतिमात्वं समाख्यते । अत्र गाथा पसमाइगुणविसिट्ठं, कुग्गहसंकाइसल्लपरिहीणं । सम्मद्दंसणमणहं, दंसणपडिमा हवइ पढमा ॥ १ ॥ द्वितीयायां यथोक्तसम्यक्त्वसहितानि द्वादशव्रतानि निरतिचाराणि पालनीयानि मासद्वयं यावत् । प्रतिमाप्रतिपत्तिपूर्वमपि व्रतपालनमासीत्, परं तेषां व्रतभंगीकृतौ निरतिचारतया पालनं विधेयम् २ । तृतीयायां निरतिचार

दर्शनं व्रतपरिपालनपुरस्सरं प्रतिदिनमुभयसंध्यसामायिकं विधेयम् । सामायिकं प्रागपि क्रियमाणमभूत्, परमत्र निरतिचारत या तत् कार्यम् ३ । तुरीयायां चतुर्दश्यष्टम्यमावास्यापूर्णिमासु प्रतिपूर्णः पौषधः पालनीयः प्राक् प्रतिमात्रयोक्ताऽनुष्ठानपरेणाहो-रात्रं निरतिचारतया । अत्र गाथा वीआणुव्वयधारी, सामइअकडो अ होइ तइआए । होइ चउत्थी चउत्थी-चउदसिअट्ठमिमाईसुदिअहेसु ॥ ४ ॥ पञ्चम्यां प्रतिमायां तु चतुष्पर्व्यां चतुष्पथादौ निशि तनूत्सर्गे तिष्ठति । यदुक्तं सम्ममणुव्वयगुणव्वयसिक्खावयवं थिरो अ नाणी अ । अट्ठमिचउदसीसुं, पडिमं ठाएगराईअं ॥ १ ॥ स्थिरोऽविचलसत्त्वो यतोऽस्यां प्रतिमायां रजन्यां चतुष्पथादौ कायोत्सर्गः क्रियते तत्र चोपसर्गाः संभवंति । ज्ञानी प्रतिमा-स्वरूपवेत्ता । अष्टमीचतुर्दश्योरुपलक्षणत्वादमावास्यापूर्णिमास्योरप्येकरात्रिः परिमाणमस्या इत्येकरात्रिकी सर्वरात्रिकीं प्रतिमां कायोत्सर्गे धातूनामनेकार्थत्वात्तिष्ठति करोतीत्यर्थः । प्रतिमावर्जदिनेषु असिणाणविअडभोई माउलिअडो दिवसबंभ-यारी अ । रत्तिं परिमाणकओ, पडिमावज्जेसु दिवसेसु ॥ २ ॥ अस्नानः—स्नानवर्जकः । विकटे प्रकटे प्रकाशे दिवा न रात्रावित्यर्थः, दिवापि प्रकाशदेशे अशनाद्यभ्यवहरतीति विकटभोजी । पूर्वं हि निशाभोजने नियमो नासीत्तदर्थ-मिदमुक्तम् । माउलिअडोत्ति अबद्धपरिधानकच्छः । तथा दिवसे ब्रह्मचारी रात्रौ तु स्त्रीणां तद्भोगानां वा परिमाणं कृतं येन स परिमाणकृतः पर्ववर्जदिनेषु २ । कायोत्सर्गे यच्चिंतयति तदुच्यते झायइ पडिमाइट्ठिओ, तिलोअपुज्जे जिणे जिअ-कसाए । निअदोसपच्चणीअं, अन्नं वायं च जा मासा ॥ ३ ॥ स्वकीयकामक्रोधादिदोषप्रत्यनीकं प्रतिपक्षभूतं काम-निंदाक्षांतिप्रभृतिकम् ५ । षष्ठ्यां तु प्रतिमापंचकोक्तक्रियारतः शृङ्गारकथाविभूषोत्कर्षस्त्रीकथादि वर्जयित्वा दिने निशायां च

ब्रह्म पालनीयम् । अत्र गाथा सिंगारकहविभूसुक्करिस, इत्थीकह च वज्जतो । वज्जइ अबभमेग, तओ अ छट्ठीइ छम्मासे ॥ १ ॥ ६ । सप्तम्यां तु षट्प्रतिमोक्तक्रिया कुर्वन् सचित्त चतुर्विधमप्याहार परिहरति सप्तमासान् यावत् । अत्र गाथा सत्तमी सत्त उ मासे, न वि आहारइ सचित्तमाहार । ज ज हिट्ठिल्लाण, त त चरिमाणसव्वपि ॥ १ ॥ ७ । अष्टम्यां तु पृथिव्यादिषट्कायारभ स्वय वर्जयति । तथाविधतीव्रपरिणामरहिततया परैः पृथिव्याद्यारभकारापणे तु न नियम । ननु स्वयमारभमकुर्वत कर्मकरादींश्च तत्र व्यापारयतः प्राणिप्राणव्यपरोपण तदवस्थमेव । उच्यते स्वयमारभस्य करण परैश्च तत्कारापणमिति या उभयजन्या हिंसा सम्भवत्तन्मध्यात् स्वय तदकरणे एका हिंसा परिहृता भवेदेव, यथा प्रवर्द्धमानो व्याधिः स्तोकस्तोकतया हीयमानो हितायैव एवमारम्भोऽपि । नवम्यां तु नवमासान् यावत् स्वयमारभम कुर्वन्नन्यैरपि कर्मकरादिभिर्न कारयत्यारभ पुत्रादिन्यस्तगृहव्यापारः । आरभसयकरण, अट्ठमिआ अट्ठमास वज्जेइ । नवमी नवमासे, पुण पेसारभ विवज्जेइ ॥ १ ॥ ९ । दशम्यां तु दशमासान् यावदुद्दिष्टकृतमप्यशनादि नैवाऽश्नाति । कश्चित्तु क्षुरमुण्डितशीर्षः, कश्चित्तु शिरसि शिखा धारयति, भून्यस्तधन च सुतादीन् पृच्छतः कथयति चेज्जानाति, एतावद् विहाय नान्यत् किमपि गृहिकृत्य करोति । उक्त च दसमासदसमासे पुण, उद्दिट्ठकय तु भत्त नवि भुजे । सो होइ अछुरमुडो, सिहलिं वा धारए कोइ ॥ २ ॥ ज निहिअमच्छजाय, पुच्छत सुआण नवरि सो । तत्थ जइ जाणइ तो साहइ, अह न वि तो वेइ न विआणे ॥ २ ॥ १० । एकादश्यां त्वेकादशमासान् क्षुरेण लोचेन वा लुचितकचो रजोहरणपतद्ग्रहादिसकलसाधूपकरणान्यादाय सदनान्नित्य समितिगुप्त्यादिसकलसाधुसामाचारीसमाचरणचतुरो

भिक्षार्थं गृहिगेहप्रवेशे श्रमणोपासकाय प्रतिमाप्रपन्नाय भिक्षां दत्तेति जल्पन् कस्त्वमिति केनापि पृष्टे प्रतिमाप्रपन्नः श्रमणोपासकोऽहमिति ब्रुवाणो ग्रामनगरादिषु श्रमण इव नवकल्पविहारपरायणो विचरेत् । एतत्प्रतिमाप्रमाणं च प्रतिमासंख्या एव मासा यथा प्रथमैकमाससमाना यावदेकादश्येकादशमासप्रमाणा । एतच्च प्रमाणमुत्कृष्टं जघन्यं तु प्रातःकालादिसमयेऽंतर्मुहूर्त्तादिकमप्यवसेयमेकादशप्रतिमानामपि । अस्यां त्वेकादश्यां प्रतिमायां ममत्वेऽनपगते चेत् स्वजनदर्शनार्थं तत्स्थाने गच्छति तदा तत्रापि यतिरिव प्रवर्त्तते न स्वजनोपरोधेन कांचिद् गृहचिंतां विधत्ते । यद्यपि स्वजनाः स्नेहवशंवदास्तमनेषणीयं बलाद् ग्राहयंति तदापि स नेच्छति । किंत्वेषणीयमेव गृह्णाति । उक्तं च खुरमुंडो लोयणं च, रयहरणपडिमाइं च गिण्हित्ता । समणो हूओ विहरइ, मासा एक्कारमुक्कोसं ॥ १ ॥ ममकारे वुच्छिन्ने, गच्छइ सन्नायपल्लिदट्ठुं जे । तत्थ वि साहुव्व जहा, गिण्हइ फासुं तु आहारं ॥ २ ॥ आवश्यकचूर्णौ तु प्रतिमाविचारे किंचित् प्रकारांतरमपि दृश्यते । तथाहि राइभत्तपरित्तापत्ति पंचमी, सचित्ताहारपरिच्चए त्ति षष्ठी, दिवा ब्रह्मचारी राउपरिमाणकडेत्ति सप्तमी, दिआवि बंभयारी असिणाण परूढकेसमंसुरोमनहेत्ति अष्टमी, सारंभं परिचाएति नवमी, पेसारंभं परिचाएत्ति दशमी, उद्दिट्ठं वज्जए समणभूएत्ति एकादशी । एता एकादशापि श्रमणोपासकप्रतिमाः श्रमणैः सम्यक् प्ररूपणीयाः श्रद्धेयाश्च ।

तथा निर्ग्रंथवरैर्द्वादशभिक्षुप्रतिमा वोढव्या नवमपूर्ववृतीयवस्तुसूत्रधारिभिः । यत एतावत्सूत्राध्ययनं विना न भवेज्जघन्यतोऽपि यतिप्रतिमांगीकृतिः । ततो जघन्यतोऽपि नवमपूर्ववृतीयवस्तुसूत्रधारी उत्कर्षतस्तु देशोनदशपूर्वधारी गच्छ एव कृतपरिकर्मा महासत्त्वो मुनिरलेपभक्तग्राही प्रथमप्रतिमायां मासं यावद्भक्तपान्योरेकैकामेव दत्तिं प्रतिगृह्णाति १ । एवं द्विमासिक्यां

तयोर्द्वे दत्ती २। त्रिमासिक्यां तिस्रो दत्ती' ३। एव तावद् वाच्य यावत् सप्तमासिक्या सप्त दत्ती. ७। अष्टम्यां तु सप्तरात्रिक्यां चतुर्थभक्तेनापानकेन ग्रामाद् बहिरुद्यानादिस्थानस्थितो दिव्याद्युपसर्गान् सहते ८। एव नवम्यामपि सप्तरात्रिक्यां ग्रामाद् बहिरुत्कटिको दण्डायतो वा तिष्ठेत् ९। एवमेव दशम्यामपि सप्तरात्रिक्यां गोदोहिकावीरासनादिविधायी स्यात् १०। एकादश्यामहोरात्रिकायां षष्ठभक्तेनापानकेन ग्रामाद् बहिस्तनूत्सर्गं कुर्यात् ११। द्वादश्यामेकरात्रिक्यामष्टमभक्तेनेषत्प्राग्भारावनतो निर्निमेषनयन एकदृष्टिस्तिष्ठेत्कायोत्सर्गे १२। साम्प्रत पुनर्मुनिभिरिमाः प्रतिमा' सम्यक् प्ररूपणीया श्रद्धेयाश्च। आसां विशेषार्थस्तु दशाभ्योऽवसेय ।

तथा यतिभिस्त्रयोदशक्रियास्थानानि सम्यक् परिहरणीयानि च यथाशक्ति। तत्र प्रथमाऽर्थाय क्रियाऽर्थक्रिया १। अनर्थाय क्रियाऽनर्थक्रिया २। हिंसायै क्रिया हिंसाक्रिया ३। अन्यस्मै बाणादि मुचति अन्य च हति साऽकस्मात्क्रिया ४। मित्रमप्यमित्रमित्यस्तेनमपि स्तेनमित्यादिभ्रान्त्या यद्धनन सा दृष्टिविपर्यासक्रिया ५। षष्ठी मृषाक्रिया ६। अदत्तग्रहणादिनाऽदत्तादानक्रिया ७। शङ्कया मनस्तापादिकरणे आध्यात्मिकीक्रिया ८। मानेन परहीलनादिना मानक्रिया ९। स्वल्पेऽप्यपराधे तीव्रदण्डकरणममित्रक्रिया १०। कौटिल्यादिना मायाक्रिया ११। कामादिगृद्ध्या आत्मान रक्षन् परेषां यद् वधबन्धादि विधत्ते सा लोभक्रिया १२। त्रयोदशी ईर्यापथिकीक्रिया ईरणमीर्यागमन सैव पथा मार्गो यस्य तदीर्यापथ गमनादिधारक कर्म तस्य बद्ध्यमानस्य वेद्यमानस्य वा निमित्तभूता क्रिया सा निमित्तनिमित्तिनोरभेदादीर्यापथिकी क्रिया सयोगिकेवलिनां शैलेश्यवस्थाया अर्वाक् क्षीणोपशान्तमोहानां छद्मस्थवीतरागाणां च। उक्त च–इरियावहिआ किरिआ,

जो केवलजोगपव्वओ। बंधो सो अ सजोगिजिणाणं, छउमत्थजिणेण वा हुज्जा ॥ १ ॥ १३। एतास्त्रयोदशापि क्रियाः सम्यग्श्रद्धेया यतिभिः।

तथा मुमुक्षुभिश्चतुर्दशभूतग्रामाः सम्यक्श्रद्धेयाः प्ररूपणीयाश्च। ते चेमे एकेंद्रियाः सूक्ष्मा बादराश्च, द्वित्रिचतुरिंद्रियाः संज्ञिनोऽसंज्ञिनश्च, पंचेंद्रिया एते च पर्याप्ता अपर्याप्ताश्चेति चतुर्दशभूतग्रामाः। अथवा चतुर्दशगुणस्थानवर्तिजीवसमूहैश्चतुर्दशभूतग्रामा अवसेयाः। तत्र प्रथमं मिथ्यादर्शनगुणस्थानं निखिलमिथ्यात्विनाम् १। द्वितीयं सास्वादनमनंतानुबंधिकषायोदयेन सम्यग्दर्शनवमनसमानं षडावलिकाप्रमाणम् २। तृतीयं मिश्रगुणस्थानं यत्र वर्त्तमानस्य जंतोर्जिनधर्मविषयेन रागो न च द्वेषो नालिकेरद्वीपनिवासिनरस्य यथाऽन्नविषये ३। तुरीयमविरतसम्यग्दृष्टिगुणस्थानमविरतसम्यग्दृष्टेः ४। पंचमं देशविरतिगुणस्थानं देशविरतस्य ५। षष्ठं प्रमत्तगुणस्थानं प्रमत्तसंयतस्य ६। सप्तममप्रमत्तगुणस्थानमप्रमत्तसंयतस्य ७। अष्टमं गुणश्रेणि १ गुणसंक्रम २ स्थितिघात ३ रसघात ४ स्थितिबंधानां पंचानामपूर्वानां करणादिपूर्वकरणं निवृत्तिबादरेति द्वितीयनामकम् ८। नवममनिवृत्तिबादरं लोभखंडवेदनां यावद् ९। सूक्ष्मसंपरायगुणस्थानं लोभाणून् वेदयतः १०। एकादशमुपशांतमोहमष्टाविंशतिविधमोहनीयकर्मोपशमे ११। द्वादशं क्षीणमोहनीयकर्मक्षये १२। त्रयोदशं सयोगिगुणस्थानं केवलसंवेदने समुत्पन्ने १३। चतुर्दशमयोगिगुणस्थानं केवलिन एव योगत्रयनिरोधे १४। एतेषु प्रथमं मिथ्यात्वगुणस्थानमभव्यानामनाद्यनंतं भव्यानां त्वनादिसांतम्, सास्वादनं तु षडावलिकामानम्। समधिकत्रयस्त्रिंशदंतरप्रमाणं तु तुरीयम्। देशोनपूर्वकोटिप्रमाणं तु पंचमं त्रयोदशं च। लघुपंचाक्षरमानं तु चतुर्दशम्। शेषाष्टगुणस्थानान्यंतर्मुहूर्त्तमानानि। एतत्प्रमाणमु-

तृतीय-
लहर्यां
चतुर्थ-
स्तरङ्गः।

द्वादशश्रमणप्रतिमाः, त्रयोदशक्रियास्थानानि चतुर्दशभूतग्रामाः।

त्कृष्ट जघन्यतस्त्वयोगिवर्जानि सर्वाण्यपि गुणस्थानान्यतर्मुहूर्त्तानि। मिश्रे क्षीणमोहे सयोगिगुणस्थानके च न म्रियते शेषेष्वेकादशगुणस्थानकेषु च म्रियते। तत्रापि मिथ्यात्वे सास्वादने सम्यक्त्वे वा गृहीते म्रियते न शेषैकादशगुणस्थानकेषु गृहीतेषु। एतदुक्तार्थसंवादिन्यश्च पूर्वाचार्यकृता गाथास्तथाहि–छावलिअ सासाण, समहिअतित्तीससायर चउत्थ। देसूणपुव्वकोडी, पचम तेरस च पुढो ॥ १ ॥ लहुपचक्खरचरिम, तइअ छट्ठाउवारससा। वइआ अट्ठगुण ठाणी अतमुहुत्ताइ पत्तेअ ॥ २ ॥ मीसे खीणसजोगे, न मरतेगारसेसु अ मरति। तेसु वि तिसु गहिएसु, परलोगमो न सेसेसु ॥ ३ ॥ मिच्छे य सासणे वा, अविरयसम्मम्मि अहवा गहिअम्मि जति जिआ, परलोअ सेसिक्कारसगुणे मुत्तु ॥ ४ ॥ एव द्वेधाऽपि चतुर्दशभूतग्रामाः सम्यग् ज्ञेयाः श्रद्धेया' पालनीयाश्च।

तथा मुनिसिंहे' पचदशविधाः परमाधार्मिकाः सम्यक् श्रद्धेयाः प्ररूपणीयाश्च। तत्स्वरूप च श्रीभरभावनागाथाभिरेव लिख्यते। तथाहि अबे १ अबरिसी २ चेव, सामे आ ३ सबले इअ ४। रुद्दो ५ वरुद्द ६ काले ७ अ, महाकाले त्ति आवरे ८ ॥ १ ॥ असि ९ पत्तधणू १० कुभे ११, वालू १२ वेअरिणी १३ त्ति अ। खरस्सरे १४ महाघोषे १५, पनरसपरमाहम्मिआ ॥२॥ एए उ नरयपाला, धावति समतओ कलयता। रे रे तुरिअ मारह छिंदह, भिंदह इम पाव ॥ ३ ॥ इअ जपती वा वल्लभल्लि–सिल्लेहि खग्गकुतेहिं। नीहरमाण विंधति, तह य छिदति निक्करुणा ॥ ४ ॥ निवडंतो वि हु कोइ वि, पढम खिप्पइ महतसूलाइ। अप्फलिज्जइ अन्नो, वज्जसिलाकटय समूहे ॥५॥ अन्नो वज्जगिविआसु, खिप्पइ विरसमारसतो वि। अबाईण सुराण, इत्तो साहेमि वावार ॥ ६ ॥

आराइएहिं विंधंति, मुग्गराईहिं तह निसुंभंति। धाडंति अंबरयले, मुंचंति अनारए अंबा ॥ ७ ॥ निहए अ तह निसन्ने, ओहयचित्ते विचित्तखंडेहिं। कप्पंति कप्पणीहि अ, अंबरिसी तत्थ नेरइए ॥ ८ ॥ साडणपाडण-तोत्तय-विंधणं तह रज्जतलपहारेहिं।सामा नेरइआणं कुणंति, तिव्वाओ विअणाओ ॥९॥ सबला नेरइआणं, उअराओ तह य हिययमज्झाओ। कड्ढंति अंतवसमंस-फिप्फिसे छिंदिंओ बहुसो ॥ १० ॥ छिंदंति असीहिं तिअ, सूलसुइसत्तिकुंततुमरेसु। पोअंति चिआसु दहंति, निद्दयं नारए रुद्दा ॥ ११ ॥ भुंजंति अंगुवंगाणि, ऊरुबाहुसिराणं करचरणे। कप्पंति खंडखंड-उवरुद्दा निरयवासीणं ॥ १२ ॥ मीरासु सुंठएसु अ, कुंडूसु अ पयणगेसु कुंभीसु। लोहीसु अपलवंते, पयंति काला उ नेरइए ॥ १३ ॥ छिन्नूणसीह पुत्था-गिईणि तह कागिणिप्पमाणाणि। खावंति मंसखंडाणि, नारए तत्थ महकाला ॥ १४ ॥ हत्थे पाए ऊरे, बाहु सिरा तह य अंगुवंगाणि। छिंदंति असी असिमाइएहिं, निच्चंपि निरयाणं ॥ १५ ॥ पत्तधणुनिरयपाला, असिपत्तवणं विउव्विअं काउं। दंसंति तत्थ छायाहि-लासिणो जंति नेरइया ॥ १६ ॥ तो पवणचलिरतरु-निवडिएहिं असिमाइएहिं किर। तेसिं कन्नुट्ठनास-करचरणऊरुमाईणि छिंदंति ॥ १७॥ कुंभीसु पयणगेसु अ, सुंढेसु अ कुंडुलोहिकुंभीसु। कुंभी उ नारए उक्कलंत-तिल्लाइसु तलंति ॥ १८ ॥ तडयडखफुट्टंते, वणयच्चकलंयवालुआ। निरए सुंजंति नारए तह, वालुअनामा निरयपाला ॥ १९ ॥ वसुपूअरुहिरकेसट्ठि-वाहिणि कलयलंततउसुत्तं वेअरणिं। नासनइअइक्खारुसिणं विउव्वेओ ॥२०॥ वेअरणिनिरयपाला, तत्थ पहावंति नारए

दुहिए । आरोवति तह पि हु, रत्ताए लोहनावाए ॥ २१ ॥ नेरइए चेव परप्परपि, परसूहिं तच्छयति दढ । करवत्तेहिं अ फाडति, निद्दय मज्झमज्झेण ॥२२॥ विअरालवज्जकटय–भीममहासिंबलीसु अ खिवति । पलवते खरसद्द, खरस्सरा निरयपालत्ति ॥ २३ ॥ पसुणुव्व नारए वह–भएण भीए पलायमाणे अ । महघोस कुण माणे, रुभति तहिं महाघोसा ॥ २४ ॥ एवमेतेषा पचदशपरमाधार्मिका नानाविधविडबनाविधान निशम्य तत्र विधेयमेव येन निरये समुत्पद्यते । अथासा गाथाना विषमपदव्याख्या । तथाहि–धाडति सारमेयानि व क्रिडया तानुत्रासयति ७ । खड्गमुद्गरादिना निहताँस्तथा निपण्णाँस्तद्घातमूर्छया निपतितान्निश्चेतनीभूतान् विचित्रैः स्थूलमध्यमसूक्ष्मखडैः ८ । तोमेण वज्जमयदडेन वेधनम् ९ । मीरासु वज्राग्निभृतदीर्घचुल्लासु, स्थठेपु वज्जमयतीक्ष्णकीलकेपु, कडूसु तीव्रतापेपूपकरणविशेपेपु, पवनकेपु मडकादिपाकहेतुपु लोहीष्वतिप्रतप्तायसकविल्लिपु प्रलापान् कुर्वतो नारकान् जीवन्मत्स्यानिव काला' १३ । छित्वा पृष्ठ्यादिप्रदेशान् सिंहपुच्छाकृतीनि काकिणी कपर्दिका तत्प्रमाणानि मासखडानि १४ ।

अयमर्थं सकलोऽपि सूत्रकृताङ्गे प्रोक्तोऽस्ति तथा यतिभिः समयादीनि गाथाध्ययनपर्यन्तानि सूत्रकृदगपोडशाध्ययनानि निधिनाऽध्येयान्याराधनीयानि च शुद्धप्ररूपणया तदुक्तानुष्ठानानुष्ठितेश्च ।

तथा सप्तदशधा सयमः सम्यग् मुमुक्षुभिः पालनीयः । स च पचाश्रवविरमणपचेंद्रियनिग्रहकपायजयदडत्रयविरतिरूपः । अथवा पुढविदगअगणिमारुअवणस्सइबितिचउपणिंदिअजीवे । पेहोपेहपमज्जण परिठवणमणोवईकाए ॥१॥ इति गाथोक्तभेदैः सप्तदशविधः । एतद्व्याख्या, तथाहि–पृथिव्य १ ऽप् २ तेजो ३ वात ४ वनस्पति ५ द्वि ६ त्रि ७ चतु

८ ष्पंचेंद्रियाणां ९ मनोवचनतनुभिः करणकारणानुमतिभेदतः संघट्टपरितापोपद्रवाणां परिहरणतो नवधा जीवसंयमः । दशम-स्त्वजीवसंयमः, स च पुस्तकाऽप्रतिलेखदुष्प्रतिलेख्यदूष्यतृणचर्मपंचकविकटहिरण्यादीनामसंग्रहरूपः । तत्र पुस्तकपंचकं गंडी१ कच्छपी २ मुष्टि ३ संपुटफलक ४ निवाडिभेदतः । एतद् व्याख्या–बाहल्लपुहुत्तेहिं, गंडी पोत्थो उत्तुल्लगो दीहो । कच्छ-वि अंते तणुगो, मज्झे पिहुलो मुणेअव्वो ॥१॥ चउरंगुलदीहो वा, चत्तागितिसुहिपोत्थओ अहवा । चतुरंगुल-दीहोवि अ, चउरस्सो वा वि विन्नेओ ॥२॥ संपुडगो दुगमादीफलगावोच्छं विवाडिमित्ताहो । तणुपन्नूसिअ-रूवो, होइ विवाडीबुधावेति ॥३॥ दीग्घो वा हस्सो वा, जो पिहुलो होइ अप्पबाहल्लो । तं मुणिअसमयसारा, छिवाडिपोत्थं भणंतीह अ ॥४॥ प्रतिलेखदूष्यपंचकं तु तूलिको १ पधानक २ गंडोपधानक ३ आलिंगिणि ४ वस्त्रमय-सूक्ख ५ रूपं वस्त्रमयमसूक्ष्खस्तु गष्टिकादिरूपम् । दुष्प्रतिलेख्यदूष्यपंचकं तु पह्लवि१कोअवि २ प्रावार ३ नवत ४ दाढि-गालिरूपम् ५ । तत्र प्रह्लविः प्रल्हादिका हस्त्यास्तरणं गोणीरूपम् १ । कुविआच्छादने कुतको रूतपूरितपदोसाणकीति प्रतीतः २ । प्राचारोद्दहा कंबलो नेपालादिः ३ । नवतं जवनी ४ । मिलिततंतुद्वयव्यूता पर्वदाढिगालिः ५ । तृणपंचकं तु शालि १ व्रीहि २ कोद्रव ३ दालका४रण्यकतृणरूपम् ५ । चर्मपंचकं त्वजै१डक२गो३ महिषी ४ मृगा ५ जिनरूपम् । तलिगा १ खल्लग २ वर्द्ध ३ कोश ४ कृत्ति ५ रूपं वा । वार्द्धा विहारे शरीरेण सहोपधेर्बंधनार्थं कोशस्तु नखभेदिन्याद्या-धाररूपः । आह किमेषाग्रहण एव संयमः उत ग्रहणेऽपि उच्यते उत्सर्गपदेऽग्रहण एव, अपवादपदे तु तद्ग्रहणेऽपि । यदुक्तं दुप्पडिलेहिअदूसं, अद्धाणाईं विचित्तमिण्हंति । घिप्पइ पुत्थयपणगं, कालिअनिज्जुत्तिकोसट्ठा ॥१॥ विविक्तं

यथा सागारिकातपशातिविविक्तामुषिता वा । ननु ज्ञानसाधनत्वात् कथ पुस्तकपचकस्य नोत्सर्गतो ग्रहणम् ? उच्यते सत्त्वोपघातनिमित्तत्वात् । यदुक्त जइ तेसिं जीवाण, तत्थ गयाण तु सोणिअ । हुज्जा पीलिज्जते घणिअ, गलिज्जते अक्खारफुसिओ ॥ १ ॥ तत्र पुस्तके गतानाम् १० । एकादशस्तु प्रेक्षासयमः । स च स्थाननिष्पादनशयनादिकृत्येषु प्रत्युपेक्षणप्रमार्जनविधानेन समाराधितः स्यात् ११ । द्वादशस्तूपेक्षा सयमः । स च व्यापारेऽव्यापारे च उपेक्षाशब्दस्य जने तथा प्रवृत्तिदर्शनात् । तथा च वक्तारो भवति उपेक्षकोऽयमस्य ग्रामस्य चिंतक इति तात्पर्यम् । तथा किमिद वस्तु विनश्य दुपेक्षसे ? न चिंतयतीत्यर्थः । तत्र व्यापारोपेक्षा यत् साभोगिकसाधूनां सयमे सीदतां प्रेरणम्, इतरेषां च तेषां प्रवचनकार्यसीदतां प्रेरणम् । अव्यापारोपेक्षा तु यत्सावद्यकर्मणि सीदतां गृहिणामप्रेरणम् १२ । प्रमार्जनासयमस्तु यत् सागारिके सत्यप्रमार्जन यतनया प्रमार्जन तदभावे तु प्रमार्जनमेव १३ । परिष्ठापनासयमस्तु यदशुद्धस्याधिकस्य क्षेत्रकालातिक्रातस्य वा भक्तपानादेर्विधिना परिष्ठापनम् १४ । मनःसयमस्त्वकुशलस्य तस्य नियत्रण कुशलस्य च तस्योदीरणम् १५ । एव वचनसयमोऽपि १६ । कायसयमस्तु सलीनतया 'जय चरे जय चिट्ठे' इत्यादिगाथोक्तयतनया वा कायव्यापारत० परिज्ञेयः १७ । एत द्वेधापि सप्तदशभेदसयमसमाराधनविधौ यतनीय निर्वृतिपद प्राप्तुकामै० ।

तथा निर्ग्रंथैरष्टादशविधब्रह्मणि निरतिचारैर्भवितव्यम् । तस्य च दिव्यौदारिककामाना मनोवचनतनुभिः करणकारणानुमतीनां परिहरणतोऽष्टादशभेदत्व विज्ञेयम् । यदुक्त ' दिव्यौदारिककामाना, कृतानुमतिकारितै० । मनोवाक्कायतस्त्यागो, ब्रह्माष्टादशधा मतम् ॥ १ ॥ '

तथा यतिभिरुक्खित्तनाए संघाडे इत्यादि गाथोक्तज्ञातधर्मकथांगप्रथमश्रुतस्कंधसंबंधीन्येकोनविंशत्यध्ययनानि विधिनाऽध्येयानि श्रद्धेयानि तदुक्ताचाराचरणतः समाराध्यानि च ।

अष्टादश ब्रह्मभेदाः, एकोनविंशतिज्ञाताध्ययनानि, विंशत्यसमाधिस्थानानि ।

तथा यतिभिर्विंशत्यसमाधिस्थानानि त्याज्यानि । तत्र समाराधनं समाधिश्चित्तस्वस्थता मुक्तिमार्गावस्थितिरिति यावत् न समाधिरसमाधिस्तस्य स्थानान्याश्रयास्तानि चेमानि । तथाहि प्रथमं द्रुतद्रुतचारित्वं, तच्च पतनस्खलनादिनाऽऽत्मनोऽपरप्राणिनां वाऽसमाधिकरणादसमाधिस्थानम् १ । द्वितीयमप्रमार्जितप्रदेशे स्थाननिषीदनत्वग्वर्त्तनादिविधानम् २ । तृतीयं तु दुष्प्रमार्जितदेशे तत्करणम् ३ । तुरीयमतिरिक्तशय्यासेवनम्, अतिविशालायां हि वसतौ परेऽपि कार्पटिकादयः समायांति तैः समं संवासेऽधिकरणाद्युत्पत्तेरसमाधिः ४ । अतिरिक्तासनपीठफलकधारित्वम् ५ । रत्नाधिकः सूरिरपरो वा श्रुतपर्यायादिभिर्वृद्धस्तस्य परिभवकारित्वम् ६ । स्थविरा गुरवस्तेषां ज्ञानादिभिरुपघातकारित्वम् ७ । निरर्थकमेकेन्द्रियादिभूतोपघातकारित्वम् ८ । पुनः पुनः कोपनत्वम् ९ । सकृत्क्रोधनिधानेऽप्यत्यंतक्रुद्धत्वम् १० । पराङ्मुखेऽवर्णवादित्वम् ११ । अभीक्ष्णं चौरोऽयं पारदारिकोऽयमित्याद्यभ्याख्यानदायित्वं यद्वाऽभीक्ष्णं शंकितेऽप्यर्थे एवमेवैतदित्याद्यवधारणविधायित्वम् १२ । अधिकरणस्य कलहादेरुदीरणं यद्वा यंत्राद्यधिकरणोदीरणम् १३ । अकालस्वाध्यायकारित्वम् १४ । अस्थंडिलात् स्थंडिलसंक्रमे क्रमाप्रमार्जनं सरजस्कपाणिभ्यां भिक्षासमादानेन केवलपृथिव्यां वा निषीदनेन ससरजस्कत्वम् १५ । विकालेऽपि महता शब्देन भाषणं गृहस्थभाषाभाषणं वा १६ । कलहो येन भवेत्तस्यैव विधानम् १७ । झंझागणभेदस्तद्विधायित्वम् १८ । सूरप्रमाणभोजित्वं सूर्योदयादारभ्यास्तसमयं यावत् भोजित्वम् १९ । अनेषणीयाऽपरिहरणं

साधुभिस्तत् परिहारप्रेरणाकरणे च तैः सम कलहकारित्वम् २० । एतानि विंशतिमितान्यप्समाधिस्थानानि मुक्तिनिबंधन चित्तैकाग्रतारूपसमाधिमिच्छुभिः सर्वथैव विवर्जनीयानि ।

तथा साधुभि श्रामण्यस्य शबलताहेतुभूततया करकर्मादयः शबलाः क्रियाविशेषा एकविंशतिर्वर्जनीया एव । तत्र करकर्मण' स्वयकरणेन परैर्वा कारणेन शबलचारित्री स्यादिति प्रथमः शबलः १ । अतिक्रमव्यतिक्रमातिचारैर्मैथुन सालबन सेवमानो द्वितीयः शबल २ । दिवागृहीतदिवाभुक्तादिचतुर्भंग्या अतिक्रमादिभिः सालबन निशाभोजन विधानस्तृतीयः शबलः ३ । एवमाधाकर्म ४ राजपिंड ५ क्रीत ६ प्रामित्या ७ ऽभ्याहृता ८ छेद्यानि ९ भुजान' । अभीक्ष्ण प्रत्याख्याय भुजानः १० । पण्मासातर्गणाद्गणांतरसक्रम कुर्वाणः ११ । मासातस्त्रीनुदकलेपान् विदधान' १२ । अथवा त्रीणि मातृस्थानानि प्रच्छादनादीनि कुर्वन् उपेत्य पृथिव्यादिप्राणातिपात कुर्वन् १३ । मृषावाद च वदन् १४ । अदत्त च गृहन् १५ । केवलायां पृथिव्या शयननिषीदनादि विदधान १६ । सस्निग्धसरजस्कसचित्तपृथिवीशिलाघुणक्षतपीठफलकादिषुस्थान-निषीदनादि कुर्वाणः १७ । सांडसभूतसप्राणसबीजादिप्रदेशे स्थानादीनि विदधानः १८ । आकुट्या मूलफलपुष्पादि भुजानः १९ । वर्षांतर्दशदकलेपान् दशमातृस्थानानि वा कुर्वाणः २० । गलत्सचित्तोदकक्लिन्नकरदर्व्यादिदीयमानाशनादि भुजानः १२ । एवमेकविंशतिश्चरितशवलताविधायिनः क्रियाविशेषाः परिहार्या एव मुमुक्षुभिर्मोक्षकांक्षिभि' ।

तथा निर्ग्रंथैः क्षुत् १ पिपासा २ शीतो ३ष्ण ४ दशमशका ५ऽचेला ६ऽरति ७ वनिता ८ नचकल्पविहाररूपचर्या ९ स्त्रीपशुपडगादिरहितस्वाध्यायभूमिरूपनिषिद्यो १० च्चावचशय्या ११ क्रोश १२ वध १३ याच्ञा १४ ऽलाभ १५ रोग १६

तृणस्पर्श १७ मल १८ सत्कार-पुरस्कार १९ प्रज्ञा २० ऽज्ञान २१ दर्शनपरिषह २२ रूपाश्च द्वाविंशतिः परिषहाः पराजेयाः सत्त्वमवलंब्य। अत्र च परिषहाधिकारे परिषहाध्ययनं वाच्यं समग्रमपि।

तथा पुंडरीअकिरिअठाणे, आहारपरित्तपच्चक्खाणकिरिआय-अणगारसद्दनाणं-दसोलसाइ च तेवीसं ॥ १ ॥ इति गाथोक्तानि सूत्रकृदंगसंबंधीनि त्रयोविंशत्यध्ययनानि विधिनाऽध्येयानि श्रद्धेयानि सम्यक्प्ररूपणादिभिः समाराधनीयानि च वाचंयमैः।

तथा मुनिभिर्दशविधभवनवासिवसु(८)विधव्यंतरैकप्रकारवैमानिकपंचविधज्योतिष्करूपाश्चतुर्विंशतिविधा देवा यथास्थितप्ररूपणादिभिर्नाशातनीयाश्चतुर्विंशतिर्वर्त्तमानचतुर्विंशतिकाः तीर्थपतयो वा जघन्यमध्यमोत्कृष्टाशातनाभिर्नवाशातनीयाः। अत्र गाथा भवणवणजोइवेमा-णिआ य दसअट्ठएग पंचविहा। इअ चउवीसं देवा, केई पुण बिंति अरिहंता ॥१॥

तथाऽनगारैः श्रामण्यसारभूताः पंचमहाव्रतसंबंधिन्यः पंचविंशतिर्भावना भावनीयाः। महाव्रतसंरक्षणाय भाव्यंत इति भावनास्ताश्चेमाः प्रथममहाव्रते पंच। तथाहि-ईर्यासमित्येव गंतव्यमित्याद्या भावना १। द्विचत्वारिंशद्दोषविरहिते अन्नपाने अवलोक्य भोजनीये इति द्वितीया २। भांडमात्रग्रहणनिक्षेपणादि प्रत्युपेक्षणप्रमार्जनपूर्वमेव विधेयमिति तृतीया ३। अकुशलमनोनिरोधेन कुशलमनस एव प्रवर्त्तनं विधेयमिति तुरीया ४। पंचमी त्वकुशलवाग्निरोधेन कुशलवाक्प्रवृत्तिः ५। द्वितीयमहाव्रतस्य तु पर्यालोच्य भाषां भाषेदिति प्रथमा भावना १। क्रोध २ लोभ ३ भय ४ हास्य ५ परिहारपुरस्सरमेव वदेदिति द्वितीयाद्याः २-३-४-५। स्वयंप्रभुप्रभुसंदिष्टाऽधिकृताऽवग्रहयाच्ञायां पर्यालोच्य प्रवर्त्तनीयमिति तृतीयमस्याद्या

भावना १ । तत्रैवोपाश्रये तृण–काष्ठ–पीठ–फलकाद्यनुज्ञाप्यैव व्यापार्यमिति द्वितीया २ । सर्वदा स्पष्ट मर्यादया पुनः पुनरव-ग्रहप्रार्थनं विधेयमिति तृतीया ३ । गुर्वनुज्ञापूर्वकमेवाशनाद्यभ्यवहार्यमिति तुरीया ४ । साधर्मिकावग्रहयाञ्जापूर्वमेव स्थानादि विधेयमिति पचमी ५ । तुरीययमस्य तु स्त्रीपशुपण्डकविरहिता विविक्तैव वसतिः सेवनीयेत्याद्या १ । वनिताभिः सम वनिताकथा वा चतुर्विधां न कुर्यान्नाकर्णयेन्न चिंतयेदिति द्वितीया २ । तृतीया तु युवतीना हसितभणितचेष्टितसविलासेक्षितगतिक्रीडितनृत्यगीतवादित्रवादनवपुर्वर्णसस्थानकरचरणनयनवदनस्तनजघनवसनमडनादीनि तपःसयमब्रह्मोपघातहेतुभूतानि न चक्षुषा निरीक्षणीयानि न च चेतसा चिंतनीयानि नापि वचसा वाच्यानि । उक्त च श्रीउत्तराध्ययने अदसण चेव अपत्थण च, अचिंतण चेव अकित्तण च । इत्थीजणस्सापरियमाणजुग्ग, हिअ सया बभचरे रयाण ॥ १ ॥ तथा स्वतनुसस्कारश्च परिहार्यः ३ । तुरीया तु पूर्वभुक्तभोगास्मृतिः ४ । पचमी तु प्रणीताऽतिमात्रभोजनपरित्यजनरूपा ५ । पचममहाव्रतस्य तु शब्द १ रूप २ रस ३ गध ४ स्पर्शेश्च ५ मनोज्ञेषु रागविवर्जनममनोज्ञेषु च द्वेषविवर्जनमिति भवति पचभावनाः । एव पच पचगुणिताः पचमहाव्रतसत्काः पचविंशतिर्भावना भावनीयानि श्रेयसार्थिना ।

तथा निर्ग्रंथैर्दशाकल्पव्यवहाराणा षड्विंशतिरुद्देशनकालाः श्रुतोपचाररूपा न विराधनीया वितथकरणादिना ।

तथा साधुभिः सप्तविंशतिगुणाः सम्यग्धारणीयास्ते चेमे–व्रतषट्कपालनीयम् ६ । कायषट्क च सम्यक् सरक्षणीयम् १२ । पचकरणनियत्रण च विधेयम् १७ । निर्लोभता १८ क्षान्ती १९ चाश्रयणीये । भावविशुद्धिश्च विधेया २० । प्रत्युपेक्षणादिबाह्यक्रिया सम्यक्कार्या २१ । सयमयोगयुक्तता च २२ । अकुशलमनो २३ वचन २४ तनूना २५ निरोधश्च विधेयः

शैलेशीकरणसमये तु कुशलानामपि । शीतादिवेदनाश्च सम्यक् सोढव्याः २६ । कल्याणमित्रबुद्ध्या मारणांतिकोपसर्गसहनं च कार्यम् २७ । एवं सप्तविंशतिर्यतिगुणाः श्रमणशिरोमणिभिर्यावज्जीवममिततया धारणीयाः ।

तथा निर्ग्रंथैरष्टाविंशतिराचारप्रकल्पा आचारप्रभेदाः शस्त्रपरिज्ञादयः सम्यगवसेयाः । ते च सत्थपरिन्नेत्यादिप्रतिक्रमणनिर्युक्तिगतगाथात्रयेण ज्ञेयाः ।

तथा वाचंयमोत्तमैरेकोनत्रिंशन्मितेषु पापोपादानश्रुतेषु प्रसंगो न विधेयः । तानि च गाथाद्वयेनोच्यंते तथाहि—
अट्ठनिमित्तंगाइं दिव्वुप्पायंतरिक्खं भोमं च । अंगं सरं लक्खणं, वंजणं च तिविहं पुणिक्किकं ॥ १ ॥ सुत्तं वित्ती तह वत्तिअं च, पावसुअं नउणतीसविहं । गंधव्वनट्टवत्थुं, आउं धणुवेअसंजुत्तं ॥ २ ॥ एतद्व्याख्या, अष्ट निमित्तांगानि भवंति । तत्र दिव्यं व्यंतराद्यट्टहासादिविषयम् १ । उत्पातं तु सहजशोणितवृष्ट्यादिविषयम् २ । अंतरिक्षं तु ग्रहभेदादिविषयम् ३ । भौमं तु भूमिकंपादिविषयम् ४ । अंगमंगस्फुरणांगस्पर्शनादिविषयम् ५ । स्वरं स्वरविषयम् ६ । लक्षणं करचरणरेखादि तद्विषयम् ७ । व्यजनं मषीतिलकादि तद्विषयम् ८ । एकैकं पुनस्त्रिविधं सूत्रं १ वृत्ति २ वार्तिकं ३ च । एतेषां चैतत्प्रमाणं दिव्वादीण ससूवं, अंगविवज्जाण होइ सत्तण्हं । सुत्तं सहस्स लक्खो अ, वित्ति तह कोडि वक्खाणं ॥ १ ॥ अंगस्स सयसहस्सं, सुत्तं वित्तिअ कोडि विन्नेया । वक्खाणं अपरिमिअं, इणमेव पवत्तिअं जाणा ॥ २ ॥ अष्टौ दिव्यादिमूलभेदाः सूत्रादिभेदैस्त्रिगुणिताश्चतुर्विंशतिर्भवति २४ । गांधर्वम् २५ । नाट्यम् २६ । वास्तुविद्या २७ । आयुर्वेदः २८ । धनुर्वेदश्च २९ । एवमेकोनत्रिंशद्विधे पापोपादानश्रुते यतिसत्तमैर्न विधेय एव प्रसंगः ।

कल्प-व्यवहारो-द्देशन-कालाः, साधु-गुणाः, पापो-पादान-श्रुत-प्रसङ्गाश्च ।

तथा मुनिभिस्त्रिंशत्मोहनीयस्थानानि त्याज्यान्येव । तत्र मोहनीय तुरीयकर्मप्रकृतिस्तस्याः स्थानानि निमित्तानि । तानि चेमानि जलमध्येऽवगाह्य तीव्ररौद्राध्यवसायेन पद्भ्यामाक्रम्य त्रसजतून् वनितादीन् व्यापादयति, स चैव तेषा महाव्यथा मुत्पादयन् भवशतसहस्रादिवेदनीय महामोहनीय कर्म समुपार्जयति । एव सर्वत्र क्रिया योज्या । उक्त च श्रीआवश्यकचूर्णौ पाणीयमज्झे वगाहित्ता तिव्वेणमणसा पाएण अक्कमित्ता तसे पाणे इत्थिमादीवि हिंसइ से तस्स महामोह मुप्पाएमाणे भवसयदुहवेअणिज्ज अप्पणो महामोह पकुव्वइ ॥ १ ॥ द्वितीय तु मुखश्रोत्रादीन्याच्छाद्य कठमध्य एवाव्यक्तमारटतनरादिक विनाशयति २। तृतीय त्वार्द्रचर्मादिना शिरो वेष्टयित्वा तीव्राऽशुभपरिणामेन मारयति ३। तुरीय तु मुद्गरादिना शीर्षे आहत्य कुमारेण मारयति ४ । बहुजनस्य नेतार हति ५। ससारसागरे मज्जतां जतूनां द्वीपमिव शरणभूत ज्ञानदातार नर विशसति ६ । सर्वसामान्ये ग्लाने समर्थोऽपि महाघोरपरिणामतया तत्कृत्यमौषधपथ्यादिसपादन न विधत्ते ७। मुक्तिमार्गभूतश्रीमदार्हतधर्मे उद्यम कुर्वाण श्रमण बलात्ततश्च्यावयति ८। जिनानामवर्ण वदति ९। जात्यादिभिराचार्योपाध्या- यान्निन्दति १० । आचार्योपाध्यायानां ज्ञानादिगुणगरिष्ठाना विश्रामणान्नपानसपादनादि वैयावृत्त्य न कुरुते ११ । ज्योतिः- शास्त्राद्यधिकरण जनपुरतः प्रकाशयति १२। तीर्थभेद ज्ञानादिमार्गविराधनरूप विधत्ते १३। जानन्नप्यधर्मनिबधनभूतान् वशीकरणादियोगान् पुनः पुन' प्रयुक्ते १४ । कामान् वमित्वा श्रामण्यमादाय प्रार्थयते तानैवैहिकानामुत्रिकांश्च १५ । अबहु- श्रुतोऽप्यन्येन पृष्ट॰ सन् बहुश्रुतोऽहमिति वक्ति तूष्णीं वा तिष्ठति साधव एव बहुश्रुता इति वा वदति, एवमतपस्व्यपि तपस्वी अहमित्यादि वदति १६ । बहुजन गृहादौ प्रक्षिप्यातर्धूमेन हुतवहेन दहति १७। अकृत्य प्राणातिपाताद्यात्मना विधाय

विहितमेनेनेति भापते १८ । निकृत्युपधिभ्यां वंचनशीलः तत्र निकृतिरन्यथाकरणरूपा माया उपधिस्त्वन्यथाकृतं येन प्रछाद्यते १९ । अशुभमनोयोगयुक्तः सर्वं वितथं वक्त्यंतःसमम् २० । सर्वदाऽक्षीणकलहत्वम् २१ । पथि नीत्वा विश्वास्य धनादि समादत्ते देहिनाम् २२ । विश्वस्योपायेनाऽतुलप्रीतिं विधाय तस्यैव दारेषु लुभ्यति २३ । अभीक्ष्णमकुमारः सन् कुमारोऽहमिति वक्ति २४ । अब्रह्मवानपि ब्रह्मवानहमिति वदति २५ । येनैवैश्वर्यं नीतस्तस्यैव वित्तादौ लुभ्यति २६ । केनापि प्रकारेण स्वस्वाम्यंतरा ये प्रवर्त्तते २७ । सेनापतिं राजानं स्वस्वामिनं श्रेष्ठिनं वा हंति २८ । अपश्यन् मायया पश्यामीति भापते देवोऽहमिति वा २९ । देवानामवर्णवादं वक्ति किमेभिः कामगर्द्दभैर्यैरस्माकं कोऽपि नोपकारः क्रियत इति ३० । एतानि त्रिंशन्मितानि मोहस्थानानि संसारकांतारपरिभ्रमणहेतुभूतमोहनीयकर्मबंधनिबंधनतया त्याज्यान्येव कैवल्यपदप्राप्तुकामैः ।

तथा यतिभिरेकत्रिंशत्सिद्धादिगुणाः सम्यग्ज्ञेयाः सम्यक्प्ररूपणीयाश्च । आदौ गुणा आदिगुणा युगपद्भाविनो न तु क्रमभाविनः सिद्धानामादिगुणाः सिद्धादिगुणास्ते चेमे पंचविधसंस्थान ५ पंचभेदवर्ण १० द्विविधगंध १२ पंचप्रकाररसा १७ ऽष्टभेदस्पर्श २५ त्रिविधवेदै २८ र्नियुक्तता । अशरीरत्वम् २९ । निस्संगत्वम् ३० । जन्मरहितत्व३१मित्येकत्रिंशत्सिद्धादिगुणाः । अथवा क्षीणपंचप्रकारज्ञानावरणता ५ क्षीणनवविधदर्शनावरणता १४ क्षीणसाता १५ ऽसातद्विविधवेदनीयता १६ क्षीणदर्शन १७ चरितमोहता १८ क्षीणायुश्चतुष्कता २२ क्षीणशुभा २३ ऽशुभनामता २४ क्षीणोच्च २५ नीचैर्गोत्रता २६ क्षीणांतरायपंचकतेति ३१ ।

तथा श्रमणश्रेष्ठैर्योगानां प्रशस्तमनोवचनतनुव्यापाररूपाणां द्वात्रिंशद्विधानां संग्रहः कार्यः, ते चेमे योगसंग्रहास्तथाहि—

मोहनीय-
स्थानानि,
सिद्धगुणाः,
योग-
सङ्ग्रहाश्च ।

अंतेवासिना श्रीगुरोः पुरतो निर्मायतया निखिलमतिचारजालं सम्यगालोचनीयं एवमालोचनयोगसंग्रहः कार्यः। एवमग्रेऽपि भावना विधेया १। आचार्येण चालोचितातिचारजाललेशतोऽपि न कस्याप्यग्रे प्रकाशनीयम् २। द्रव्यादिचतुर्भेदापत्सु दृढधर्मत्वमेव विधेयम् ३। अनिश्रितोपधाने च यत्नः कार्यः ४। ग्रहणासेवनारूपा द्विविधशिक्षा शिक्षणीया, तत्र ग्रहणशिक्षा सूत्रार्थग्रहणरूपा, आसेवनाशिक्षा तु समाचारीशिक्षणरूपा ५। निष्प्रतिकर्मतनुता विधेया, न पुनर्भोगदत्तवद् विपर्ययः कार्यः ६। तपस्यज्ञातता विधेया ७। अलोभश्च कार्यः ८। तितिक्षा परीषहादिजयरूपा कार्या ९। आर्जवं च कर्त्तव्यम् १०। संयमवता च भवितव्यम् ११। सम्यग्दर्शनशुद्धिश्च विधेया १२। चेतःस्वस्थतारूपः समाधिश्च कर्त्तव्यः १३। आचारोपगः स्यान्न मायां विदध्यात् १४। विनयोपगश्च भवेन्न मानं कुर्यात् १५। धृतिप्रधाना मतिर्धृतिमतिः सच्चकर्त्तव्या १६। संवेगश्च कार्यः, अन्यथा कृता येन प्रच्छाद्यते ईदृग्विधमायारूपः प्रणिधिः परिहरणीयः १८। सुविधिश्च विधेयः १९। संवरश्च कर्त्तव्यो न स्वसंवरः २०। आत्मदूषणपरिहरणं च करणीयम् २१। सर्वकामविरक्तता च चित्ते भावनीया २२। मूलगुणोत्तरगुणविषये प्रत्याख्याने च विधेये २३। २४। व्युत्सर्गश्च द्रव्यभावभेदभिन्नः कर्त्तव्यः २५। अप्रमत्तता च कर्त्तव्या २६। क्षणे क्षणे च साधुसामाचार्यनुप्रेक्षा २७। धर्मशुक्लध्यानसंवरयोगश्च विधेयः २८। मरणान्तकेऽपि वेदनोदये न क्षुभितव्यम् २९। संगाश्च सर्वे ज्ञपरिज्ञया ज्ञेयाः, प्रत्याख्यानपरिज्ञया च प्रत्याख्यातव्याः ३०। प्रायश्चित्तं च सम्यग् विधेयं ३१। आराधना च मरणान्ते कर्त्तव्या ३२। एवं साधुभिर्द्वात्रिंशद्योगसंग्रहाः कार्याः।

अत्र प्रथमयोगसंग्रहे निदर्शनम्। तथाहि–विशालानगर्यां जितशत्रुर्नृपतिस्तस्याट्टणनामा महामल्लो बलवान्। अथ च

सोपारकपत्तने मल्लप्रियः सिंहगिरिनामा महीशः । अट्टणमल्लस्तु प्रतिवर्षं तत्र गत्वा तन्मेदिनीपतिमल्लैः समं युद्धं विधाय जयपताकां समादत्ते । अथ चैवं स्वराज्यम्लानिं विज्ञायान्यदा च वसां पिबंतं बलवंतं मात्स्यिकमेकं निरीक्ष्य स क्षितिपतिना पोषितः । पोषयित्वा च स नृपेनाट्टणेन समं मल्लयुद्धं कारितः । अट्टणो जितस्तेन अट्टणस्तु स्वस्य मानम्लानिं मत्वा प्रतिमल्लं गवेषयन् हारकाहारमल्पोच्चारणे केन पाणिना हलवाहयंतमपरेण च कर्पासवनस्पतीरुत्पादयंतमेकस्मिन् ग्रामे महाबलमेकं हालिकं निरीक्षितवान् । निरीक्ष्य च पोषितो मल्लयुद्धं च शिक्षितस्तेन । अथ च तं सार्थं समादाय सोपारके यथावट्टणः नृपसदसि । मात्स्यिकहालिकमल्लयोर्मल्लयुद्धमभूत् । द्वावप्यपराजिते स्वस्थाने गतौ हालिकमल्लस्त्वट्टणेन पृष्ट्वा गाढप्रहारस्थानेषु सम्मर्दनादिभिः सज्जीकृतः, मात्स्यिकमल्लेन तु मानमत्तंगजाधिरूढतया नृपप्रेषितसंमर्दकेभ्यः प्रहारस्थानानि सम्यग् नोक्तानि । एवं द्वितीयवासरेऽपि तौ समं युद्धौ । तृतीयदिने तु हालिकमल्लेन मात्स्यिकमल्लो दिनद्वयप्रहारजर्जरितदेहो मल्लयुद्धं विदधानस्तथा प्रहारैर्जर्जरितदेहीकृत्य गृहीतो यथा मृतः । राज्ञा तु सत्कारितो हालिकमल्लः । अथोपनयः अट्टणसमाः सूरयः, अपराधास्तु प्रहारसमाः, हालिकमल्लसमस्तु सम्यगालोचकः, यस्तु तानालोचयति स कर्मशत्रुजयपताकामादत्ते, यस्तु तान्नालोचयति स मात्स्यिकमल्लवन्नादत्ते जयपताकाम् १ ।

अथ द्वितीययोगसंग्रहे दृष्टांतः । दंतपुरे दंतचक्रो राजा सत्यवती च तस्य देवी । तस्याश्चान्यदा दंतप्रासादविषयः समुत्पेदे दोहदः । नृपतिना वनचराः समादिष्टा दंतानयनार्थं नगरे चक्षापितं यस्य कस्यचिद्दंतो भवति स मम देयः सम्मुचितः मूल्येन । यस्तु न दास्यति तं विनाशयिष्यामि । अथ च तस्मिन्नेव नगरे धनमित्रनामा व्यवहारी । तस्य च

धनश्री-पद्मश्रीनाम्न्ये द्वे वल्लभे। तयोश्चान्यदा कलहे प्रवृत्ते धनश्रीः प्राह—किमेव भवत्यभिमानमत्तमतगजमारूढा सत्यवत्या इव तव किं दतमयावासो निष्पद्यमानोऽस्ति। पद्मश्रिया च सैव प्रतिज्ञा कृता तां च दतावासविधायनविषयां पद्मश्रीविहितां प्रतिज्ञां विज्ञाय धनमित्रो दुःखी दृढमित्रेण मित्रेण पृष्टो दुःखनिदानम्। तेन च प्रियाप्रतिज्ञाव्यतिकरे यथास्थिते प्रोक्ते दृढमित्रो भिल्लप्रायोग्य मणिकालक्तकादि समादाय गतवानरण्यम्। तत्र च वनचरयोग्य वस्तु वनचरेभ्यो वितीर्य दतान् समादाय तृणपूलकांतः क्षिप्त्वा शकटैरानयामास दृढमित्रः। अथ च नगरप्रवेशे गोसमाकृष्टतृणपूलकपाते दतान्निरीक्ष्य रक्षकनरैर्दृढमित्रो धृतः। धृत्वा च नृपस्याग्रे समानीत'। नृपेण च वध्य इत्यादिष्टः। तावता धनमित्रः समागत्य नृपपदो-र्निपत्य प्रोक्तवान्, 'स्वामिन्! मुच दृढमित्र, मयैते आनायितास्तेन ममैव दड विधेहि' इति तेनोक्ते नृपतिना दृढमित्रः प्रोक्त 'किमेतत् सत्य न वे ?'ति नृपपृष्टो दृढमित्रः प्राह 'नाहमेन जानामि' विस्मयापन्नेन च राज्ञा द्वयोरभये दत्ते सत्यमुक्तवान् यथा जानताऽपि दृढमित्रेण मित्रस्वरूप नोक्तम्, एव गुरुणोऽपि निरपलापेन भवितव्यम् २।

अथापत्सु दृढधर्मताया निदर्शनम्, तत्र प्रथम द्रव्यापदि, तथाहि उज्जयिन्यां धनवसुनामा सार्थपतिः ससार्थश्चचाल चम्पापुरीं प्रति, तत्सार्थे धर्मघोषमुनिरपि। अथ च पथि सार्थे तस्करैर्विलुप्यमाने नश्यज्जनेन सम मुनिरपि महारण्ये प्रविष्टः। तत्र च जने कदमूलाद्यदनपरे जनदीयमानमपि तदनादानो मुनिश्चतुर्विधमप्याहार यावज्जीव प्रत्याख्याय केवलश्रियमासाद्य ययावपुनर्भवमनतशर्मविभवम्। अथ द्रव्यभावापदोर्निदर्शन, तथाहि—मथुरायां यमुनाभिधानो नृपः, स च यमुनावक्रोद्याने आतापनामाददान दडनामानमनगार फलेनाहतवान्। एतन्निरीक्ष्य तद्भृत्यै. स मुनिः प्रस्तरपुजीकृतः पचमानबोधमवाप्य

सिद्धः विमानाधिरूढश्च समाययौ तत्र मघवा । शक्रेण च प्रोक्तो नृपतिर्यदि दीक्षामाददासि तदा मुंचामि । प्रव्रजितो नृपः । ऋषिहत्यास्मृतिं यावन्न भोक्तव्यमित्यभिग्रहं च कृतवान्, अनेन च महात्मना यावज्जीवमपि न भुक्तम् । अस्य प्रत्याख्यापत् दंडस्य तु भावापत् ३ ।

अथानिश्रितोपधाने दृष्टांतस्तथाहि श्रीस्थूलभद्रविनेयौ श्रीमहागिरिसुहस्तिनौ । श्रीमहागिरिसूरयस्तु श्रीहस्तिसूरये गच्छचिंतां वितीर्य व्यवच्छिन्ने जिनकल्पे जिनकल्पतुलनां गच्छप्रतिबद्धतया कुर्वंति स्म । अन्यदा द्वावपि पाटलीपुरं गतौ, तत्र च वसुभूतिः श्रेष्ठी श्रीसुहस्तिसूरिणा प्रतिबोधितः । अथ च तत्कुटुंबप्रतिबोधकृते तद्गृहे सुकृतां देशनां कुर्वति सति श्रीआर्यसुहस्त्याचार्ये श्रीमहागिरिगुरवः समाजग्मुर्विहरणार्थम् । तदा च श्रीसुहस्तिसूरिणाऽभ्युत्थाने कृते श्रेष्ठिना पृष्टं 'किं युष्माकमपि गुरवः ?' तदा च श्रीसुहस्तिसूरिणा यथास्थिते तेषां गुणस्तवे निहिते द्वितीयदिने तद्गृहे बहुमानतोऽनेपणीये कृते श्रीमहागिरिणा सुहस्तिसूरिरुपालब्धः । ततो द्वावपि अन्यत्र विहृतौ तत्र श्रीअजितप्रतिमां नमस्कृत्य श्रीमहागिरिर्गजाग्रपर्वते गंतुमना गतवानेकाक्षपुरं तन्नु प्राग् दशार्णपुराख्यया विख्यातमभूत् । श्रीमहागिरिसूरयस्तु गजाग्रपदे भक्तं प्रत्याख्याय स्वर्जग्मुः । सुहस्तिसूरयस्तूज्जयिन्यां चैत्यवंदनार्थं विजह्रुः । तत्र च भद्रागृहस्थितैरवंतिसुकुमालस्तैर्दीक्षितस्तन्निशि शिवाकृतोपसर्गो गतो नलिनीगुल्मविमाने यथा श्रीमहागिरिभिर्निश्रितोपधानत्वं कृतं तथाऽन्यैरपि मुनिभिर्विधेयम् ४ ।

अथ शिक्षायां निदर्शनं, तथाहि–अतीतकाले क्षितिप्रतिष्ठितपत्तनं जितशत्रुनृपतिः क्षीणवास्तुकं विज्ञाय वास्तुपाठकैरन्यन्नगरं निवासस्थानं विलोकयंश्चनकक्षेत्रं पुष्पितं निरीक्ष्य तत्स्थाने चनकपुरं वासयामास । कालेन तस्मिन्नपि क्षीणवास्तुके वने



दृढधर्मतायाम-निश्रितोपधानस्य, शिक्षायाश्चोदाहरणानि ।

वृषभमन्यारण्यकजीवगणाजेयमालोक्य तत्र ऋषभपुरं निवेशयामास । कालेन तस्मिन्नपि क्षीणवास्तुके कुशस्तम्बवने विशिष्टतर वीक्ष्य कुशाग्रपुरं निवेशितवान् । तस्मिंश्च पुनः पुनः कृशानुना दह्यमाने सति प्रसेनजिन्नृपेण राजगृहनगरं निवासितम् । प्रसेनजितस्तु तनयः श्रेणिकनरपतिः । तस्मिंश्च परासुतां प्राप्ते तत्तनुजा कोणिकेन शोकनिर्गमार्थं चम्पा राजधानी कृता । तस्मिन्नपि कथाशेषे उदायिनृपेण तत्तनुजन्मना पाटलीतरुस्थाने पाटलीपुरं वासितम् । तत्रोदायिनृपे यशःशेषे सञ्जाते मति नदराज्यमभूत् । नवमे च नन्दे राज्यं पालयति कल्पकसचिवशसम्भूतः शकटालनामा मन्त्री समजनि, तस्य च द्वौ तनयौ स्थूलभद्रः सिरीयकश्च । यक्षाद्याश्च सप्तपुत्र्यः । वररुचिविप्रकपटेन शकटाले मृते नन्दे दीयमानाममात्यमुद्रां श्रीस्थूलभद्रो नांगीचकार । सा तु सिरीयकेन स्वीकृता । स्थूलभद्रस्तु श्रीसम्भूतगुरुपार्श्वे प्रव्रजितः । प्रव्रज्य च तेन तथा शिक्षाद्वयं शिक्षितं यथा द्वादशवत्सरपरिचितायापि कोशायां न मनागपि क्षोभितः । स साधुसिंहः । एवमन्यैरपि मुनिभिः शिक्षाद्वयं शिक्षणीयम् ५ ।

अथ निष्प्रतिकर्मतनुतायां विपर्यये नागदत्तदृष्टांतस्तथाहि प्रतिष्ठानपुरे नागवसुः श्रेष्ठी । नागश्रीश्च तत्प्रणयिनी । तयोस्तनुजन्मा नागदत्तः । स च भवविरक्तः प्रव्रज्यां समादाय जिनकल्पप्रतिमापन्नानां पूजातिशयं निरीक्ष्य गुरुभिर्वार्यमाणोऽपि जिनकल्पं प्रपद्य व्यन्तरायतने प्रतिमया तस्थौ । तदा च कयाचित् सम्यग्दृष्टिदेवतया मा विनक्ष्यत्वयमिति विचिन्त्य वनितारूपेण व्यन्तरोपायनव्याजेन मोदकाः समानीय वितीर्णाः । स च तानास्वाद्य प्रतिमया तस्थौ । निशि अतिसारोऽभूद्देवतया गुरूणां निवेदितं यत्सैक्षो व्यन्तरायतने वर्तते । गुरुभिः साधवः प्रेषिताः स समानीत उपाश्रये ।

देवतोक्त्या बिल्वगर्भे दत्ते समाधिभाक् समजनि । शिक्षा च दत्ता यदेवं न पुनर्विधेयमिति यथा नागदत्तेन तनुप्रतिकर्म कारितं तथाऽपरैर्मुनिवरैर्न कार्यम् ६ ।



निष्प्रतिकर्मतनुतायां, तपस्यज्ञातताथ्यां चोदाहरणे ।

अथ तपस्यज्ञाततायामुदाहरणं तथाहि—कौशाम्ब्यामजितसेननामा नृपस्तस्य धारिणीदेवी । तत्र च धर्मवसुगुरोर्विनेयौ धर्मघोषधर्मयशसौ विगतभया च महत्तरा विनयवती च तस्याः शिष्यणी । तया चानशनं प्रपन्नं संघेन च महान् सत्कारश्चक्रे । सा च गीतार्थैर्निर्यामिता दिवं गता । तौ द्वावपि च विनेयौ भक्तप्रत्याख्यानीयपरिकर्म कुरुतः स्म । अथ चोज्जयिन्यां चंडप्रद्योतस्य सुतौ पालकगोपालकाख्यौ । तयोर्गोपालकः प्रव्रज्यां जग्राह । पालकस्य तु द्वौ सुतौ अवंतिवर्द्धनो राष्ट्रवर्द्धनश्च । तयोश्च राज्यं यौवराज्यं च वितीर्य पालकोऽपि निष्क्रांतः । राष्ट्रवर्द्धनस्य तु प्राणेशा धारिणी । तस्याश्च सूनुरवंतिसेनः । अन्यदाऽवंतिवर्द्धनो धारिणीं निरीक्ष्य समुत्पन्नविषयाभिलाषो दूतीमुखेन स्वमनोभावं ज्ञापितवान् । तया च प्रोक्तं—किं बंधोरपि न त्रपा ? तदनु तेन विषयांधेन निजबंधू राष्ट्रवर्द्धनः केनाप्युपायेन हतस्तदनु तद्दयिता धारिणी निजशीलरक्षणकृते सार्थेन समं प्राप्तवती कौशांबीम् । तत्र च समुत्पन्नवैराग्या गर्भमनाख्याय दीक्षामुपाददे महत्तरांतिके । समये च प्रसूता सुतं, स च नाममुद्राभरणैः समं मोचितो नृपांगणे । अजितसेनेन च तत्पुरीपरिवृढेन स गृहीतो मणिप्रभ इति च तस्य नाम प्रदत्तम् । काले च नृपे परासुतां प्राप्ते तस्य राज्यमभूत् । अवंतिवर्द्धनस्तु स्वबंधुवधस्वचित्तवांछितानवाप्त्यादिहेतुभिः पश्चात्तापमापन्नो धारिणीतनयस्यावंतिसेनस्य राज्यं वितीर्य प्रवव्राज । अवंतिसेनस्तु कौशांबीपतिमणिप्रभसमीपे दंडं याचते । तददाने तु सर्वबलेनाऽवंतिसेनः कौशांबीं प्रति धावितः । अस्मिंश्च समये परिकर्मसमाप्तौ तयोर्मुनिपुंगवयोर्मध्याद् यथा विनयवत्याः

सत्कारोऽभूत्तथा ममाप्यस्त्विति विचिंत्य धर्मघोषेन नगरमध्ये प्रपन्नमनशन धर्मयशसा त्वेकांतसुकृतार्थिना जनकृतसत्कार-मनिच्छता कोशांब्यां उज्जयिन्यश्चातराले वत्सकासरित्तीरे गिरिकदरे प्रपेदे चतुर्विधाहारपरिहारप्रत्याख्यानम् । अवतिसेनेन च कौशांब्यां सर्वतो रुद्धयो भयव्याकुलचित्तेन श्रीसघजनेन न कोऽपि सत्कारश्चक्रे धर्मघोषस्य। स च स्वमनोऽभिमत श्रीसघकृत ऋद्धिसत्कारमलभमान कालधर्ममुपेयिवान् । धारिण्या तु साध्व्या सम्यक्स्वरूप निवेद्य तौ बधू युद्धान्निवारितौ द्वावपि मिलितौ । कियत च समय तत्र स्थित्वा उज्जयिना प्रति चलितौ । धारिण्यपि तयोः सवित्री समहत्तरा तत्सार्थे सप्राप्ता । मार्गे च गिरिकदरे त भक्तप्रत्याख्यानिन विज्ञाय तत्र स्थित्वा दिने दिने तत्पूजां चक्रतुः । स समाधिना दिव ययौ । यथाऽनेन धर्मयशसा सत्कारमनिच्छता तपस्यज्ञातता कृता तथान्यैरपि सा विधेया ७ ।

अथ लोभत्यागे निदर्शन, तथाहि—साकेतनगरे पुडरीको राजा। कडरीकस्तु युवराजा। तस्य च यशोभद्रा देवी। तां च निरीक्ष्य पुडरीकनृपः प्रार्थयामास। तथापि यथोर्न लज्जसे इत्युक्ते कडरीको हत'। सा च शीलत्राणकृते सार्थेन सम श्रावस्त्या गता । तत्र च श्रीअजितसेनसूरय' । कीर्तिमती च महत्तरा । तस्याश्चांतिके सा गर्भमनाख्याय प्रव्रजितवती । काले च सा सुत सुषुवे । तस्य च क्षुल्लककुमार इति नामस्थापन कृतम् । शय्यातरीभिः स वर्द्धितोऽष्टवार्षिको दीक्षित. । यौवने च स उन्निष्क्रमितुकामो मातृमहत्तराचार्योपाध्यायवचनैरष्टचत्वारिंशत्सवत्सरांस्तस्थौ । पश्चाद् विसृष्टो रत्नकबलनाममुद्रादि समादाय गतः पुडरीकांतिके साम्राज्यसुखार्थी । तदा च तत्र निशि नृत्य विधाय विभातप्रायायां यामिन्यां किंचिन्निद्रापरा नर्त्तकीं निरीक्ष्य तामुद्दिश्य वृद्धया नाद्याधिकारिण्या गाथा पठिता, सा चेय ' सुट्ठु गाइअ सुट्ठु वाइअ, सुट्ठु नच्चिअ

लोभत्यागः परीषहजयोदाहरणे।

: तृतीयलहर्यां चतुर्थस्तरङ्गः।

सामसुंदरि ! अणुपालिअं बीहराइअं उ, सुमिणंते मा पमायए ॥ १ ॥' एनां च गाथां निशम्य प्रतिबुद्धेन क्षुल्लककुमारेण रत्नकंबलं विश्राणितं। श्रीकांतया च सार्थवाहवल्लभया हारः प्रदत्तः। यशोभद्रनामा युवराजा तु कुंडलं जयसंधिसचिवस्तु कटकं ददौ कर्णपालनामा मिंठस्त्वंकुशम्। निखिलान्यपि लक्षमूल्यानि। नृपेण तु विस्मितेन प्रत्यूषसमये ते सर्वे समाहूय पृष्टास्तत्ताहशदाननिदानम्। क्षुल्लककुमारेण तु श्रामण्यपालनस्थिरीकारस्वरूपं कारणं प्रोक्तम्। सार्थवाहप्रिया तु चिरसमयप्रियविप्रयोगपीडिताऽभूत्तेन तया नूतनदयितं कर्त्तुं कामया गाथाश्रवणे मम भूयान् समयः समतिक्रांतोऽथ किं मम नवीनगृहकरणेनेति मनःस्थिरीकाररूपं कारणं न्यगादि। युवराजामात्यमिंठास्तु वृद्धनृपं हंतुकामा अभूवन् तैस्तु गाथाश्रुतौ नृपवधबंधविमुखतास्वरूपं कारणं निगदितम्। एवं यथास्थितोक्त्या नृपतिः प्रीतः सर्वैरपि क्षुल्लककुमारेण समं श्रामण्यं प्रतिपन्नम्। यथा एभिः सर्वैर्लोभस्त्यक्तस्तथान्यैरपि त्याज्यः ८।

अथ परीषहादिजयरूपतितिक्षायां दृष्टांतस्तथाहि, इंद्रपुरे इंद्रदत्तो नृपतिस्तस्य वल्लभदेवीनां द्वाविंशतिः सुताः। एकामात्यसुता नृपस्य पत्नी। सा नृपेण पाणिग्रहणावसर एव दृष्टा, अन्यदा ताम् ऋतुस्नातां वीक्ष्य नृपेण पृष्टः केयं ? तदोक्तं तैः पार्श्ववर्त्तिभिर्यद् युष्माकं देवी। नृपस्तया सममेकां निशां स्थितो गर्भोऽभूच्च तस्याः। स च प्रच्छन्नतो वर्द्धितो मंत्रिणा चोपाध्यायसमीपे द्वासप्ततिः कला ग्राहितस्तदभिधानं तु सुरेंद्रदत्तः। तद्दिवसप्रसूताश्च चत्वारो दासाः अग्निकः पर्वतको बाहुलिकः सागरकश्च। इतश्च मथुरायां जितशत्रुनृपस्तनूजा निर्वृतिनाम्नी राज्यप्रदायिनी। तदर्थं स्वयंवरमंडपे इंद्रदत्तः सुतैः समं जगाम। तेषु ज्येष्ठतनुजन्मा श्रीमाली। तत्प्रभृतयस्त्वन्यदेवीसुता द्वाविंशतिरपि राधावेधेऽसमर्थास्तदा च नृपे श्याममुखे

जाते सति मन्त्रिणा सुरेंद्रदत्तः समानीतः। कथितं च यदयं युष्मत्तनयः साधयिष्यति राधावेधम्। नृपेणोक्तं कथमयं मत्सुतु स्तदा मन्त्रिणा तद्गर्भदिन भोगसमये च यदुक्तं तत्सर्वं कथितम्। तदनु जातप्रत्ययेन नृपेणोक्तः स, 'पुत्र! साधय राधावेधम्।' तदनु स नृपमुपाध्याय च प्रणम्य द्वाविंशतिकुमारेषु चतुर्षु दासेषु च प्रत्यूहं विदधत्सु अन्यस्मिंश्च कृपाण-पाणिपुरुषद्वैते भीतिं कुर्वति वसु(८)मितचक्राणां छिद्राण्यवसीयान्यत्र कुत्रचिन्मनोनिवेशमकुर्वता सुरेंद्रदत्तेन राधावामन यनवेधो विदधे। एषा द्रव्यतितिक्षा। अथ भावतितिक्षायामुपनयः। यथा सुरेंद्रदत्तस्तथा यतिः, यथा दासास्तथा चत्वारः कषायाः। यथा कुमारास्तथा द्वाविंशतिः परीषहा। यथा पुरुषौ द्वौ तथा रागद्वेषौ। यथा राधावेधस्तथा रत्नत्रयाराधना। यथा निर्वृतिकन्यावरणं तथा सिद्धिवधूपाणिग्रहणम् ९।

अथार्जवे उदाहरणं, तथाहि—चंपायां कौशिकार्यं उपाध्यायस्तस्य द्वौ पाठकौ, अंगो रुद्रकश्च, अंगस्य तु ऋजुतया अंग-ऋषिरिति नामकृतं रुद्रकस्य तु ग्रंथिच्छेदक इति। अन्यदा चोपाध्यायेन तौ दारुभारार्थं प्रेषितौ। तदांगकोऽरण्ये गत्वा दारुभार मानीय संध्यासमये पश्चान्निवृत्तः। रुद्रकस्तु दिने यत्र तत्र स्थित्वा विकाले नगराद्बहिर्गतोऽगर्षिं दारुभारमानीय नगराभि-मुखमागच्छन्तं निरीक्ष्य चिंतयामास यन्मामुपाध्यायस्ताडयिता, अस्मिंश्च समये ज्योतिर्यशा वत्सपालिका सूनोः पथकस्य भक्त वितीर्य दारुभारं शिरसि विधाय समायांती समभूत्। रुद्रकेण सा गर्त्तायां क्षिप्ता, मारयित्वा दारुभारं च तस्याः समादाय स समापयावन्यायनेन उपाध्यायस्य पुरतश्चोच्चिवान् 'यत्तव सुंदरपाठकेन ज्योतिर्यशा विनाशिता' तदाकर्ण्य समुत्पन्न-मन्युनोपाध्यायेन स निष्काशितो वने गतः शुभाध्यवसायेन जातजातस्मृतिः प्राप पंचमावबोधम्। तदा देवैरुक्तं यदेतस्य

रुद्रकेनाभ्याख्यानं दत्तम् । एतदाकर्ण्य जनेन हील्यमानो रुद्रकश्चिंतयति स्म 'आत्मन् ! मा कोपं कुरु जनः सत्यमेव वक्ति' स एवं चिंतयन्नात्मानं निंदन् प्रत्येकबुद्धः समजनि । उपाध्यायः सप्रियोऽपि संवेगमापन्नः प्रव्रजितः । सर्वेऽपि केवलश्रियमवाप्य सिद्धिं गताः । यथैभिः सर्वैरार्जवात्स्वार्थसाधनकृतं तथान्यैरपि विधेयम् १० ।

अथ शुचिना संयमवता भाव्यमित्येकादशो योगसंग्रहस्तत्र प्रथमं देशसंयमनिदर्शनं, तथाहि–सौर्यपुरे सुरांबरनामा यक्षस्तत्र धनंजयः श्रेष्ठी । भार्या सुभद्रा । सुतहेतवे सुरांबरयक्षाय ताभ्यां महिषशतं मानितम् । अथ च दैवयोगात् सुतः समजनि । अत्रांतरे तत्र श्रीवीरस्वामी समवसृतस्तद्देशनां च निशम्य श्रेष्ठिनाऽणुव्रतानि स्वीकृतानि । यक्षेण श्रेष्ठिसमीपे महिषशतं मार्गितम् । स व्रतभंगभयान्न प्रदत्तवान्, किंतु प्रोक्तवान् 'यन्महिषस्थाने निजवपुः शतखंडानि विधाय दास्ये' । अथ कतिपयेषु तनुखंडेषु विहितेषु प्रतिबुद्धो यक्षस्तमक्षततनु निर्माय गतः स्वस्थाने । अथ सर्वसंयमरूपे शौचे दृष्टांतस्तथाहि–सौर्यपुरे समुद्रविजयो नृपतिर्यदा समभूत्तदा यज्ञयशास्तापसः सोममित्रा च तत्प्रिया । तयोः सुतो यज्ञदत्तः । सोमयशाश्च तद्वल्लभा तत्सूनुर्नारदः । तौ एकांतरोपवासपारणके उंछवृत्त्या भोजनं कुरुतः स्म । अन्यदा नारदमशोकशाखिमूले व्यवस्थाप्य तौ गतावुंछकृते । तदा च वैताढ्यनगाद् गच्छद्भिर्जृंभकसुरैस्तमवधिना स्वकीयच्युतं विज्ञायानुकंपयाशोकच्छाया स्तंभिता पश्चान्निवृत्तैश्च तैः स गृहीत्वा प्रज्ञप्त्यादिविद्याः पाठितः । एवं स सिद्धविद्यो मणिपादुकाभ्यां कनककुंडिकया च समं संचरति वियति । अन्यदा च स द्वारवतीं प्राप्तो वासुदेवेन पृष्टः 'किं शौचमिति ?' स एवं पृष्ट उत्तरं दातुमशक्तः समुत्थाय पूर्वविदेहे गतस्तत्र युगबाहुवासुदेवेन श्रीसीमंधरतीर्थंकरः पृष्टः किं शौचमिति ? जिनपतिः प्राह 'सत्यं शौचम्' स एवं



आर्जव-शौचो-दाहरणे ।

निशम्य पुनः पश्चिमविदेहेऽगात्तत्र च युगधरस्वामी महाबाहुवासुदेवेन पृष्टस्तदेवोत्तरं प्राप्तः । एवं प्राप्तोत्तरं स नारदो द्वारिकायां गत्वा कृष्णाग्रतः प्रोक्तवान् सत्यं शौचमिति । पुनः पृष्टः स हरिणा 'किं सत्यमिति' तदसंविदानश्चेतसि तदर्थं विचारयन् जातजातस्मृतिः प्रत्येकबुद्धः समभूदध्ययनं च कृतवान् । एवं यथा शौचेन नारदऋषिणा योगसंग्रहः कृतस्तथान्यैरपि विधेयः ११ ।

अथ सम्यग्दर्शनशुद्धौ निदर्शनं, तथाहि–साकेतपुरे महाबलो नृपतिरन्यदा स्थानसमासीनो दूतं पृष्टवान् 'किं नास्ति मम यदन्यनृपतीनां राज्ये वर्तते' तेनोक्तं 'चित्रसभा नास्ति' इति तेनोक्ते नृपतिना नियोगिनस्तदर्थमादिष्टाः । तैस्तां विधाप्य विमलप्रभाकरनाम्नोश्चित्रकृतोश्चित्रयितुमर्पिता द्वीकृत्य जवनिका चांतरे बद्धा । तयोर्मध्यादेकेन षण्मास्यां तस्या अर्द्धं चित्रितम् । एकेन तु भूमिरेव निर्मला कृता । अत्रांतरे राजा चित्रसभानिरीक्षणाय समाययौ । तदा च जवनिकाऽपनयने कुड्ये तच्चित्रं निखिलमपि प्रतिबिंबितं निरीक्ष्य 'हे ! कीदृग् विज्ञानं कृतं'मस्तीति तुष्टचित्तेन नृपेण तस्य प्रसादः कृतः । सा भूमिश्च तथैव स्थापिता । अथोपनयो यथा विमलायां कृतायां भूमौ चित्रमरचितमपि प्रतिबिंबितम्, एवं दर्शने सुविशुद्धे क्रियाऽपि प्रतिबिंबिता १२ ।

अथ समाधौ दृष्टांतस्तथाहि–सुदर्शनपुरे शिशुनागनामा गृहपतिस्तद्दयिता सुयशानाम्नी । तावुभौ श्रमणोपासकौ तत्सूनुः सुव्रतो गर्भवासेऽपि संवेगवान् यौवने पितरावापृच्छ्य प्रव्रज्यां जग्राह गीतार्थः सन्नेकाकिविहारप्रतिमां प्रपन्नः शक्रप्रशंसया सुमराभ्यां परीक्षितस्तत्रैकेन कुमारब्रह्मचारीति प्रशंसितोऽपरेण तु वंशच्छेदकृदिति निंदितस्तथापि सममनास्तदनु विषयप्रसक्त

मातापितृदर्शनं तत्सारणं तदाक्रंदः सर्वऋतुविकुर्वणानि दिव्यवनितासविभ्रमेक्षणतदालिंगनदाने एवं नानोपसर्गैश्चाल्यमानोऽपि न क्षुब्धः । किंतु चित्तैकाग्रतारूपसमाधिमापन्नः पंचमावबोधमवाप्य ययौ निश्रेयसम् १३ ।

आचारोपमः स्यान्न मायां कुर्य्यादत्रोदाहरणं—पाटलीपुरे हुत्वासनो ब्राह्मणः श्रमणोपासकस्तद्वल्लभा ज्वलनशिखा । तत्सुतौ ज्वलनदहनौ । एते चत्वारोऽपि संवेगमापन्नाः प्रव्राजितास्तेषु ज्वलनः प्रकृत्या ऋजुर्दहनस्तु मायाबहुलः, द्वावपि परासुतां प्राप्तौ सौधर्मेन्द्रस्याभ्यंतरसभायां पंचपल्योपमायुःस्थिती देवौ जातौ । अन्यदा तौ भक्त्यामलकल्पायामंबशालवने श्रीवर्द्धमानजिनपुरतो नृत्यं चक्रतुः । तत्र ज्वलनसुरः करोति ऋजुरूपाणि दहनदेवस्य तु रूपवैपरीत्यमभूत्तदा श्रीगौतमगण-भृता पृष्टः स्वामी रूपवैपरीत्यकारणं प्राग्जन्मविहितमायादोषरूपमाख्यत् १४ ।

अथ विनये निदर्शनं तथाहि, उज्जयिन्यां नगर्यामंबऋषिर्वाडवः साधूपासकस्तत्प्रिया मालुका । तयोर्निम्बसुतः प्रियायां च मृतायां निंबेन समं स निष्क्रांतः । सुतस्तु दुर्विनीततया पितृणोज्जयिन्यां पंचस्तूपाश्रयशतेषु नीतः किंतु न केनापि स्थापितः, तदनु तुद्दुःखेन पिता तारं रुरोद, तदा सुतेन पृष्टो रोदनकारणं दुर्विनीततया क्वचिदस्थापनमाचचक्षे । तदा सुतेनोक्तं मम को दोषो भवतैव निंब इत्यभिधानं दत्तम् । पुनर्विनीततायामादृतायां तेषु तेषूपाश्रयेषु स साधुभिर्बहुमानितः । तस्माद्विधेयतैव विधेया १५ ।

अथ धृतिर्मनःस्वस्थता तत्प्रधाना मतिर्धृतिमतिस्तत्रोदाहरणं तथाहि, पांडुमथुरायां पंचपांडवाः समभूवन् । तद्वंशे चान्यः कोऽपि नृपः समभूत्तत्तनये मतिसुमती श्रीगिरनारे चैत्यवंदनाय सुराष्ट्रसु समायांत्योर्जलमार्गे पोते निविष्टे । अत्रांतरे

समाधि—माया-ऽकरण—विनय—धृत्युदा-हरणानि ।

उत्पातेन पोते भिन्ने जने स्वस्वेष्टदैवतस्मृतिपरे ते धृतिमती सयमयोगमारूढे शुक्लध्यानैकताने सिद्धे केवलावबोधमवाप्य । सुस्थितलवणाधिपतिदेवेन च तन्निर्वाणमहिमा निर्मितस्तत्र स्थाने देवोद्योतेन च तत्प्रभासतीर्थं समजनि १६ ।

अथ संवेगदृष्टांतस्तथाहि, चंपाया मित्रप्रभो नृपतिस्तत्पट्टदत्री च धारिणी । धनमित्रश्च तत्र पुरे सार्थवाहस्तत्प्रिया च धनश्रीस्तयो' सुतः सुजातोऽस्मिन् कुले इति जनश्लाघया सुजाताभिधानो रूपनिधिः । सर्वेऽपि ते सुश्रावकाः, तत्रैव च पुरे धर्मघोपनामाऽमात्यस्तत्प्रिया प्रियगुनाम्नी सा निरीक्ष्य सुजात तद्वल्ललितानि विधत्ते । तन्निरीक्ष्य सचिवेन चिंतित नून विनष्टमत.पुरमिति कूटलेखप्रयोगो विदध उपायेन मारणाय । स चैव भूपतिविपक्षनृपप्रहितलेखहस्ता नरा नृपाग्रतः समानीता लेखश्च सुजातनामांकितस्तन्मध्ये लिखितमस्ति तवार्द्धराज्य चेत् मित्रप्रभ मारयसे । लेख वाचयित्वा कुपितेन नृपेण ते नरा वध्या आदिष्टा सचिवेन ते छन्न स्थापिताः । जनापवाद रक्षणार्थमुपायेन मारणाय नृपतिना सोऽरक्खुरीपुर्यां चद्रध्वजसमीपे प्रेपित । नृपेण तु तस्य लेखो दर्शितः सुजातेन निगदित यज्जानासि तद् विधेहि । तेन प्रच्छन्न सस्थाप्य चद्रयशाभगिनी प्रदत्ता सा त्वग्दोपिणी सुजातेन प्रतिबोधिता श्रीमदार्हतधर्ममाख्याय । सा भक्त प्रत्याख्याय सुर समभूत् । अवधिसवेदनेन च स्वरूप विज्ञाय नृप पुरोपरि पर्वतनिकुर्वणया भापयित्वा सुरः सुजात स्वस्थाने मुमोच । सुजातस्तु भूपतिमापृच्छ्य पितृसयुतः श्रामण्यमादाय सिद्धिमगात् । मत्री तु भूपतिना निर्विपय. कृतो भ्रमन् राजगृहे स्थविरसमीपे प्रव्रज्यामादाय गीतार्थीभूय, विहरन् वारत्तकपुरे गतः । इतोऽग्रेतनः सबधः प्रागुक्तोऽपि प्रस्तावागतत्वात् पुनरप्युच्यते । तत्र रत्नकपुरेऽभ यसेनो नृपस्तत्सचिवो वारत्तकः, तद्गेहे विहरणार्थं गतः । स धर्मघोपमुनिराज्यादिसयुतपायसमध्याद् बिंदुमेकमालोक्य

पतितमनात्तभिक्ष एव निर्ययौ तन्निकेतनात्। वारत्तकामात्यस्तु वातायनगतस्तत्र निरीक्ष्य मक्षिकाद्युपप्लवशुभाध्यवसायतः समुत्पन्नजातिस्मृतिर्देवतादत्तलिंगः प्राव्राजीत्। स च विहरन् सुसुमारपुरे गतः। तत्र धुंधुमारनामा नृपस्तस्याऽङ्गारवती सुता श्राविका। तदुपरि रुष्टपरिव्राजिकया तद्रूपं चित्रयित्वा विशालायां चंडप्रद्योतस्य दर्शितं, चंडप्रद्योतेन च तद्रूपमालोक्य दूतप्रेषणेन सा मार्गिता तत्पितृसमीपे, तेन तस्या अविश्राणने चंडप्रद्योतेन सर्वबलेन तत्पुरं वेष्टितम्। नृपतिना तु पृष्टो नैमित्तिको निशि शिशून् भापयामास। ते तु भयान्नागगृहस्थितं वारत्तकऋषिपार्श्वे गतास्तेन च मा बिभीतेत्युक्ते नैमित्तिकेन तन्निमित्तबलान्नृपस्य जये प्रोक्ते चंडप्रद्योतेन समं संग्राममकार्षीत्। युद्धे चंडप्रद्योतं बध्वा राज्यमध्ये समानीय बंधनान्मुक्तांगारवती दत्ता तस्मै नृपतिना महामहेन, अन्यदा तेन सा पृष्टाऽल्पबलेन भवत्यास्तातेन कथमहं जितस्तयोक्तं मुनिवचनवृत्तांतं शिशुव्यतिकरं स्मृत्वा तत्स्खलितप्रतिक्रांते। एवं चंद्रयशसुजातधर्मघोषवारत्तकवत् संवेगेन योगसंग्रहो विधेयः १७।

अथ प्रणिधिस्त्याज्य इत्यत्रोदाहरणं तथाहि–भृगुकच्छनगरे नभोवाहनं रुणद्धि। नभोवाहनस्तु कोशबलवत्तया वैरिशिरः समानयिनां द्रव्यलक्षं वितरति। एवं व्रजति समयेऽन्यदा शतवाहनसचिवो निर्विषयी कृतोऽहं नृपतिनेति कपटं कृत्वा गुग्गुलभारमादाय समायातो भृगुकच्छे देवकुले स्थितो गुग्गुलभगवन्नामाहमिति स्वं ख्यापयन् नृपतिना तु स सत्कृत्य सचिवः कृतः। तेन च सचिवेन राज्यं सुकृता साध्यमिति छद्मना देवकुलकूपतटाकादिषु विश्वास्य सर्वधनव्ययं कारितः। तदनु शातवाहनेन सुखेनैव विजितः। यथाऽनेनामात्येन प्रणिधिं विधाय नृपवंचनं कृतं तथा नान्यैर्विधेय एतद्द्रव्यप्रणिधौ निदर्शनम्। अथ भावप्रणिधौ तत्तथाहि–भृगुकच्छे श्रीजिनदेवसूरिभिर्भदंतमित्रकुणालाभिधानौ भ्रातरौ सुगत-

मतमावितौ विजितौ राजसमक्षम् । तदनु तौ चेदेतेषां सिद्धांतः पठ्यते तदैते जैना जेतु शक्यते । तद्युक्ति-प्रतियुक्ति-विज्ञतयति विचिंत्य श्रीमदर्हतागमपठनार्थं प्रणिधिना प्रव्रजितौ तत्सूरिसमीपे । तदनुतौ त पठतो निकृतिं विहाय भावयतित्व प्रपन्नौ यथैताभ्यां प्रणिधिरुपयुक्तस्तथान्यै. सुकृतार्थिभिस्त्याज्यः १८ ।

अथ सुविधौ दृष्टांतस्तथाहि-द्वारवत्या कृष्णस्य द्वौ वैद्यौ धन्वतरिर्वैतरणीनामानौ । आद्योऽभव्यो द्वितीयस्तु भव्यः । स च ग्लानसाधून् प्रियवाक्येण वक्ति यद् यस्य यस्य वक्तव्यम्, औषधमपि प्रासुक चेत्तत्तस्य स्यात्तदा साधूनां स तद्दत्ते । द्वितीयस्तु यत्सावद्य तदेव वक्ति यतीनां, न कल्पते अस्माकमेतदिति तैरुक्ते स प्रतिवक्ति न मया मुनीनां कृते वैद्यकमधीतम् । एव तौ द्वावपि महारम्भमहापरिग्रहग्रस्तौ द्वारवत्यां चिकित्सां कुरुतः स्म । अन्यदा वासुदेवेन श्रीनेमिजिनः पृष्टो भगवन्नेतौ बहुजीवघात विधाय क गमिष्यतो' भगवतोक्त ' धन्वतरिर्वैद्यः सप्तमनिरयेऽप्रतिष्ठाने निरयावासे नैरयिको भविष्यति, वैतरणीवैद्यो विन्ध्यगङ्गापगयोरन्तराऽटव्यां यूथपतिर्वानरो भविष्यति ।' अथ चायुःपूर्णतायां तौ जिनोक्तस्थानयोः समुत्पन्नौ, अथ चान्यदा साधव. सार्थेन सम तस्यामटव्यां गच्छति स्म । एव तेषां गच्छतामेकस्य मुनेः पादे कटको भग्नः । स च न निस्सरति । तदा तैः साधुभिरुक्त 'वयमत्र तिष्ठामस्त्वत्पार्श्वे ।' तदा तेनोक्त 'मा सर्वेषां मृतिर्भवेद्, यूय यात अहमनशन विधास्यामि' इति तेनोक्ते साधव' सार्थेन सम गता. । स चानशनकृते जगाम स्थण्डिलेऽनवद्ये । अथ च यूथेन सम वानरपतिस्तत्र समाजगाम । तदा चाग्रेतनैर्वानरैस्त यतिं निरीक्ष्य किलिकिलायितम् । त च किलिकिलायित निशम्य यूथपती रुष्टः पुरतो विलोकयन् यतिमीक्षाचक्रे । त च निरीक्ष्येहापोहादिक विदधानस्य तस्य जातिस्मृतिः. समुत्पन्ना शुभ-

परिणामेन । तदा च स पूर्वभवं स्मरँस्तस्य यतेश्चरणात् शल्योद्धरिण्योषध्या शल्यं कर्षयित्वा संरोहिण्यौषध्या सज्जीचकार तच्चरणम् । तदन्वक्षराणि लिखित्वा तं पूर्वभवस्वरूपं मुनेर्निवेदयामास । तेनापि संश्रुतोऽभूत् । तदनु मुनिना तस्य धर्मे प्ररूपितेऽनशनं निर्माय धर्मध्यानपरः सहस्रारे समुत्पन्नः स्वायुःक्षये । स यूथपतिस्तत्र च समुत्पन्नोऽवधिना स्वं वपुस्तं यतिं च निरीक्ष्य तत्रागतो देवर्द्धिं दर्शयित्वा कथयामास 'युष्मत् प्रसादेनेयं मया ऋद्धिः प्राप्ता, यद् युष्मत् प्रियं तत् करोमी'-त्युदीर्य यत्र तेऽन्ये यतयस्तत्र तं मुमोच । साधुभिरुक्तं 'कथं त्वमिहागत'स्तदा स सर्वं तत्स्वरूपं प्रोक्तवान् । स च सुरस्त-तश्च्युतो मर्त्यजन्मनि चारित्रमासाद्य मुक्तिं गमिष्यति । यथा अनेन वैद्यभवे मुनीनां प्रासुकौषधकथनादिसुविधिः कृत-स्तथाऽन्यैर्विधेयः १९.।

अथ संवरः कार्यो न त्वसंवर इत्यत्र व्यतिरेकोदाहरणं दर्श्यते, तथाहि–अन्यदा पद्मनंदवासिनी पद्मादेवी राजगृहे श्रीवर्द्धमानस्वामिनोऽग्रे नृत्यपूजां विधाय यातवती स्वस्थानम् । तदा च श्रेणिकनृपः श्रीवीरमपृच्छत् 'भगवन् ! केयं देवी ?' भगवानाह 'वाणारस्यां भद्रसेनः श्रेष्ठी नंदा च तद्दयिता । तयोः सुता नंदश्री वैरविरहिता कोष्ठकचैत्ये श्रीमत्पार्श्वपरमेश्वरे समवसृते तद्वचसा प्रतिबुद्धा वैराग्यरंगतः प्रवव्राज । सा च गोपालिकामहत्तरांते पूर्वस्तूग्रविहारेण विहृत्य पश्चादवस-न्नतां गता करचरणादिप्रक्षालनं विदधाना वारिता महत्तराभिः । स्मारणावारणादिसोढुमशक्नुवती पृथग्वसतौ स्थिता प्रांतसमयेऽपि तदनालोच्य कालधर्मं गतानशनेन हिमवति पर्वते पद्मह्रदे लक्ष्मीदेवता समभवद्देववेश्या । यथैतया संवरो न विहितस्तथाऽन्यैर्न विधेयम् २०।

अथारम्भदोषोपसंहारे निदर्शनं, तथाहि—द्वारिकापुर्यामर्हन्मित्रः श्रेष्ठी तत्प्राणप्रिया चाऽनुद्धरी। तयोश्च तनयो जिनदेवः। सर्वाण्यपि श्रमणोपासकानि। अन्यदा जिनदेवस्य विषमतमामये समुत्पन्ने भिषग्वरै 'रामिष भक्षये 'त्युक्ते स्वजननिर्बंधे निराचाकार, पातकमेरामयमूलं मांसास्वादनं तु तदधिकतममेव भवेदिति सर्वदोषोपसंहरणकृते स्वयम एव श्रेयानिति विचिन्त्य स प्रतिपन्नवान्स्वदारापरे च कर्मक्षयान्निरामयतां गतः शुद्धतमाध्यवसायतः केवललक्ष्मीं लब्ध्वा गतः सिद्धिम्। यथाने नारम्भदोषोपसंहारः कृतस्तथाऽपरैर्विधेय २१।

अथ सर्वकामविरक्ततायां दृष्टांतस्तथाहि, उज्जयिनीनगर्यां देविलासुतो नृपस्तत्पट्टदेवी चानुरक्तलोचना। अन्यदा सा स्वपतिमूर्ध्नि पलितं निरीक्ष्य प्राह 'प्रिय! धर्मदूतः समागतः' इति तयोक्ते वैराग्यात् पद्मरथसुतं राज्यधरं विधाय प्रियान्वितस्तापसाश्रमे तापसः समजनि। सगतकश्च तद्भृत्योऽनुमतिका च दासी तापसीं दीक्षामादाय कालांतरे उत् प्रव्रजितो देव्या च प्रव्रज्यावसरे गर्भो नाकथि। पश्चात् पुत्र्यां प्रसूतायां प्रतिरोगतो विपन्ना देवी तनया तु कृतार्द्धसंकाशा-भिधा जनकेन वर्द्धिता यौवनं गता। अन्यदा सा श्रांतस्य स्वपितुस्तापसस्य विश्रामणां कुर्वाणासीत्। तदा च स तत्कर स्पर्शतद्यौवनमोहितो रागपूरपूरितांतरगतयालिंगनाय धावितोंतरोटजदारुण्यापतितश्चिंतयामास चित्ते ममेदमैहिकं फलमना-चारस्य परलोके तु न ज्ञायते तत्कीदृश कटुतमविपाकं भावीत्यादि चिंतयन् समुत्पन्नजातिस्मरणः प्रत्येकबुद्ध सर्वकाम-विरक्तात्मसन्नयन विधाय तनयां साध्वीनां वितीर्य सम्यक्श्रामण्यमनुपाल्य च ययौ निर्वृतिम्, तनयापि च। यथाऽनेन कामान् कटुतमविपाकानवधार्य सर्वकामविरक्तिः कृता तथाऽपरैरपि शिवशर्मार्थिभिः सा विधेया २२।

अथ मूलगुणप्रत्याख्यानोदाहरणं, तथाहि-साकेतपत्तने शत्रुंजयनामा क्ष्मापतिस्तत्र च जिनदेवनामा श्रमणोपासकः। स च दिग्यात्रायां कोटीवर्षपुरे गतस्तत्र चानार्यचिलातनृपस्य रत्नादिप्राभृतं चकार नृपेण चोक्तः स 'कैहानि प्राप्यंते' तेनोक्त 'मन्यराज्ये' चिलातस्य च तत्रागमनसमीहायां भूपतिना तस्याऽभयं दापयित्वा स तत्र समानीतः। श्रावकेण अन्यदा च श्रीवीरे समवसृते शत्रुंजयनृपे सपरिकरे सपौरजने च वंदनार्थं निर्गते सति चिलातेनोक्तः श्राद्धः 'क्वायं जनो याति' तेनोक्तं स 'एष रत्नवणिगायातोऽस्ति, तत्रैव गच्छन्नस्ती'त्युदीर्य चिलातेन समं ययौ जिनदेवः स्वामिसमीपे। स्वामिना च द्रव्यभावरत्नरूपं रत्नद्वैतं वर्णितम्। तत्र च भावरत्नानि ज्ञानादीनि निगदितानि। तच्च समाकर्ण्य प्रतिबुद्ध-श्चिलातः श्रामण्यमंगीकृतवान् २३।

अथोत्तरगुणप्रत्याख्याने दृष्टांतस्तथाहि, वाणारस्यां नगर्यां मासान्मासाद् भोजिनौ धर्मघोषधर्मयशसौ मुनी वर्षासु स्थितौ। तौ चतुर्थपारणके प्रथमपौरुष्यां स्वाध्यायं द्वितीयायां पौरुष्यां तु ध्यानं विधाय पात्रकाण्युद्ग्राह्य चलितौ मार्गे चोष्णा-भिहतौ तृषाक्रांतौ गंगापगां समुत्तीर्णौ मनसापि तत्पानीयं पातुमनिच्छंतौ। तदा च तद्गुणावर्जिता गंगादेवता गोकुलानि विकुर्वयित्वा तयोर्दध्यादिविहरणनिमंत्रणामकार्षीत्। तदा च तावुपयुज्य तं देवतापिंडमनधार्य न गृहीतवंतौ, तदनु देवतया दुर्दिनं विकुर्वितं, तदनु तौ ग्रामं गतौ पारणककृते। यथैताभ्यां पिंडविशुद्धिरूपोत्तरगुणप्रत्याख्यानखंडनं न व्यधायि तादृक् संकटेऽपि, तथान्यैरपि तत्खंडनं न विधेयम् २४।

अथ द्रव्यभावव्युत्सर्गे निदर्शनं तथाहि, कलिंगेषु दधिवाहनपद्मावतीसूनुः करकंडुर्नृपतिः। स च गोकुलप्रियः तेन



आत्मदोषो-
पसंहार-
सर्वकाम-
विरक्तता-
मूलोत्तर-
गुणप्रत्या-
ख्यान-
द्रव्यभाव-
व्युत्सर्गो-
दाहरणानि।

चैकः मलक्षणः सौरमेयः पोषितः पयोभिः। स च यौवन गतः समभूद् युद्धेऽन्यवृषभाजेयः। अथ च स महाकायः स्थविरत्वे पङ्के परिधृष्यमाणस्तेन दृष्टः। दृष्ट्वा च स चिंतयामास यस्य शब्दमात्रेणापि सुतीक्ष्णशृंगा बलिष्ठा दीप्ता अपि वृषभा भग्नाः प्राक्, स एव सांप्रत गतदर्पो गलन्नेत्रश्चलद्दशनरदच्छद पङ्कपरिघर्षण क्षमते। तद्धिगस्तु ससारासारतां यत्रेदृशी विषमदशा तादृग्विधशक्ततायुक्तस्यापि समायातेत्यादि चिंतयन् प्रत्येकबुद्धो विजहार वसुधरावलये ग्रहीतव्रतः। अथ द्विमुखसबधस्तथाहि—पाचालेषु द्विमुखनामा नृपः। स चान्यदाऽनेकपताकापरिमडितजननिवहपूजित महेंद्रध्वजमपश्यत्। अथ च तमेव कियद्दिनातिक्रमे क्षमायाममेध्योपरि निपतित गच्छदागच्छज्जनेनोपानत्पदादिभिश्च घट्यमान निरीक्ष्य प्रतिबुद्धः प्रत्येकबुद्ध समभूत्। अथ नमिकथा। मिथिलायां युगबाहुमदनरेखासूनुर्नमिनामा नृपस्तस्य चान्यदा वैधैरमाप्यः षण्मासावधिमहादाहज्वरः समभूत्। तस्य किंचिदुपशांतिकृते विलेपनार्थं देव्यश्चदनघर्षण कुर्वंति। तदा च वलयध्वनिना भवनमापूर्यते नृपो भणति मम कर्णाविर्दतस्तदनु देवीभिः सर्वाणि वलयान्यपनीय मांगल्यकृते एकैक वलय स्थापितम्। तदा चैकत्वान्नोत्पद्यते ध्वनिः। नृपेण पृष्ट 'किं न श्रूयते वलयरवः' परिवारकैरुक्त 'मेकत्वात्तेषाम्।' एतदाकर्ण्य नृपश्चिंतयामास बहूनां दु ख न त्वेकस्य तद् यद्यय रोग शाम्यति तदा प्रव्रज्या स्वीकरोमि। तदा च कार्त्तिकी-पूर्णिमा वर्त्तते। स चैव चिंतयित्वा प्रसुप्त. प्रभातप्रायायां यामिन्यामात्मान मेरूपरि श्वेतकुजराधिरूढ पश्यति स्म। अथ च तूर्यरवेण प्रतिबुद्धो निरामयो हृष्ट–तुष्ट–श्चिंतयामास स उत्तमतम स्वप्नो मया ददृशे। पुनश्चिंतयामास एवंविधगुणः पर्वत क्वापि मया दृष्टपूर्वोऽस्ति तस्य चैव चिंतयतो जातिस्मृतिरुत्पेदे। य" पूर्वं मनुजजन्मनि श्रामण्यमनुपाल्य पुष्पोत्तरविमाने

द्रव्य-भाव-व्युत्सर्गोदाहरणम् ।

देवभवं गतस्तत्र च जिनजन्ममहे मयायं मेरुमहीधरः समभूद् दृष्टपूर्वः । स च प्रत्येकबुद्धः शचीपतिना परीक्षितः क्ष्मामंडले विजहार । अथ नगगतिकथा । गंधारजनपदे सिंहरथनामा नृपः । स चोत्तुंगनगे कनकमालास्वच्छभाममीपे पंचमपंचमदिने विद्याबलेन गच्छतीति जनकृतनगगतिनाम्ना विश्रुतः । अन्यदा वसंतर्तौ बहिर्गच्छता तेन वीक्षांचक्रे चूतः कुसुमितः । तं च निरीक्ष्य क्ष्मापतिना मंजर्येका गृहीता । तदनु पश्चादागच्छत्सैन्येन पत्रपुष्पफलपलालादिगृह्णता काष्ठशेषः स कृतः । अथ पश्चान्निवृत्तेन नृपेण पृष्टोऽमात्यः ‘ क्व स सहकारतरुः ’ ? मंत्रिणा दर्शितः, राज्ञोक्तं ‘ कथमयमेवंविधः समभूत् ? ’ सचिवेनोचे ‘ यदा भवद्भिरेतस्यैका मंजरी गृहीता, तदा पश्चादागच्छत्परिवारेण पत्रपुष्पादिगृह्णता दारुशेषः कृतोऽसौ ’ एवं तच्चूतस्वरूपं निरीक्ष्य स चेतसि चिंतयामास, नूनं यावत्समृद्धिस्तावदेव शोभा समृद्धयस्त्वेवंविधचंचलस्वरूपा, इत्यादि चिंतयन् स समजनि प्रत्येकबुद्धस्तदनु विजह्रे वसुधायाम् । एवं ते चत्वारो विहरंतः प्राप्ताः क्षितिप्रतिष्ठितपत्तने । तत्र च चतुर्मुखदेवकुले प्राच्यां प्रविष्टः करकंडूः, द्विमुखस्तु दक्षिणतस्तदा व्यंतरेण चिंतितं कथमहमेतेषां साधोरनभिमुखतया तिष्ठामीति ततः कृतं वदनं, नमिस्तु पश्चिमतस्तत्रापि कृतं मुखं, नगगतिस्तूत्तरे तत्रापि व्यरच्याननम् । अथ च करकंडूमुनेः शैशवादपि कंडूः समस्ति । तेन कंडूयनकमादाय मसृणं कर्णः कंडूयितः । तच्चैकत्र संगोपितं । तन्निरीक्ष्य द्विमुखः प्राह ‘ यदा राज्यं राष्ट्रं पुरमंतःपुरं च विहाय शिवाय घटसे तदा सर्वस्मिन् परिग्रहे त्यक्ते कोऽर्थः संचयकरणेन ’ एवं द्विमुखेनोक्ते यावत् करकंडूः प्रतिवचनं न वितरति तावन्नमिराह ‘ यदा भवता राज्यं पालयताऽनेके नियोगिनो निर्मितास्तदेव कृत्यकरत्वं कर्तुमुचितं तेषां तु कृत्यं परित्यज्य किमिति भवान् परदोषचिंतको जातः ’ एवं तेनोक्ते नगगतिः प्राह ‘ यदा सर्वं परित्यज्य मोक्षाय

घटसे तदा किं परनिंदा करोषि निजहितं कर्तुकाम' ' एवं तेनोक्ते करकण्डुः प्राह 'मोक्षमार्गप्रयत्नेषु निर्ग्रंथेषु ब्रह्मचारिण्य-हितार्थं वारयत दोषवादीति वक्तुं न युक्तम्। यदार्षं रूसउ वा परो मा वा, विसं वा परिअत्तऊ। भासिअव्वा हिआ भासा, सपक्खगुणकारिआ ॥ १ ॥ ज्वलति दारूणि उपेक्षितानि तु न चिरेणापि ज्वलति घट्टितानि पुनर्झटित्येव ज्वलति तस्मादघट्टना प्रेरणा महनीया।' एवंविधा करकण्डुदत्ता हिता शिक्षा तैः प्रपन्ना। कालेन चत्वारोऽप्यपुनर्भवं प्राप्ताः। एतेषां काष्ठखण्डपरिहारो राज्यपरिहारश्च द्रव्यव्युत्सर्गः, क्रोधादित्यागस्तु भावव्युत्सर्गः २५।

अथाऽप्रमादं कार्यं इत्यत्रोदाहरणं, राजगृहे जरासंधनृपस्य द्वे नर्तक्यौ मगधसुंदरीमगधश्रीनाम्न्यौ। तयोर्मध्यान्म-गधश्रिया दुष्टचित्तया मगधसुंदरीनाटकाह्ने रंगभूमौ कर्णिकारकुसुमेषु सौवर्णिका विषभाविताः केसरमहत्त्वशः शून्य क्षिप्ता-स्तन्मारणाय। ताश्च दक्षतया मगधसुंदरीमहत्तरिकया निज्ञाता। तदनु 'भृंगाः कर्णिकाराणि नाश्रयंति सहकारेषु लीयंते' इति प्रकटमापणे ग्रामीणत्वं भवेत्ततस्तया मंगलगीतावसरे पठितं 'पत्ते वसंतमासे, आमोअपमोयए पवत्तम्मि। मुत्तूण कण्णिआरे, भमरा सेवंति चूअकुसुमाइं ॥ १ ॥' इति महत्तरिकया पठिते मगधसुंदर्या चिंतितमपूर्वा गीतिका। ततो ज्ञातं सदोषाणि कर्णिकाराणीति तानि परिहृतान्यप्रमत्ततया। एवं यतिनाप्यप्रमत्तेन भवितव्यम् २६।

अथ क्षणे यतिमामाचार्यमनुपृच्छेत्यत्र दृष्टांतयोजना तथाहि–भृगुकच्छे कनचिदाचार्येण विजयनामा विनेयः कस्मिंश्चित् प्रयोजने विशालायां प्रहितोऽभूत्। स चांतरा ग्लानादिकार्यव्याक्षिप्तोऽकालजलदवर्षणेन हरितपनकपंकजलसूक्ष्मप्राण्यादि-विराधनाभिया नटपिटकग्रामे नागगृहे ज्येष्ठकल्पं कृतवान्। तत्र च स्थितश्चिंतयामास। यत्र मे गुरुकुलवासस्तं च विना

स्वतंत्रया न श्रीमत्तीर्थंकराज्ञा तदिहापि तं विदधामीति विचिंत्य स्थापनाचार्यं चकार, तत्पुरश्च सकलयतिक्रिया अनुष्ठितवान् किं मे कडं किं वयमित्याद्युपयोगवान् । यथाऽनेन क्षणे क्षणे यतिसामाचार्यामुपयोगः कृतस्तथान्यैर्विधेयः २७ ।

अथ ध्यानं संवरयोगे निदर्शनं तथाहि–शांबवर्द्धनपुरे मुंडविको भूपतिः । स च पुष्पभूतिसूरिभिः श्रमणोपासकश्चक्रे । तेषां च विनेयः पुष्पमित्रो बहुश्रुतः । स चावसन्नोऽन्यत्र ग्रामे वर्त्तते, समीपस्थितास्तु विनेया अगीतार्थाः । अथ च गुरुभिः सूक्ष्मध्यानकर्त्तुकामैः पुष्पमित्रः समाहूतो बहुश्रुतित्वात् तं च द्वारे व्यवस्थाप्यापवरकांतस्तदारब्धं तैः । स च द्वारस्थः कस्याप्यंतःप्रवेशं कर्त्तुं न दत्ते । अन्यदा चैकेनांतेवासिना प्रच्छन्नं श्रीगुरवोऽवलोकिता दृष्टा निश्चेष्टास्तदनु तेन सर्वेषां पुरतः प्रोक्तं मृता इति, नृपः समागात् पुष्पमित्रेण सम्यगुक्तेऽपि न प्रत्ययः कस्यचिदपि चित्ते । एके कथयंति 'सलक्षणेन श्रीगुरुशरीरेणासौ वेतालं साधयन्नस्ति' तदनु नृपेण श्रीगुरुदेहदाहार्थं शिबिका कृता तदा च पुष्पमित्रेण पूर्वसंकेततः स्पृष्टोऽङ्गुष्ठः श्रीगुरुसत्कः तदा च प्रबुद्धाः प्राहुः श्रीसूरयः 'किमिति मे ध्यानव्याघातः कृतः' । तेनोक्त 'मगीतार्थैर्युष्मद्विनेयैरिदृशं व्यसूचि' यादृग् ध्यानं श्रीगुरुभिः कृतम्, एवं तदन्यैरपि विधेयम् २८ ।

अथ मरणांतवेदनोदयेऽपि न क्षुभितव्यमत्रोदाहरणं, रोहीडकपुरे ललिता गोष्ठी । तदर्थं रोहिणीगणिका भक्तं निष्पादयति । अन्यदा च तेन तुंबं संस्कृतम् । तच्च कटुकं विज्ञाय मासक्षपणपारणके धर्मरुचेर्वितीर्णम् । तेन च जीवहिंसाभियालोच्य प्रतिक्रम्य स्वयमेव भक्षितम् । तद्भक्षणसमुत्थां तीव्रवेदनामधिसह्य स सिद्धः । यथाऽनेन मरणांतवेदना सोढा तथाऽपरैरपि सा सहनीया २९ ।

अथ सगपरिज्ञाया दृष्टांतस्तथाहि–चपाया जिनदेवनामा सार्थपति श्रमणोपासकः। स चोद्घोषणापूर्वं ससार्थोऽहिच्छत्रां प्रति चचाल। मार्गे च पाटच्चरैः सार्थे लुंटितेऽरण्य प्रविष्टस्तत्र च पुरतो वह्निभीतिः पृष्टतस्तु व्याघ्रभयम्। उभयतस्तु प्रपातभय स भीतोऽशरण ज्ञात्वा भावलिंग प्रपद्य स्वीकृतसामायिक प्रतिमया स्थित श्वापदैर्भक्षितो गतो निर्वृतिम्। यथानेन सगा ज्ञपरिज्ञया ज्ञाताः प्रत्याख्यानपरिज्ञया च प्रत्याख्यातास्तथा ज्ञेयाः प्रत्याख्येयाश्च ३०।

अथ प्रायश्चित्तकरणे उदाहरण, श्रीघनगुप्तसूरयच्छद्मस्था अपि तथेंगिताकारादिभिश्चेतोऽध्यवसाय विज्ञाय प्रायश्चित्त ददति, यथाऽविचारशुद्धिरधिकतरा निर्जरा च भवेत् ३१।

मरणांताराधने तु मरुदेवीनिदर्शन, यथा तया मरणांते आराधना कृता तथाऽन्यैर्विधेया ३२। इति भाविता योगसंग्रहेषु दृष्टांता॰।

तथा त्रयस्त्रिंशदाशातना वर्जनीयास्तत्रायो लाभः सम्यग्दर्शनाद्यवाप्तिरूपस्तस्य शातनाः खडना आशातनास्ताश्च श्रीगुर्वविनयसभवा इमाः–श्रीगुरोः पुरतो गमने १ तथोभयोः पार्श्वयोर्गमने २ पृष्टतोऽप्यासन्नगमने ३ एव त्रिधा कायोत्सर्गणादिरूपे ऊर्ध्वस्थाने ६ निषदने च ९ तथा गुरो॰ पूर्वमाचमने १० गमनालोचने च ११ निशि विकाले वा श्रीगुरुवचनाऽप्रतिश्रवणे १२ आलाप्यस्य गुरो पूर्वमालापने १३ अशनादः पूर्वं शैक्षस्यालोचन १४ एवमुपदर्शने १५ निमत्रणे १६ श्रीगुरुमनापृच्छय स्वेच्छयाऽन्यस्मै स्निग्धमधुराद्यादिदाने १७ श्रीगुरुणा सार्थं भोजने स्निग्धमधुराद्या स्वादने १८ श्रीगुरौ व्याहरति तद्वचनाऽप्रतिश्रवणे १९ श्रीगुरु प्रति कर्कशोक्तौ २० ग्लानदिवस्य स्थानस्थिततयैवोल्लापवितरणे २१ श्रीगुरोः

किमिति भाषणे २२ त्वमिति भाषणे च २३ तज्ज्ञाते तत्र वचनेन गुरोः प्रतिहनने तत्त्वं साधो ! किं ग्लानस्य परिचर्यां न करोषि तदा प्रतिवक्ति त्वं किं न करोषीत्यादि २४ श्रीगुरौ कथां कथयति तत्र मानसस्याऽनिवेशने २५ श्रीगुरोर्न स्मरसि त्वं सम्यगर्थमिति जल्पने २६ श्रीगुरुकथाच्छादने २७ पर्षदो भेदे २८ अनुत्थितायां पर्षदि श्रीगुरुकथितकथाया एव विशेषतः कथने २९ श्रीगुरुशय्यासंस्तारकादेः पादाभ्यां घट्टने ३० श्रीगुरुशयनासनादौ स्थाने ३१ उच्चासने ३२ समासने च स्थाना दिविधाने आशातना भवेत् ३३ । अथवा त्रयस्त्रिंशदाशातना वक्ष्यमाणस्वरूपा वर्जनीयास्तथाहि, अर्हतामाशातना न सन्त्यर्हत इत्यादिकथनरूपा तदवर्णवादजल्पनरूपा वा परिहार्या १ एवं सिद्धा२चार्यो ३ पाध्याय ४ साधु ५ साध्वी ६ श्रावक ७ श्राविका ८ देव ९ देवीना १०मपि संत्याज्या । तथेहलोकस्य मनुष्यलोकरूपस्याशातना वितथप्ररूपणादिना वर्जनीया ११ । एवं परलोकस्य सुरनिरयतिर्यक्स्वरूपस्य १२ । केवलिप्रज्ञप्तस्य श्रुतचारित्ररूपधर्मस्य १३ । सदेवमनुजासुरस्य लोकस्य च १४ । सर्वप्राणभूतजीवसत्वानां चाशातना वितथप्ररूपणव्यापादनादिना वा त्याज्या । प्राणादिलक्षणत्विदं प्राणा द्वित्रिचतुः प्रोक्ता, भूतास्तु तरवः स्मृताः, । जीवाः पंचेंद्रिया ज्ञेयाः, शेषाः सत्त्वा इतीरिताः ॥१॥ १५ । कालस्य चाशातना कालो नास्तीत्यादिभणनरूपा १६ । श्रुतस्य त्वाशातना प्राकृतभाषानिबद्धोऽयं सिद्धांतः किं केवलिप्रणीत उतान्येन केनचित् विरचित इत्यादिवदनरूपा १७ । श्रुतदेवताशातना तु नास्त्यऽसावकिंचित्करी चेत्यादिभाषणरूपा १८ । वाचनाचार्यस्य त्वाशातना गुरुवत्त्रयस्त्रिंशद्वर्जनीयाः १९ । चतुर्दशसूत्रसंबंधिन्यस्ताश्च व्याविद्धताव्यत्याम्रेडिततादयः, तत्र व्याविद्धं विपर्ययस्तत्सूत्रप्रोतरत्नमालावत् तद्भावस्तत्तथा २० । एवमग्रेऽपि व्यत्याम्रेडितमन्यान्यशास्त्रपल्लवमीलनेन कोलिकपायसवत्

कृत २१ । हीनाक्षरता २२ । अधिकाक्षरता २३ । पदहीनता २४ । विनयहीनता २५ । उदात्तादिघोषहीनता २६ । सम्यगविहितयोगोपचारता २७ । अल्पश्रुतार्हपात्रस्य गुरुणा बहुशास्त्रदान २८ । कलुषितांतरात्मना विनयेन दुष्टुप्रतीच्छितता २९ । अकालस्वाध्यायकरणम् ३० । कालस्वाध्यायाकरणम् ३१ । अस्वाध्यायिके स्वाध्यायकरणम् ३२ । स्वाध्यायिके स्वाध्याया करणम् ३३ । एवमेकनिषासयमादित्रयस्त्रिंशदाशातना पर्यंतानि प्रमादपदानि त्याज्यान्येव सर्वदा सर्वविरतैः ॥

इति श्रीमत्तपगच्छालङ्कारहारभट्टारकपट्टाकोटीरहीर-श्रीसोमजयसूरीश-शिष्यशिरोमणि-श्रीइन्द्रनंदिसूरिराज-विनेयाणु सिद्धांतसारसंकलिते श्रीमद्दर्शनरत्नरत्नाकरग्रंथे श्रीमदनुगमापरपर्याये श्रीऋषभदेशनाभिधानायां तृतीयलहर्यां सर्वविरतिवर्णननामा तुर्यस्तरंगः सम्पूर्णः ॥

